विअ जुअदी अहिअदरं सोहादि भूमी । सिणिद्धेण गन्धेण [1]उद्दीविअन्ती विअ [2]अधिअं बाधेदि मं बुभुक्खा । ता किं [3]पुव्वाविढत्तं णिहाणं [4]उप्पण्णं भवे । आदु अहं [5]ज्जेव्व बुभुक्खादो ओदणमअं जीअलोअं पेक्खामि । णत्थि किल [6]पादरासो अम्हाणं गेहे । [*]पाणच्चअं बाधेदि मं बुभुक्खा । इध सव्वं णवं [7]विअ [8]संविहाणं [9]वट्टदि । [10]एक्का वण्णअं पीसेदि । अवरा [11]सुमणाओ गुम्फेदि । विचिन्त्य । किं [12]ण्णेदं । भोदु [13]कुडुम्बिणिं सद्दाविअ परमत्थं जाणिस्सं । नेपथ्याभिमुखमवलोक्य । अज्जे इदो दाव (१)।

---

कृतविशेषकेव युवती अधिकतरं शोभते भूमी । इति संस्कृतम् । अथ प्राकृतार्थः । आयामी दीर्घः । तण्डुलप्रक्षालनजलप्रवाहो अ(य)त्र तादृशी रथ्या । लोहस्य कटाहो भाजनविशेषः तत्परिवर्तनेन मार्जनेन । कृष्णसारा । कृततिलका युवतीव बहु [वधूरिव?]भूमिरधिकं शोभते । कृष्णसारा भूमिरित्यने[न] चतुर्थाङ्के[वसन्तसेना]भवनकोष्ठकस्य विशेषसूचनम् । सिणिद्ध(द्धेण) गन्धेण स्निग्ध(ग्धेन) गन्धेन । उद्दीविअन्ती विअ उद्दीप्यमानेव । अधिकं बाधते मां बुभुक्षा । तत्किं पूर्वार्जितम् । निधानं बहुस(सं)ख्यं धनम् । उत्पन्नं भवेत् । आदु अथवेत्यर्थः । अहमेव बुभुक्षातोऽन्नमयम् । पाठान्तरे ओदनमयम् । जीवलोकं संसारम् । पश्यामि । नास्ति किल प्रातराशोऽस्माकं गेहे । प्राणाधिकं प्राणेष्वधिकं यथा स्यादेवम् । मं माम् । बुभुक्षा बाधते । इह सर्वं नवमिव संविधानकं वर्तते । एका वर्णकं कस्तूर्यादिकं समालम्भनं पिनष्टि ।

१ उद्दीवअन्ती B; उद्दीवन्ती C E F G J; उद्दीवन्दी D H. २ अहिअं B (a). C J. ३ पुव्वाविडप्पं D H. ४ उववण्णं (= उपपन्नम्) C J. ५ जेव्व A E F; ज्जेव C J; एव्व D. ६ पादरासो वि (=प्रातराशोऽपि) B (a) *पाणाभअं J. ७ विअ m. B (d). ८ संविहलणअं C. J. ९ वट्टइ D H. १० एका D H. ११ सुमणाइं ... I. १२ णेदं B (d) D. १३ कुडुम्बिणीं B (a) D; कुडुम्बिणिं B (d) F

प्रविश्य ।

नटी । अज्ज इअं म्हि ( २ ) ।

सूत्रधारः । अज्जे साअदं दे ( ३ ) ।

नटी । आणवेदु अज्जो को णिओओ अणुचिट्ठीअदु त्ति ( ४ ) ।

सूत्रधारः । अज्जे चिरसंगीदोवासणेण । इत्यादि पठित्वा । अत्थि किं पि अम्हाणं गेहे असिदव्वं ण वेत्ति ( ५ ) ।

नटी । अज्ज सव्वं अत्थि ( ६ ) ।

---

अपरा सुमनसः पुष्पाणि गुम्फति ग्रं(ग्र)थ्नाति । इत्यनेनापि कोष्टकस्यैव सूचनम् । किं ने(णे)दम् । भवतु कुटि(टु)म्बि(म्बि)नीम् । सद्दाविअ शब्दाप्येत्यसंस्कृते । श्रावयित्वेत्यर्थः । परमार्थम् । जाणिस्सं ज्ञास्यामि । आर्ये इतस्तावत् ।

नटी–(२)आर्य इयं ह्मि अस्मि ।

सूत्र°–(३)आर्ये स्वागतं ते ।

नटी–(४)आज्ञापयत्वार्यः को नियोगोनुष्ठीयताम् । त्ति इति ।

सूत्र°–(५)आर्ये चिरसंगीतोपासनेन शुष्कपुष्करनालानीव मे बुभुक्षया म्लानान्यङ्गानीति पठित्वा नद्यै (टद्यै) श्रावयित्वेत्यर्थः । अस्ति किमप्यस्माकं गेहेत्तव्यं न वेति ।

नटी–(६)आर्ये सर्वमस्ति ।

---

१ नटी प्राविश्य अज्जउत्त (= आर्यपुत्र) D F H. २ अज्जउत्तो (= आर्यपुत्रः) DFH. ३ पठाति B (a); पूर्वोक्तं पठित्वा H. ४ कि वि B (bcd) DE. ५ अज्जउत्त (= आर्यपुत्र) DFH.

सूत्रधारः । किं किं अत्थि (७) ।

नटी । तं जधा । गुडोदणं घिअं दहीं तण्डुलाई । अज्जेण अत्तव्वं रसाअणं अत्थि त्ति । एअं ते देवा आसासेन्तु (८) ।

सूत्रधारः । अज्जे किं अम्हाणं गेहे सव्वं अत्थि । आदु परिहससि (९) ।

नटी । स्वगतम् । परिहसिस्सं दाव । प्रकाशम् । अज्ज अत्थि आवणे (१०) ।

सूत्रधारः । सक्रोधम् । आः अणज्जे । एअं ते आसा छिज्जि-

---

सूत्र०–(७) किं किमस्ति ।

नटी–(८)तद्यथा । गुडौदनं घियं दधि तण्डुलाः । आर्येणा-त्तव्यं रसायनं सर्वमस्तीति । एवं ते देवा आशंसन्तु । ईप्सितं पूरय-न्त्वित्यर्थः ।

सूत्र०–(९)आर्ये किमस्माकं गेहे सर्वमस्ति । अथवा परिहससि ।

नटी–(१०)परिहसिष्यामि तावत् । असिदव्वं अन्नरूपं द्रव्यम् । घिअं घृतम् (?) अत्तव्वं रसाअणमिति प्रायेण (?) अत्तव्यं रसायन-मस्तीत्येवं तव देवा आशासन्तामिति संदिग्धवाक्योपन्यासः । आर्य अस्ति आपणे वणिग्वीथ्याम् ।

१ जहा D. २ घिअं om. B (d), पिअं (= प्रियं) AB (e) DFI. ३ अज्जउत्तेण (= आर्यपुत्रेण) DFH. ४ सव्वं अत्थित्ति (= सर्वमस्तीति) AB (?) DEFGH. ५ एव्व दे CJ. ६ आसासेदु AB (bc) CDGJ, आसासेन्द E. differs in अत्थि J. ७ अज्जे om. BCIJ. ८ अज्जउत्त (= आर्यपुत्र) D ९ ... BHI. १० एव्व CJ. ११ द ABCDFJ.

स्सदि। अभावं [1]अे गमिस्ससि। [2]जं दाणिं अहं [3]वेरण्ड[4]लम्बुओ विअ दूरं उक्खिविअ पाडिदो (११)।

नटी। [5]मरिसेदु मरिसेदु [6]अज्जो। [7]परिहासो क्खु मए [8]कदो (१२)।

सूत्रधारः। ता किं उण [9]इमं णवं विअ संविहाणअं [10]वट्टदि। [11]एक्का वण्णअं पीसेदि। [12]अवरा सुमणाओ गुम्फेदि। इअं [13]चे पञ्चवण्ण[14]कुसुमोवहारसोहिदा भूमी (१३)।

---

सूत्र॰—(११) आः अनार्यें। एवं तव आशा छेत्स्यति। अभावं च गमिष्यसि। इअ(?)त्यनेन वसन्तसेनायाः प्रवहणविपर्यासमोट(ट)नयोः सूचनम्। यदिदानीमहं वरण्डलम्बुक इव दूरमुत्क्षिप्य पातितः। वरण्डो दी(दी)र्घकाष्टम्। तस्य लम्बुकस्तत्प्रान्तनिबद्धो मृत्तिकास्थूणः। स हि द्रोण्यां पानीउ(यो)द्धारे दूरमुत्थाप्याधः पात्यते। केचिदाहुः। वरण्ड इष्टकागृहे उन्नतीभूतो दी(दी)र्घो भित्तिप्रदेशः। तत्र लव्बु(म्बु)कोवयवभूत इष्टकासंघः। सोपि हि संयोजनार्थं दूरमुत्थाप्यते अनन्तरं निपतत्यपीति।

नटी—(१२) मृष्यतु मृष्यत्वार्यः। परिहासः खलु मया कृतः।

सूत्र॰—(१३) तत्किं पुनरिदं नवमिव संविधानकं वर्त्त(र्त)ते। एका वर्णकं पिनष्टि। अपरा सुमनसो गुम्फति। इयं च पञ्चवर्णकुसुमोपहारशोभिता भूमी।

---

१ अ om. BEG. २ जो B (d). ३ वरण्डु B (d). ४ लुम्बओ B (a); लण्डुओ B (d). ५ मरिसेदु om. AB (c) DFI. ६ अज्जउत्तो (=आर्यपुत्र) DF. ७ पडिहासो DH. ८ किदो DHJ. ९ इदं B (c) CDFJ. १० वट्टइ D; वट्टदि H. ११ एक्का DH. १२ अण्णा कुसुमाइं (= अन्या कुसुमानि) B (d). १३ अ CDJ. १४ कुसुमोपहार B (bc).

**नटी ।** अज्ज [1]उववासो [2]गहिदो (१४) ।

**सूत्रधारः ।** किंणामधेओ अअं उववासो (१५) ।

**नटी ।** [3]अहिरूअवदी णाम (१६) ।

**सूत्रधारः ।** अज्जे [4]इहलोइओ आदु पारलोइओ (१७) ।

**नटी ।** [5]अज्ज पारलोइओ (१८) ।

**सूत्रधारः ।** सरोषम् । पेक्खन्तु [6]पेक्खन्तु अज्जमिस्सा । [7]ममकेरकेण [8]भत्तपरि[9]व्वएण पारलोइओ भत्ता अण्णेसीअदि (१९) ।

---

नटी–(१४) अद्योपवासो गृहीतः ।

सूत्र०–(१५) किंनामधेयोयमुपवासः । उपवास उपवासरूपं व्रतमित्यर्थः । अधिकरणघञन्तोयम् ।

नटी–(१६) अहिरूअवदी णाम अभिरूपपतिर्नाम ।

सूत्र०–(१७) आर्ये इहलौकिकोथवा पारलौकिकः ।

नटी–(१८) आर्य पारलौकिकः ।

सूत्र०–(१९) प्रेक्षन्तां प्रेक्षन्तामार्यमिश्राः । पारलौकिक इत्यनेन पालकव्युदासेन नायकान्तरलाभसूचनम् । ममकेरकेण मदीयेन । भत्तपरिव्वएण भक्तपरिव्ययेन । ओदनव्ययेनेत्यर्थः । यद्वा । भर्तृपरिव्ययेन भर्तृपरित्यागेनेत्यर्थः । पारलौकिको भर्तान्विष्यते ।

---

१ उवासो B (a), उवआसो B (d). २ गहीदो D गिहीदो F. ३ अहिरूअवदी BCJ; अहिरू-अ-पदी B (d) H. ४ एहलोइओ DFH. ५ अज्जउत्त DFH. ६-पेक्खन्तु om B (abc) I. ७ ममकेरेण DFH. ८ भत्त A B (bc) CDFJ ९ परिच्चयेण B (a); परि-अण्ण B (d).

नटी । अज्ज[1] पसीद[2] पसीद । तुमं ज्जेव्व[3] मम जम्मन्तरेवि भत्ता भविस्ससि त्ति उववसिदम्हि (२०) ।

सूत्रधारः । अध अअं[4] उववासो केण उवदिट्ठो[5] (२१) ।

नटी । अज्जस्स[6] ज्जेव्व[7] पिअवअस्सेण चुण्णवुड्ढेण (२२) ।

सूत्रधारः । सक्रोधम् । आ[8] दासीए उत्ता[9] चुण्णवुड्ढा कदा णु हु[10] तुमं कुविदेण रण्णा पालएण[11] णवबहूकेसकलावं[12] विअ ससुअन्धं कप्पिज्जन्तं[*] पेक्खिस्सं (२३) ।

नटी । पसीददु[13] पसीददु[14] अज्जो[15] । णं अज्जस्स[16] ज्जेव्व[17]

---

नटी–(२०) आर्य प्रसीद प्रसीद। त्वमेव मम जन्मान्तरेपि भर्ता भविष्यसीत्युपोषितास्मि ।

सूत्र°–(२१) अथायमुपवासः केन तवोपदिष्टः ।

नटी–(२२) आर्यस्यैव प्रियवयस्येन चूर्णवृद्धेन ।

सूत्र°–(२३) आः आक्षेपे । दास्याःपू(पु)त्र चूर्णवृद्ध कदा ननु खलु त्वां कुपितेन राज्ञा पालकेन । कप्पिज्जन्तं छेद्यमानम् । प्रेक्षिष्यामि (ष्ये) । नववधूकेशकलापमिव ससुगन्धम् । वज्जन्तमिति पाठे वध्यमानम् । अनेन संहाराङ्कः चारुदत्तनिग्रहसूचनम् ।

---

१ अज्जउत्त DFH. २ पसीद पसीद om. B (d) I. ३ जेव्व AEG; ज्ज व CJ; एव्व DFII. ४ अयं E. ५ उवदिट्ठो F. ६ अज्जउत्तस्स DFH. ७ ज्जेव CJ, जेव्व AFG, एव्व DH. ८ आ om. B (d), आः AB (c) CDEFGIJ. ९ पुत्ता AB (bcd) CDEFG, १० क्खु CJ. ११ पालएण वन्धिज्जन्तं (= पालकेन बध्यमानम्) DH. १२ कलावं AB (bcd) EFI *वज्जन्त° Com. १३ पसीदतु D. १४ पसीददु om ADEFGI. १५ अज्जउत्तो° DFII. १६ अज्जउत्तस्स DFII. १७ ज्जेव DFJ, जेव्व AG, एव्व DFII.

पारलोइओ अअं उववासो अणुचिट्ठीआदि (२४)। इति पादयोः पतति।

सूत्रधारः। अज्जे उट्ठेहि उट्ठेहि। कधेहि कधेहि। इध उववासे केण कज्जं (२५)।

नटी। अम्हारिसजणजोग्गेण बम्हणेण उवणिमन्तिदेण (२६)।

सूत्रधारः। तेण हि गच्छदु अज्जा। अहं पि अम्हारिसजणजोग्गं बम्हणं उवणिमन्तेमि (२७)।

नटी। जं अज्जो आणवेदि (२८)। इति निष्क्रान्ता।

---

नटी–(२४) प्रसीदत्वार्यः। आर्यस्यैव पारलौकिकोयमुपवासो-नुष्ठीयत इति(?)।

सूत्र०–(२५) उट्ठेहि उट्ठेहि उत्तिष्ठोत्तिष्ठ। कधेहि कधेहि कथय कथय। एस्य(त्थ) उववासे अत्रोपवासे। केन कार्यम्।

नटी–(२६) अम्हारिसजणजोग्गेण अस्मादृशजनयोग्येन। ब्राह्मणेन। उवणिमन्तिदेण उपनिमन्त्रितेन।

सूत्र०–(२७) तेन हि गच्छत्वार्या। अहमप्यस्मादृशजनयोग्यं ब्राह्मणमुपनिमन्त्रयामि।

नटी–(२८) यदार्यः। आणवेदि आज्ञापयति।

---

१ परलोइओ H. २ अणुचिट्ठीअदित्ति AB (bc) EFGI; अणुचिट्ठीअदुत्ति B (a). ३ इति om. AB (abc) EFGI. ४ कधेहि om. B (d). ५ इह B (a). ६ इववासके B (d). ७ केणकेण B (ab) E. ८ उवणिमन्तिदेण बम्हणेण D ९ ता गच्छदु B (d). १० अअं J. १० वि DFH. ११ सोग्गं B (d). १२ अज्जउत्तो DFH १३ आणवेदित्ति B (d) G. १४ इति om. E (d) G.

सूत्रधारः । परिक्रम्य । हीमाणहे[1] । ता कधं मए एव्वं सुसमिद्धाए उज्जइणीए[2] अम्हारिसजणजोग्गो बम्हणो अण्णेसिदव्वो । विलोक्य । एसो चारुदत्तस्स मित्तं मित्तेओ इदो[3] ज्जेव्व[4] आअच्छदि । भोदु । पुच्छिस्सं दाव[5] । अज्ज मित्तेअ अम्हाणं गेहे असिदुं अग्गणी[I] भोदु अज्जो (२९) ।

नेपथ्ये ।

भो अण्णं बम्हणं उवणिमन्तेदु भवं[6] । वावडो[8] दाणिं अहं (३०) ।

---

सूत्र०—(२९) ता तस्मात् । कधं कथम् । मए मया । ईदृश्यामुज्जयिन्यां समृद्धायामस्मादृशजनयोग्यो ब्राह्मणोन्वेषितव्यः। कोर्थः। प(य)दा दुःस्थिता भवन्ति ब्राह्मणास्तदा चारणादीनामपि गृहे कुर्वन्ति भोजनम् । एष चारुदत्तस्य मित्रं मैत्रेयः ।इदो जेव्व इत एव । आगच्छति । भवतु । प्रक्ष्यामि तावत् । अद्य मैत्रेय अस्माकं गेहेत्तुम् । अग्गणी अग्रणीः । प्रतिष्ठोग्रगामीति यावत् । भवत्वार्यः । अदिधी भोदु इत्यपि पाठः । तत्रापि अतिथी(थि)भ(र्भ)वत्वित्यर्थः ।

नेपथ्ये । 'नेपथ्यं स्याज्जवनिका' इत्यमरः । ततः कश्चिदाहेति शेषः । संकेतोत्र नाटकादौ । स मैत्रेयनामा विदूषक एव नेपथ्यान्तर्देशादाहेति यावत् ।

(३०) भो अण्ण(ण्णं) अन्यम् । बम्हणं ब्राह्मणम् । उवणिमन्तेदु उपनिमन्त्रयतु भवान् । वावडो व्यापृतः। अहमिदानीं कार्या-

---

१ हिमाणहे GI  २ उज्झइणीए AB (c) F ; ईरिसाए उज्जइणीए (= ईदृश्यामुज्जयिन्याम) DH  ३ इधो CJ.  ४ जेव्व AFG , ज्जेव CEJ , एव्व DH.  ५ पूणं दाव उवणिमन्तिस्सं (= इमं तावदुपनिमन्त्रयिष्ये) B (d).  I आदिधी Com.  ६ भवं (= भवान्) B (a)  ७ बह्मण om. B (d)  ८ वावडा B (c); वावावडो B (d).

सूत्रधारः। अज्ज संपण्णं भोअणं णीसेवत्तं चे। अवि अ दक्खिणा का वि दे भविस्सदि (३१)।

पुनर्नेपथ्ये।

भो जंधा दाणिं पंढुमं ज्जेंव्व पच्चादिट्ठोसि। ता को दाणिं दे णिव्वन्धो पंदे पदे मं अनुसंधिदुं (३२)।

सूत्रधारः। पच्चादिट्ठोह्मि एदिणा। भोदु। अण्णं बम्हणं उवणिमन्तेमि (३३)। इति निष्क्रान्तः।

आमुखम्

न्तरव्यासक्तः। दाणि इदानीम्।

सूत्र०—(३१) अद्य स(सं)पन्नं मृष्टम्। णिसवत्तं च। पितृणां समुत्सृष्ट(ष्टं) घृतादिसहिततण्डुलपूर्णपात्रम्। निःस्राव इति यस्य प्रसिद्धिः। णीसवत्तं निःसपत्नम्। विपक्षस्यापरस्याभावादिति केचित्। अपि च दक्षिणा कापि ते भविष्यति। एकोऽपिः संभावनाया-मपरः समुच्चये।

पुनर्नेपथ्य इति स मैत्रेय एव सूत्रधारवूवां(वा)क्यस्योत्तरमाहेत्यर्थः।

(३२) भो जं दाणिं पच्चादिट्ठोसि। भो यदिदानीं प्रत्यादिष्टोसि। ता को दाणिं तत्क इदानीम्। ते। णिब्बन्धो निर्बन्धः। मं मो(माम्)। पदे पदे अणुसंधिदुं अनुसंहितुम्(?) अनुरोद्धुम्।

सूत्र०—(३३) पच्चादिट्ठोह्मि प्रत्यादिष्टोस्मि। एदिणा अनेन। भोदु भवतु। अण्णं अन्यम्। ब्राह्मणम्। उवणिमन्तेमि उपनिमन्त्रयामि।

---

१ ओअणं (= ओदनम्) D. २ णीसवणं (= निःश्रावकम्) B (d); नीसवन्तं CJ. ३ अ- CJ. ४ जं(= यत्) AB (be) CDEFGJ; जदा (= यदा) B (d). ५ पटम AB(c) FHI, पठमं B (d), पडमं G; पढमं CDEJ. ६ जेव्व AEI; ज्जेव CHJ, एव्व DH. ७ मं पदे पदे B (d); ममोपदेसं अणुसंधिदुं AB (c) FI, ममोपदेसं अणुमन्धिदु DH. ८ निष्क्रान्ते B (a), निष्क्रान्ता., B (d).

[1]प्रविश्य [2]प्रावारहस्तः [3]।

मैत्रेयः । [4]अण्णं बम्हणं । [5]इति पूर्वोक्तं पठित्वा । अधवा मए[6] वि[7] मित्तेएण[8] परस्स आमन्तणआइं[9] भक्खिदव्वाइं । हा अवत्थे तुलीअसि । जो दाणिं अहं तत्थभवदो[10] चारुदत्तस्स रिद्धीए[11] अहोरत्त[12]पअत्त[13]सिद्धेहिं उग्गारसुरहिगन्धेहिं मोदएहिं* ज्जेव्व[14] आसिदो[15] अब्भन्तरचदुस्साल[16]अदुआरए[17] उवविट्ठो मल्लक[18]सदपरिवुदो[19] चित्तअरो विअ अङ्गुलीहिं[20] [21]छिविअ [22]छिविअ [23]अवणेमि । णअरचत्तरवुसहो विअ रोमन्थाअमाणो चिट्ठामि । सो दाणिं अहं तस्स दलिद्ददाए जहिं[24] तहिं चरिअ गेहपारावदो विअ आवासणिमित्तं इध आअच्छामि । एसो[25] अज्जचारुदत्तस्स पिअवअस्सेण चुण्णवुड्ढेण[26] जादीकुसुमवा-

---

प्रस्तावनेत्यामुखसंधिपर्यायः। यदुक्तम्—'सूत्रधारेण सहिताः संलापं यत्र कुर्वते । नटी विदूषको वापि पारिपार्श्वे(र्श्वि)क एव वा ।। आमुखं नाम तस्यैव सैव प्रस्तावना मता ।।' इति । प्रावारः प्रच्छदपटः

---

१ तत. प्रविशति DH. २ प्रावरक B (d). ३ After हस्तो DH. add मैत्रेय. ४ भो अण्णं D. ५ डबाणिमन्तेदु भवं। वावडो दाणिं अह D ६. मये B (ab). ७ वि om. AB (cd) CDFGHIJ. ८ मैत्तेयेण B (a). ९ आमन्तणाइं B (a); आमन्तणकाइं B (d) HI. १० तत्तभोदो DJ. ११ कडीए B (ad). १२ अहोरत्तं AB (c) CDFIJ. १३ परेत्त AB (c) EFI; पअत्त B (a); पअन्त B (d) DH, पेत्त B (b); पेरन्त CJ. *मोदकेहिं J. १४ जेव्व ACFGI; एव्व DH; ज्जेव J. १५ आसिदो B (a) CJ. १६ चतुस्साल B (a) D. १७. दुआरके B (d); दुआए CJ. १८ गलक्क B (a); मलक्क B (b) EG. १९ सदावि परिवुदो B (d); पहिव्वुदो B (a). २० अग्गङ्गुलीहिं B (d) २१ बिबिअ बिबिअ B (a). २२ छिविअ om. AB (c) FGI. २३ For गल्लक्क—अवणेमि DH read॰ उणो उणो चेडजणदिण्णं सव्वोवक्करजुत्तं णिज्जिदसुवण्णवण्णाणेअपत्तघाडिदं तम्बोलं चव्विज्जन्तो (पुन· पुनश्चटजनदत्तं सर्वोपस्करयुक्तं निर्जितसुवर्णवर्णानेकपत्रघटितं ताम्बूलं चर्वयन्). २४ तहिं तहिं B (d). २५ ऐसा अ B (ab) CEGJ. २६ जुण्णवुड्ढेण B (ab) EG.

सिदो पावारओ अणुप्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स उवणेदव्वो त्ति। ता जाव अज्जचारुदत्तं पेक्खामि। परिक्रम्यावलोक्य च। एसो अज्जचारुदत्तो सिद्धीकिददेवकज्जो गिहदेवदाणं बलिं करेन्तो इदो ज्जेव्व आअच्छदि (३४)।

---

मैत्रेयः—(३४) अथवा मयापि मैत्रेयेन(ण) परस्य। आमन्तणाइं आमन्त्रणानि। प(पे)क्खिदव्वाइं प्रेक्षितव्यानीत्यर्थः। समीहितव्यानीत्यर्थः। भक्खिदव्वाइं इति पाठे भक्षितव्यानीत्यर्थः। हा अवस्थे तुलयसि। य इदानीमहं तत्रभवतश्चारुदत्तस्य ऋद्ध्याहोरात्रं प्रयत्नसिद्धैरुद्गारसुरभिगन्धिभिर्मोदकैरे(रे)वाशितो भोजितः। गल्लकशतपरिवृतः। गल्लकः पात्रविशेषः। पत्रपुटो वा। दौना इति प्रसिद्धः। इति विदूषकपक्षे। चित्रकरपक्षे वर्णिकापात्रं गल्लकः। अभ्यन्तरचतुःशालद्वार उपविष्टश्चित्रकर इवाङ्गु(ङ्गु)लीभिः। छिविअ छिविअ स्पृष्ट्वा स्पृष्ट्वा। अपनयामि न भक्षयामि। अत्यन्तं तृप्तत्वादित्यर्थः। चित्रकरोप्यङ्गुलीसंस्थितलेखनिकया वर्णिकाभाण्डं स्पृष्ट्वापनयति विक्षिपति। अन्यथा वर्णिकाविदु(बिन्दु)पातः स्यादिति। नगरचत्वरवृषभ इव रोमन्थायमानस्तिष्ठामि। स दार्णि इदानीम्। अहं तस्य दलिद्दाए दरिद्रतया। यत्र कुत्रापि चरित्वा गेहपारावत इवावासनिमित्तं शयनार्थमत्रागच्छामि। एसो एषः। चूर्णवृद्धेन जातीकुसुमवासितोनुप्रेषितः प्रावारकः। सिद्धीकिददेवकज्जस्स सिद्धीकृतदेवकार्यस्य। आर्यचारुदत्तस्योपनेतव्य इति। तद्यावदार्यचारुदत्तं पश्यामि। एष चारुदत्तः सिद्धीकृतदेवकार्यो गृहदेवतानां बलिं कुर्वन्नित एवागच्छति। बलिं पूजाम्।

---

१ पावरओ B (d). २ चारुदत्तो AB (ed) CDEFGIJ. ३ इदो इदो B (a). ४ जेव्व ACDFG, ज्जेव J.

ततः प्रविशति यथानिर्दिष्टश्चारुदत्तो रदनिका च[1] ।

**चारुदत्तः** । ऊर्ध्वमवलोक्य सनिर्वेदं निःश्वस्य च ।

यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव संप्रति विरूढतृणाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥ ९ ॥

इति[2] मन्दं[3] मन्दं[4] परिक्रम्योपविष्टः ।

**विदूषकः** । एसो अज्जचारुदत्तो । ता जाव संपदं उवसप्पामि[5] । उपसृत्य । सोत्थि भवदे[6] । वड्ढदु[7] भवं (३९) ।

**चारुदत्तः** । अये सर्वकालमित्रं[8] मैत्रेयः प्राप्तः । सखे स्वागतम् । आस्यताम् ।

**विदूषकः** । जं भवं आणवेदि । उपविश्य । भो वअस्स । एसो दे पिअवअस्सेण[9] चुण्णवुड्ढेण जादीकुसुमवासिदो पावारओ[10]

---

चारु०–[यासामिति।] कीटमुखखादितो बीजाञ्जलिः पतति । विरूढा उपचितास्तृणाङ्कुरा यासु ॥९॥

विदूषकः । 'हास्यकारी विदूषकः' इति तल्लक्षणात् । अत्रायं मैत्रेय एव विदूषक इति ध्येयम् । आहेत्यध्याहारः सर्वत्र ।

विदू०–(३९)एष आर्यचारुदत्तः । तद्यावत्सांप्रतमुपसर्पामि । स्वस्ति भवते । वर्धतां भवान् ।

---

१ च om. AB (bcd) CDFG. २ इति om. AB (bcd) DEFGI. ३ ०मन्दं om. AB (bcd) DEFGI. ४ मन्दं om. B (d). ५ पविसामि (= प्रावेशास्मि) B (a) ६ भोदे AB (bc) DFGI. ७ वड्ढदु ACDFI. ८ सार्वकाल B (a). ९ पिअ om. C.J. १० पावरओ B (d).

अणुप्पेसिदो । सिद्धीकिददेवकज्जस्स अॆज्जचारुदत्तस्स तुए उवणेदव्वो त्ति (३६) । समर्पयति ।

चारुदत्तः । गृहीत्वा सचिन्तः स्थितः ।

विदूषकः । इदं किं चिन्तीअदि (३७) ।

चारुदत्तः । वयस्य ।

सुखं हि दुःखान्यनुभूय शोभते
घनान्धकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति नरो दरिद्रतां
धृतः शरीरेण मृतः स जीवति ॥ १० ॥

विदूषकः । भो वअस्स । मरणादो दालिद्दादो वा कदरं दे रोअदि (३८) ।

विदू०–(३६)यज्ञवानाज्ञापयति। भो वयस्य। एष ते प्रियं(य)-वयस्येन चूर्णवृद्धेन जातीकुसुमवासितः प्रावारकोनुप्रेषितः । सिद्धीकृतदेवकार्यस्यार्यचारुदत्तस्य त्वयोपनेतव्य इति ।

विदू०–(३७)भोः किमिदं चिन्त्यते ।

चारु०–[सुखमित्यादि ।] दुःखान्यनुभूय सुखं शोभते । न तु सुखमनुभूय दुःखमिति तात्पर्यम् । स मृत एव जीवति । शरीरेण धृतः शरीरवेष्टितः । चर्मभस्त्रावदित्यर्थः ॥ १० ॥

विदू०–(३८)भो वयस्य । मरणादो मरणात् । दालिद्दादो दारिद्र्या(द्र्या)त् कदरं कतरत् रोचते ।

०१ अज्जस्स चारुदत्तस्स G. २ मृतः शरीरेण धृतः B (a). ३ मरणादो वा. H. ४ दालिद्दादो B (a); दारिद्ददादो B (b), दारिदादो EG. ५ कदर AB (c) I. ६ दे om. A (c) DFI.

चारुदत्तः । वयस्य ।

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ११ ॥

विदूषकः । भो वअस्स अलं संतप्पिदेण[1] । पणइजणसंका[2][3]मिदविहवस्स[4] सुरअणपीदसेसस्स विअ पडिवाचन्दस्स[5] परिक्खओ वि दे अहिअदरं[6] रमणीओ (३९) ।

चारुदत्तः । वयस्य । न ममार्थान्प्रति दैन्यम् । पश्य ।

एतत्तु मां दहति यद्गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयन्ति ।
संशुष्कसान्द्रमदलेखमिव भ्रमन्तः
कालात्यये मधुकराः करिणः कपोलम् ॥ १२ ॥

---

चारु°–[दारिद्र्यादिति।]अल्पसमयदुःखदत्वान्मरणमल्पक्लेशम्। बहुसमयव्यापित्वादाकाङ्क्षितापगमाद्दारिद्र्यमनन्तकं दुःखम् ॥११॥

विदू°–(३९) विसंतपितेन (?) । प्रणयिजनसंका(क्रा)मितविभवस्य सुरजनपीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोपि तेधिकतरं रमणीयः। प्रणयी जनः स्निग्धबान्धवोर्थी च(वा) । आपद्व्यसनव्ययेनार्थाः स्वदोषेण नाश्यन्ते तदा संतापः क्रियते । तव तु न तथेति भावः।

चारु°–[एतदिति।] क्षीणार्थमिति कृत्वास्मद्गृहमतिथयः संत्यजन्ति । एतन्मां दहति कालात्यये मदसमयापगमे धनलाभसमयापगमे वा(च) ॥१२॥

---

१ संदप्पिदेण AI , संदाविदेण D. २ पणयिजण D , पणइअण CJ. ३ संक्कामिदं AB (c) I. ४ विभवस्स B (d). ५ पाडिवचन्दस्स AB (c) FI ; पाडिवच्चन्दस्स CJ; पडिआचन्दस्स D; पडिवआचन्दस्स H. ६ अहिअदरं om. B (b) EG; अपिअदरं B (d), अहीअदरं H.

विदूषकः । भो वअस्स । एदे क्खु दासीए [1]उत्ता अत्थकल्लवत्ता [2]वेरडाभीदा विअ [3]गोवालदारआ जहिं जहिं ण खज्जन्ति तहिं तहिं गच्छन्ति (४०) ।

चारुदत्तः । वयस्य ।

सत्यं न मे विभवनाशकृतास्ति चिन्ता
भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।
एतत्तु मां दहति नष्टधनाश्रयस्य
यत्सौहृदादपि जनाः शिथिलीभवन्ति ॥ १३ ॥

अपि च ।

दारिद्र्याद्ध्रियमेति [4]तत्परिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोक[5]विहतो बुद्ध्या [6]परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥१४॥

---

विदू०—(४०)एदे खु एते खलु । दासी(स्याः)पुत्राः । अर्थरूपप्रातराशाः(शाः) । वरटाभीता वीरणी इति ख्याता ततस्त्रस्ता-(स्ताः) । अरण्ये गोपालदारका इव यत्र यत्र न खादन्ति उपभुञ्जते तत्र [तत्र] गच्छन्ति ।

चारु०—[सत्यमिति।]विभवनाशकृता मम चिन्ता नास्ति । कथमित्यत आह । भाग्यक्रमेण धनानि भवन्ति । तर्हि चिन्ता कुत इत्यत आह । एततु(त्तु) मां दहति । यन्नष्टधनाश्रयस्य मम सौहृ-

---

१ पुत्ता AB (bcd) CDEFGHIJ. २ वरटा E; वरडी ( = वरटी ) DFH. ३ गोवालदारआ अरण्णे, AB (bc) CDEFGHIJ; अरण्णे गोवालदारआ B (d). ४ ह्रीपरिगतः AB (bcd) CDEFGIJ. ५ पिहितो AB (c) CDEFGIJ; पिहितो B (b); विहितो B (d). ६ परिभ्रश्यते.

विदूषकः । भो वअस्स । तं ज्जेव्व[1] अत्थकल्लवत्तं सुमरिअ[2] अलं संतप्पिदेण[3] (४१) ।

चारुदत्तः । वयस्य । दारिद्र्यं हि पुरुषस्य[4]

निवासश्चिन्तायाः परपरिभवो वैरमपरं
जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् ।
वनं[5] गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो
हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥१९॥

---

द्वादपि मैत्रीतोपि जनाः शिथिलीभवन्ति । अर्थशून्येन समं प्रयोजनाभावान्मैत्रीमपि न केपि कुर्वते ॥ १३ ॥

[दारिद्र्यादिति ।] लज्जां गच्छति । आकाङ्क्षितासामर्थ्यात् । यदा लज्जा गता तदा तेजसः प्रभ्रष्टो भवति । यावत्तावत्करणात्तेजःशून्यः परिभूयते भयाभावात् । परिभवान्निर्वेदं गच्छति । मानम्लानेः । ततः शुचमेति । वृथा जीवनमिति । तत(तः) परित्यज्यते बुद्ध्या । निर्बुद्धिः क्षयं गच्छति । तदुक्तम्—'बुद्धिनाशात्प्रणश्यति' इति । अत एव सर्वासामापदां स्थानमित्युपसंहरति ॥ १४ ॥

विदू°—(४१) भो वयस्य । तमेवार्थकल्यवर्तं स्मृत्वालं संतपितेन(?)। अर्थस्वरूपः कल्यवर्तः प्रातराशः । एतद्रूपत्वे चार्थस्य (?) द्रूपद्रव्यत्वाज्जनान्तरानवगाहितत्वाच्च तद्विस्मृत्य धर्मचिन्ताः साधवो भवन्तीत्याशयः ।

चारु°—[निवास इति ।] चिन्ता[या] निवासः । कथं मम निर्वाहः स्यादित्येवंरूपायाः (चिन्तायाः) परस्य परिभव इति षष्ठीस-

---

१ जेव्व AEFG; ज्जेव CJ; एव्व DH. २ सुमरिअ सुमरिअ B. (a). ३ संतप्पिदेण ACI; संतापिदेण D, संदापिदेण H. ४ पुरुषस्य AB (c) I. ५ क्षयं DF (in a marginal note) H.

तद्वयस्य । कृतो मया गृहदेवताभ्यो बलिः । त्वमपि गच्छ चतुष्पथे मातृभ्यो बलिमुपहर ।

विदूषकः । ण गमिस्सं (४२) ।

चारुदत्तः । किमर्थम् ।

विदूषकः । जदो एव्वं पूइज्जन्ता देवेदा ण पसीदन्ति ता को गुणो देवेसु अच्चिदेसु (४३) ।

चारुदत्तः । वयस्य मा मैवम् । गृहस्थस्य नित्योयं विधिः ।

तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः ।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ॥ १६ ॥

मासः कर्मधारयो वा । एतच्चाविश्वसनीयतया निर्धनानां ज्ञेयम् । जुगुप्सा मित्राणामिति ♦ प्रत्युपकारासमर्थत्वात् । स्वजनानां बन्धूनां जनानामन्येषामुदासीनानाम् । विद्वेषस्य करणं कृतिः । कर्तरि करणे वा ल्युट् । भवति । चेति चकारो हेतौ । वनगमने कलत्रपरिभवो हेतुः ॥ १५ ॥

विदू°—(४२) न गमिष्यामि ।

विदू°—(४३) यत एवं पूज्यमाना अपि देवा न ते प्रसीदन्ती(न्ति) तत्को गुणोऽर्चितेषु देवेषु ।

चारु°—नित्योयं विधिः । अकरणे प्रत्यवायात् । [नपसेनि ।] तुष्यन्ति परलोकमुत्कृष्टं प्रयच्छन्ति । यतः आढ्यकृदतिथिप्रियो गृहस्थोपि मुच्यत इति भावः ॥ १६ ॥

१ गच्छ त्वमपि AB (bcd) CDEFGIJ. २ पूइज्जन्ता वि CJ. ३ देवदा om. AB (bc) DEFGI. ४ ण दे AB (bc) CDEFGIJ. ५ पसादं देन्ति (= प्रसाद ददाति) B (d); पसीदेन्ति EG. ६ देवेसुं अच्चिदेसुं AB (c) CDFIJ. ० ♦ गृहस्थितस्य ? B (d). ८ वापि B (a). ९ दवता नित्यं शमितां B (d).

तद्गच्छ । मातृभ्यो बलिमुपहर ।

**विदूषकः।** भो ण गमिस्सं । अण्णो कोवि पेउञ्जीअदु[1] । मम उण बम्हणस्स सव्वं ज्जेव्व[2] विपरीदं परिणमदि । आदंसगदा विअ छाआ वामादो[3] दक्खिणा दक्खिणादो[4] वामा । अण्णं च[5] एदाए पदोसवेलाए इध राअमग्गे गणिआ विडा चेडा राअवल्लहा[6] अ पुरिसा संचरन्ति[7] । ता मण्डूअलुद्धस्स[8] विअ कालसप्पस्स मूसिओ[9] विअ अहिमुहावत्थिदो[10] वज्झो दाणिं भविस्सं । तुमं इध उववि्ट्ठो किं करिस्ससि (४४) ।

**चारुदत्तः।** भवतु । तिष्ठ तावत् । अहं समाधिं निर्वर्तयामि[11]।

---

विदू०—(४४)भो न गमिष्यामि ।अन्यः कोपि प्रयुज्यताम् । मम पुनर्ब्राह्मणस्य सर्वमेव विपरीतं परिणमति । आदर्शगतेव छाया वामतो दक्षिणा दक्षिणतो वामा । अ(आ)दर्शस्य प्रतिबिम्बे वामो भागो दक्षिणे दृश्यते । दक्षिणश्च वामे इति वस्तुगतिः । अन्यच्च एतस्यां प्रदोषवेलायामिह राजमार्गे गणिका विटाश्चेटा राजवल्लभाश्च पुरुषाः संचरन्ति । अ(?)एतेन विटादीनां प्रवेशं सूचयति । 'नासूचितस्य प्रवेशः' इति । अत एवाग्रे विटशकारचेटवसन्तसेनानां प्रवेशः । राजवल्लभा इत्यनेन शकारस्य प्रवेशः सूचितः ।अन्येषां प्रवेशसूचनं स्पष्टतममेवेति ध्येयम् । तन्मण्डूकलुब्धस्येव कालसर्पस्य मूषक इवाहि(भि)मुखापतितो वध्य इदानीं भविष्यामि । त्वमिहोपविष्टः किं करिष्यति(सि) ।

---

१ पउञ्जिअदु DH; पउञ्जीअदु FGI. २ जेव्व AFG; ज्जेव CJ; एव्व DF. ३ वामदो B (d). ४ दक्खिणदो ? B (d). ५ अ CDJ. ६ राजवल्लहा B (a). ७ संचरन्दि DH. ८ मण्डूक AF. ९ मूषिओ CJ, मूसओ B (d). १० वत्तिदो वज्झो AB (cd) DEFGI; वलिदो वज्जो B (b), वदिदो कज्झो CJ. ११ निवर्तयामि B (c) DFI.

नेपथ्ये ।

तिष्ठ[1] वसन्तसेने । तिष्ठ[2] ।

ततः प्रविशति विटशकारचेटैरनुगम्यमाना वसन्तसेना ।

विटः । वसन्तसेने । तिष्ठ तिष्ठ ।

किं त्वं भयेन परिवर्तितसौकुमार्या
नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती ।
उद्विग्नचञ्चलकटाक्षविसृष्टदृष्टि-
र्व्याधानुसारचकिता हरिणीव यासि ॥ १७ ॥

शकारः । [3]चिश्ट [4]वशन्तशेणिए । [5]चिश्ट (४५) ।

किं [6]याशि धावशि पलाअशि पक्खलन्ती
वाशू पशीद ण [7]मलीहिशि [8]चिश्ट दाव ।
कामेण [9]ढज्जदि हु मे [10]हलके [11]तवश्शी
अङ्गाललाशिपडिदे विअ मंशखण्डे(४६)॥१८॥

---

विटः—[किं त्वमिति ।] विष(श)दौ संचरणलाघवगुणान्वितौ । पटू इति यावत् । उद्विग्नं चञ्चलकटाक्षरूपेण विसृष्टा दृष्टिर्यया सा तथा । अनुसारोनुगमनम् । व्याधेन यदनुगमं(म)नं तेन त्रस्ता मृगीव ॥ १७ ॥

शका°—(४५) चिश्ट तिष्ठ ।

(४६) [किं याशीत्यादि ।] वसन्ततिलकच्छन्दसा श्लोकः । 'किं यासि धावसि पलायसे प्रस्खलन्ती वासु प्रसीद न मरिष्यसि

---

१ तिष्ठ वसन्तसेने २ B (a). २ तिष्ठ तिष्ठ AB (c) DFI. ३ चिट्ठ AB (c) DFGI; ण्चिष्ट B (a); चिष्ट B (b); चिष्ट B (d); चिष्ठ CJ; चिश्ट E. ४ वसन्तशेणिए AB (abcd) EF, वसन्तसेणिश G. ५ चिट्ठ AB (c) DFGI; चिट्ठ B (a); श्चि B (b); चिष्ट B (d), चिष्ठ CJ; चिश्ट E. ६ आशि G. ७ मलीहशि (= म्रियसे) B (a). ८ चिट्ठ AB (c) DFGI; चिष्ठ B (ab); चिष्ठ B (d) CJ; चिश्ट E. ९ उज्झदि हु मे B (a); ढज्जइ हु मे DH; दज्जदि J. ढप्फुहदि मे E. १० हडके B (a). ११ तवश्शि DH.

चेटः । अॅज्जुए । चिॅस्ट चिस्ट (४७) ।

उत्ताशिता गॅच्छशि अन्तिका मे
शंपुण्णपुच्छा विअ गिह्ममोॅरी ।
ओॅवग्गदी शामिअभॅस्टके मे
वॅणे गडे कुॅकुरशावके व्व (४८) ॥ १९ ॥

विटः । वॅसन्तसेने तिष्ठ तिष्ठ ।

किं यासि बालकदलीव विकम्पमाना
रक्तांशुकं पवनलोलदशं वहन्ती ।

---

तिष्ठ तावत् । कामेन दह्यते खलु मे हृदयं वराकः(कं) अङ्गारराशिपतितमिव मांसखण्डम्'इति संस्कृतम् । अस्यार्थः । प्रस्खलन्ती । प्रस्खलनं निम्नोन्नतादौ गतिविघटनम् । 'बाला स्याद्बालूः' इत्यमरः । हलके हृदयम् । तवश्शी वराकः(कम्) । अङ्गारराशिपतितं मांसखण्डमिव कामेन दह्यत इति योजना ॥ १८ ॥

चेटः—(४७) आर्यके गणिके ।

(४८) [उत्ताशितेत्यादि ।] उपजातिच्छन्दसा श्लोकः । उत्त्रासिता गच्छस्यन्तिकान्मम । यद्वा अन्तिका ज्येष्ठा मे भगिनी ।'अन्तिका भगिनी ज्येष्ठा' इत्यमरः । संपूर्णपुच्छेव ग्रीष्ममयूरी । ओवग्गदी अपवल्गति । ससंभ्रममागच्छतीत्यर्थः । शामिअभट्टके भट्टारकः । वेन गतः कुकुरशावक इव । गडे इति प्रथमान्तस्यैकारान्तत्वम् । 'गतमृतकृतानां डः' इति डः ॥ १९ ॥

विटः—[किं यासीति।]'टङ्कः पाषाणदारणः' इत्यमरः। विदारण-

---

१ अज्जए AB (c) CFIJ; अज्जुए om. DH. २ चिट्ठ चिट्ठ AB (abc) CDFGIJ; चिष्ट B (d); चिष्टा चिष्ट E. ३ गच्छासि अत्तिका B (a). ४ मोरि B(d). ५ ओअग्गदी॰ D. ६ भष्ठके AB (bcd); भट्टके B (a) CDFHJ; भष्टके EGI. ७ वण्णे AB (c) CJ. ८ कुक्कुड G. ९ वसन्तसेने २ B (a).

रक्तोत्पलप्रकरकु[1]ड्मलमुत्सृजन्ती
टङ्कैर्मनःशिलगु[2]हेव विदार्यमाणा ॥ २० ॥

शकारः। [3]चिश्ट [4]वशन्तशेणिए । [5]चिश्ट (४९)।

मम मअणमणङ्गं [6]वम्महं [7]वड्ढअन्ती
णिशि अ [8]शअणके मे णि[9]द्दअं [10]पक्खिवन्ती ।
पशलशि भअभीदा पक्खलन्ती खलन्ती
मम वशमणुजादा [11]लावणश्शेवे[12] कुन्ती (५०)॥२१॥

क्षणे हि निर्मला निः(?)प्रसरतीति । कुड्मलं कलिका । मनःशिलगुहेति । महाभारते मनःशिलशब्दोपि दृश्यत इति तथा प्रयुक्तः । 'मनःशिला तु कुनटी' इत्यमरः ॥ २० ॥

शका०—(४९)—तिष्ठ वसन्तसेने तिष्ठ

(५०) [मम मदनेत्यादि ।] मालिनीच्छन्दसा श्लोकः । मम मदनमनङ्गं मन्मथं वर्धयन्ती निशि च शयनके मे निद्रां प्रक्षिपन्ती । प्रसरसि प्रगच्छसि । प्रस्वरसि दात्यूहत्वद्विरौषीति केचित् । भयभीता प्रस्खलन्ती स्खलन्ती मम वशमनुयाता रावणस्येव कुन्ती ॥ भयभीतेति भयशब्दोयमपार्थकः । मदनमनङ्गमित्यादि पुनरुक्तम् । रावणस्येव कुन्तीति हतोपमम् । तथा चोक्तम्—'आगमलिङ्गविहीनं देशकला(?) न्यायविपरीतम् । व्यर्थैकार्थमपार्थं भवति हि वचनं शकारस्य ॥' इति ॥ २१ ॥

---

१ कुण्डलम् DF. २ गुहेन H. ३ चिट्ठ AB (c) DFGI; चिष्ट २ B (a); चिष्ट B (b) CJ; द्विष्ट E. ४ वसन्तशेणिए AB (ab) EF; वसन्तसेणिए G. ५ चिट्ठ AB (c) DFGI; चिश्ट om. B (a); चिष्ठ B (b) CJ; द्विष्ट E. ६ वम्महणं AB (c) FGI; मम्महं B (a) J; वंम्हणं B (b) E; वम्हंणं B (d); वम्महं H. ७ वड्ढअन्ती AB (abc) FGI; वड्डअन्ती B (d). ८ शयणके AB (bc) EFI; शअणए DH. ९ णिद्दिअं (= निद्रा) B (d). १० पक्खिवन्दी DH. ११ रावण B (a). १२ व्व. B (ab) H.

विटः । वसन्तसेने ।

किं त्वं पदैर्मम पदानि विशेषयन्ती
व्यालीव यासि पतगेन्द्रभयाभिभूता ।
वेगादहं [1]प्रविसृतः पवनं [2]निरुन्ध्यां
त्वन्निग्रहे तु वरगात्रि न मे प्रयत्नः ॥ २२ ॥

शकारः । भावे भावे ।

एशा [3]णाणक[4]मूशिका[5]मकशिका मच्छाशिका [6]लाशिका
[7]णिण्णाशा [8]कुलणाशिका [9]अवशिका कामाह[10]मञ्जूशिका ।
एशा वेशवहू शुवेशणिलआ वेशङ्गणा वेशिआ
एशे शे दश[11]णामके [12]मयि कले अज्जावि मं णेच्छदि (९१) ॥ २३ ॥

---

विटः–[किं त्वमिति । ] विशेषयन्ती अतिशयाना । व्याली सर्पी । प्रविसृतः प्रचलितः । वातं न निरुणध्मि अपि तु रुणध्म्येव । नकार काकौ (?) ॥ २२ ॥

शका°–'भावो विद्वान्' इत्यमरः ।

(९१) [एशा णाणकेत्यादि ।] शार्दूलविक्रीडितच्छन्दसा श्लोकः । एषा । णाणं शिवाङ्कं टङ्कादि वित्तम् । तस्य मोषणशीलः कामो यस्य तस्य कशिका चर्मकाष्ठिका । चौराणां किंचित्तथा चोपकरणं (?) भवति । तदत्र कशोक्ता। कशा चाश्वताडनी क(च)र्मसडिकोच्यते। मच्छाशिका मत्स्यमच्छिका मत्स्यशुष्कमांसमित्येके । लाशिका नर्तकी । णिण्णाशा

---

१ प्रविसृतः B (a) H. २ निरुध्या B (d). ३ नाणक E. ४ मूशिआ DH. ५ मकशिआ DH. ६ लासिका AB (abc). ७ णीणाशा CFJ; णिण्णणाशा (= निम्ननासा) DH. ८ कुलणाशिआ DH. ९ अवशिआ DH. १० मञ्जूषिका B (a), मञ्जुशिआ D. ११ नामके H. १२ मए DH.

विटः । प्रसरसि भयविक्लवा किमर्थं
प्रचलितकुण्डलगण्डघृष्टपार्श्वा ।
वि[1]टजननखघट्टितेव वीणा
जलधरगर्जितभीतसारसीव ॥ २४ ॥

शकारः । झ[2]णज्झणन्तबहुभू[3]शणश[4]द्दमिश्शं
किं दो[5]व्वदी विअ पलाअशि लामभीदा ।

---

निम्ननासा । कुलणाशिका कुलं वंशस्तं नाशयति पातित्यजननात् । णीशाशेति पाठे निःस्वानामाशा कुलनाशिकेत्यर्थः । अवशिका अनायता(त्ता) दानेनापि कस्यायत्ता न भवति । कामस्य मजू(ञ्जू)-शिका पात्रविशेषः । कंदर्पभाजनमिव । वर्तुलीभूतः काम इवेत्यर्थः । एषा वेशवधूः । 'वेशो वेश्याजनाश्रयः' इत्यमरः । सुवेशनिलया । शोभनानां वेशानामलंकाराणां निलय आश्रयो यस्यां सा । वेशाङ्गना । वेशोस्या(स्या?) अस्तीति वेशिका । एतान्यस्या दश नामकानि मया कृतानि । अद्यापि मां नेच्छैति । इति संस्कृतम् । यदि देवताया अष्टौ दश द्वादश (वा) नामानि पद्य(ठ्य)न्ते तदा सा प्रसन्ना भवति । इयं त्वेतावतापि न प्रसन्नेति भावः । अत्र पूर्वार्धोत्तरार्धयोः एषा एषेति पुनरुक्तम् । न्यूनमधिकं वा कृतं(?) । दशेति व्यर्थम् ॥ २३ ॥

विटः—[प्रसरसीति ।] प्रचलिताभ्यां कुण्डलाभ्यां गण्डयोर्घृष्टं पार्श्वं यस्याः सा । अत एव विटनखपरिमृष्टवीणातुल्या । मनोहरत्वाच्छब्दवत्त्वाद्वा वीणातुल्यत्वम् । विटसदृशौ कुण्डलौ ॥ २४ ॥

---

१ विटजनपरिघाटितेव B (a); विटजननखखण्डितेव B (d). २ झण्णज्झणन्तं AB (c) CFGIJ; झाणज्झणन्ती DH. ३ भूसण B (a); भूषण B (d). ४ सद्दमिस्सं B (ab) ५ दावदा AB (bcd) CDEFGIJ.

एशे हलामि शहश त्ति जधा हणूमे
विश्शावे[1]शुश्श[2] वहिणिं वि[3]अ तं शु[4]भद्दं (९२) ॥२९॥

चेटः ।

[5]लमेहि अ लाअवल्लहं
तो[6] खा[7]हिशि [8]मच्छमंशकं । 265
[9]एदेहिं म[10]च्छमंशकेहिं
शुणआ म[11]डअं ण [12]शेवंदि (९३)॥ २६ ॥

शका०–(९२) [झाणझ्झणंतेति।] वसन्ततिलकं छन्दः। झाणज्झणन्तेत्यव्यक्तानुकारकम्। अव्यक्तशब्दविशेषयुक्तबहुभूषणशब्देन मिश्रं यथा स्यादेवम्। किं द्रौपदीव पलायसे। रामभीता। एष हरामि झटिति। यथा हनूमान्विश्वावसोर्भगिनीमिव तां सुभद्राम्। विश्वावसोः सिद्धराजविशेषस्य। भगिनी सुभद्रा। किं तर्हि कृष्णस्य। यथा इवेति पुनरुक्तम्॥ २९ ॥

चेटः–(९३)[लामेहीत्यादि]। प्रतिपादं चतुर्दशमात्रत्वान्मात्रासमकं छदः(न्दः)। लामेहि अ रमय च। चकारो भिन्नक्रमः। राजवल्लभं चेत्यर्थः। तो खाहिशि ततः खादिष्यसि। मत्स्यमांसकम्। तो इत्योकारो लघुः। छन्दोनुरोधादित्याहुः। 'एओकारौ हलन्तस्थौ सु (?) द्वौ वाप्यपदान्वितौ। दीर्घात्परौ लघु (घू) स्यातां छन्दोविचित्ति(ति)भाषया' इत्युक्तम्। एदेहिं मच्छमंशकेहिं। एताभ्यां

१ वसुश्य B (ab), वश्शुश्श B (d). २ वहणिं AB (bc) F. ३ विअशाहं B (a); वि तं B (b). ४ सुभद्दं B (ab). ५ लमेहि DH. ६ ता (= तत्) DH. ७ खाहिशि B (d); क्खाहि E. ८ मंशमच्छकं B (d); मच्छं मंशकं DFH. ९ एदेहि B (a) EG. १० मंशमच्छकेहिं B (d). ११ मलअं AB (abc) CDEFGIJ. १२ शेवन्ति AB (abc) CDEGIJ; सेवन्ति B (d).

विटः । भवति वसन्तसेने ।

किं त्वं कटीतटनिवेशित[1]मुद्वहन्ती
तारावि‌चित्ररुचिरं रशना[2]कलापम् ।
वक्त्रेण निर्मथितचूर्णमनःशिलेन
त्रस्ता[3] द्रुतं नगरदैवतवत्प्रयासि ॥ २७ ॥

शकारः। अम्हेहिं[4] चण्डं अहिशालिअन्ती[5]
वणे[6] शिआली विअ कुक्कुलेहिं[7] ।
पलाशि शिग्घं[8] तुलिदं शवेग्गं[9]
शवेढणं[10] मे हलअं[11] हलन्ती(५४) ॥ २८ ॥

---

मत्स्यमांसाभ्यां हेतुभ्याम् । मच्छकलेहिं इति पाठे मत्स्यशुष्कमांसाभ्यामित्यर्थः । ककारः स्वार्थे । शुणआ श्वानः । मृतकं न सेवन्ते । नकारः शिरश्चालने । न सेवन्त(न्त)इति नापितु सेवन्त एवेत्यर्थः॥ २६॥

विटः—[किं त्वमिति]। वक्त्रेण लक्षिता नगरदैवतवत्प्रयासि । कीदृशेण(न) वक्त्रेण निर्मथितचूर्णमनःशिलातुल्येन ॥ २७ ॥

शका°—(५४) [अमूहे(ह्मे)हिं चण्डमिति।] उपेन्द्रवज्राछन्दः। अस्माभिश्चण्डं शीघ्रमभिसार्यमाणा वने शृगालीव कुक्कुरैः पलायसे शीघ्रं त्वरितं सवेगम् । सवेढणं समूलबन्धम् । हलअं मम हृदयं हरन्ती । इति संस्कृतम् । सवेढणं सवेष्टनमित्यर्थ इत्य(त्ये)के ॥ २८ ॥

---

१ विवेशितमुद्वहन्ती B (ab). २ रसना AC. ३ त्रस्ताद्रुतं AB (bc) CDEGIJ; त्ररतादतं B (a). ४ अम्हेहि B (bc) CD. ५ अभिशालिअन्ती B (a); अहिशालअन्ती B (d); अभिशालिअन्ति DH. ६ वण्णे AB (cd) CDJ. ७ कुक्कुडेहिं AB (bcd) DEFG; कुक्कुरेहिं B (a). ८ शिघं B (a); गन्धं B (b); गच्छं G. ९ शवेगं D. १० शवेठणं AB (j) EFGI; सवेढणं B (ab); सवेण्ठणं B (a), शवेडणं CJ; शवेड्डणं DH. ११ हलकं B (d); हिअअं D.

वसन्तसेना । [1]पल्लवआ पल्लवआ । परहुदिए परहुदिए (५५)।

शकारः । सभयम् । भावे भावे । मणुश्शे मणुश्शे (५६)।

विटः । न भेतव्यं न[2] भेतव्यम् ।

वसन्तसेना । माहविए माहविए[3] (५७) ।

विटः । सहासम् । मूर्ख परिजनोन्विष्यते ।

शकारः । भावे भावे। इ[4]त्थिअं अण्णेशदि (५८)।

विटः । अथ किम् ।

शकारः । इ[5]त्थिआणं शदं मा[6]लेमि । शूले ह[7]ग्गे (५९)।

---

वस०—(५५)पल्लवक पल्लवक । परभृतिके परभृतिके । पल्लवकः परभृतिका च वसन्तसेनायाः परिचारकः परिचारिका च । माधविकापरा परिचारिका ।

शका०—(५६) भावे भावे इति संबोधनम् । मणुश्शे मनुष्यः।

वस०—(५७) माधविके माधविके ।

शका०—(५८) भाव स्त्रियमन्वेषय(न्विष्य)ति ।

शका०—(५९) स्त्रीनामश्रवणेन सगर्वमाह । स्त्रीणां शतं मारयामि । शूले शूरः । हग्गे अहम् ।

---

१ पल्लविए पल्लविए (= पल्लविके पल्लविके) AB (c) DF; पल्लविआ B (b), पल्लविआ पल्लविआ EG. २ न भेतव्यम् om. B (d). ३ After माहविए B (a) has कण्णऊर कण्णऊर मदणिए मदणिए. ४ इत्थिआं AB (c) CGIJ; इत्थिअं B (a) DFH, इत्थियां B (b) E; इत्थियं B (a). ५ इत्थिआणं AB (abc) CEFGIJ; इत्थिकाणं B (d). ६ मोडेमि AB (bcd) DEFGI. ७ हगे CDHJ.

**वसन्तसेना** । शून्यमवलोक्य । हद्धी[1] हद्धी । कधं परि-ब्भट्टो परिअणो[2] । एत्थ मए अप्पा शअं ज्जेव्व[3] रक्खिदव्वो (६०) ।

**विटः** । अन्विष्यतामन्विष्यताम्[4] ।

**शकारः** । वशन्तशेणिए विलव विलव पलहुदिअं[5] वा[6] पल्लवअं[7] वा शव्वं वा वशन्तमाशं[8] । मए अहिशालिअन्तीं[9] तुमं[10] के पलित्ताइश्शदि[11] ।

किं भीमशेणे जमदग्गिपुत्ते[12]
कुन्तीशुदे[13] वा दशकन्धले[14] वा ।

---

वस०–(६०) हद्धि हा धिक् । हद्धीत्यव्ययं भयार्थे । कथं परिजनोपि परिभ्रष्टः । अत्र मयात्मा स्वयमेव रक्षितव्यः ।

शका०–(६१) वसन्तसेनिके विलप । किमेकदेशविलापेन । परभृतिकां वा पल्लवकं वा सर्वं वा वसन्तमासम् । अत्र पक्ष एको वाशब्दः शकारवचनतया व्यर्थ एव प्रयुक्तः । अनेकार्थत्वान्नि-पातानामवधारणे वा । सर्वमेव वसन्तमासमित्यर्थः । मयाभिसार्य-माणां तुमं त्वाम् । को कः परित्रायते ।

[किं भीमसे(शे)णेत्यादि ।] इन्द्रवज्राश्लोकः । किं भीमसेनो जमदग्निपुत्रः कुती(न्ती)सुतो वा दशकन्धरो वा । एते चत्वारः ।

---

१ हद्धि हद्धि DH. २ परिअणो वि परिब्भट्टो AB (bc) CDEFGIJ; परिअणो वि मे परिब्भट्टो B (d). ३ जेव्व AEFG; ज्जेव CJ; एव्व DH. ४ अन्विष्यताम् om. AB (cd) DEHI. ५ परहुदिअं AGJ; परहुदीयं E ६ वा om. B (d). ७ पल्लविअं AB (c) D. ८ B (a) repeats वा after वशन्तमाशं. ९ अहिशालअन्तीं. १० तुमं को AB (abc) DEFG; को तुमं B (d); तुमं कु J. ११ पलित्ताइस्सदि B (d). १२ जमदग्ग AB (c) °दग्गि J; °उत्ते DH. १३ कुन्दी B (d). १४ दसकन्धलो DH.

एशो हगे[1] गेण्हिय[2] केशहत्ते[3]
दुश्शाशणश्शाणुकिदिं[4] कलेमि ॥ २९ ॥

णं[5] पेक्ख पेक्ख ।

अशी शुतिक्खे वलिदे अ[6] मस्तके[7]
कप्पेध[8] शीशं उद[9] मालएध[10] वा ।
अलं तवेदेण पलाइदेण
मुमुक्खु जे होदि[11] ण शे[12] क्खु जीअदि[13](६१) ॥ ३० ॥

**वसन्तसेना ।** अज्ज अबला[14] क्खु[15] अहं (६२) ।

**विटः ।** अत एव ध्रियसे ।

---

एषोऽहं गृहीत्वा केशहस्ते दुःशासनस्यानुकृतिं करोमि ॥ २९ ॥

णं ननु । पेक्ख पे(प्रे)क्षस्व ।

[अशी सु(शु)तिक्खे इति ।] वंशस्थेन्द्रवज्रोपेन्द्रवज्रादिभिर्द्वादशैकादशवर्णैर्विजात्युपजातिः । असिः सुतीक्ष्णो वलितो लालितो (?) मस्तकं कल्पये च्छिनत्ति(?) तत्र शीर्षं [उत] मारयामि वा । अलं तवैतेन पलायितेन मुमूर्षुर्यो भवति न स खलु जीवति ॥ ३० ॥

वस०—(६२) आर्य अबला खल्वहम् ।

विटः—अत एव ध्रियसे जीवसि । बलवान्धारयितुं न शक्यत एवेति तात्पर्यम् ।

---

१ हग्गे B (d). २ गेण्हिअ ADEF. ३ केशहत्थे ACDEFGJ. ४ अणुकिदं B (d) G. ५ णं पेक्ख AB (c) CF. ६ श B (d) ७ मस्तके AB (bcd) EF, मश्थत्थके B (a); मत्थए DH; मत्थके GJ. ८ कप्पेम CJ. ९ उअ AB (cd) DEFGI, तुअ B (b). १० मालएम CJ. ११ होइ B (a). ११ श B (b). १३ जीवदि DH. १४ अबणला B (a). १५ क्खु ACDEJ.

**शकारः** । अदो [1]ज्जेव्व ण [2]मालीहशि (६३) ।

**वसन्तसेना** । [3]स्वगतम् । कधं अणुणओ वि से भअं उप्पादेदि । [4]भोदु एव्वं दाव । [5]प्रकाशम् । अज्ज [6]इमादो [7]किंपि अलंकरणं [8]तक्कीयदि (६४) ।

**विटः** । [9]शान्तं पापं शान्तं पापम् । भवति वसन्तसेने । न पुष्पमोषमर्हत्युद्यानलता । तत्कृतमलंकरणैः ।

**वसन्तसेना** । ता किं [10]खु दाणिं (६५) ।

---

शका०—(६३) अत एव न मार्यसे ।

वस०—स्वगतं मनसि विचारयतीत्यर्थे संकेतः । (६४) कथमनुनयोपि । से अस्य । भयमुत्पादयति । भवत्वेवं तावत् । प्रकाशम् । आहेति शेषः । आर्य अस्मादीदृशवाक्यभाषणात्किमप्यलंकरणं तक्कीअदि अन्विष्यते ।

विटः—शान्तं पापं प्रतिहतममङ्गलमित्यर्थे शान्तमित्येकदेशः संकेत इति पूर्वत्रापरत्र ज्ञेयम् । कृतं निःफलमलंकरणैः । यत उद्यानलता पुष्पमोषं नार्हति ।

वस०—(६५) तत्किं खल्विदानीम् ।

---

१ जेव्व AEG ; ज्जेव CJ; एव्व DH. २ मालीअशि AB (bc) CDEGIJ ; मालीहश्शि B (a) ; मालीअदि B (d). ३ स्वगतम् om. B (ad). ४ भोदु om. DH ; भो B (bd). ५ प्रकाशम् om. B (abd). ६ इमादो अ(ज)णादो B' (d). ७ किं वि -ADG. ८ तक्कियदि DH; तक्कीअदि G. ९ शान्तम् AB (bc) CEFIJ ; शान्तं शान्तम् B(d)DGH. १० खु AEFG.

शकारः। [1]हग्गे देव[2]पुलिशे [3]मणुश्शे वाशुदेवके [4]कामइदव्वे (६६)।

वसन्तसेना। सक्रोधम्। [5]सन्तं पावम्। अवेहि। अण-[6]ज्जं मन्तोसि (६७)।

शकारः। सहस्ततालं विहस्य। भावे [7]भावे। [8]पेक्ख दाव। अन्तलेण [9]शुशिणिद्धा एशा [10]गणिआ। जेण मं भणादि एहि शन्ते शि [11]किलिन्ते शि त्ति। [12]हग्गे [13]अण्णग्गामन्तलं ण

---

शका०—(६६) हगे अहम्। देवपुरुषो मनुष्यो वासुदेवः कामयितव्यः। इति तर्क्यत इत्याशयः (?)।

वस०—(६७) सन्तं सन्तम् शान्तं शान्तम्। अणज्जं अनार्यमनहं (र्हं) मन्त्रयसि।

शका०—सतालिकं विहस्य हस्ते तालदानं कृत्वेत्यर्थः। (६८) भाव प्रेक्षस्व तावत्। ममन्तरेण मयीत्यर्थ इत्येके। अन्तरेण चित्तेन। अन्योन्यम्। सुस्निग्धैषा गणिकादारिका ननु येन मां भणति एहि श्रा(श्रा)न्तोसि। हगे अहं न ग्रामान्तरगतो न नगरान्तरगतः। ग्रामान्तरागतो नगरागतश्च श्रान्तः क्लात(क्लान्त)श्च भवति।

---

१ हगे AB (bcd) CDEGIJ. २ देवपुरिषे B (ab); देवतपुलिशे B (d). ३ मणुश्शो B (b); मणुश्शके B (a). ४ कामइदव्वो AB (bc) EFGI. ५ सन्तं सन्तम् AB (c) CDFI; शान्तं पापम् B (ad); शान्तं शान्तम् B (b) EG, शान्तं शान्तं J. ६ मन्तेशि AB (abc) FIJ. ७ भावे om. B (b) G. ८ पेक्ख दाव मं (= प्रेक्षस्व तावन्माम्) AB (c) DFIJ; पेक्ख दाम C; पेष B (a), पेत्थ B (b) EG; पेक्ख पेक्ख B (d). ९ शुशणिद्धा B (a). १० गणिआदालिआ णं (= गणिकादारिका ननु) AB (c) CDFIJ; गणिअदालिआ B (bd); गणिआदालिआ EG. ११ किलन्ते BH. १२ हगेAB (bcd) CDEFGJ. १३ ण गामन्तलं (= न ग्रामान्तरं) AB (c) CFJ.

गडे[1] णगलन्तलं वा ण[2] गडे। अज्जुके[3] शवामि[4] भावश्श शीशं[5] अत्तणकेलकेहिं[6] पादेहिं। तव जेव्व[7] पश्चाणुपश्चिआए[8] आहिण्डन्ते शन्ते[9] किलिन्ते[10] म्हि शंवुत्ते (६८)।

विटः। स्वगतम्। अये[11]। कथं शान्तमित्यभिहिते[12] श्रान्त[13] इत्यवगच्छति मूर्खः। प्रकाशम्। वसन्तसेने[14] वेशवासविरुद्धमभिहितं भवत्या। पश्य[15]।

तरुणजनसहायश्चिन्त्यतां वेशवासो
विगणय गणिका त्वं मार्गजाता लतेव।
वहसि हि धनहार्यं पण्यभूतं शरीरं
सममुपचर भद्रे सुप्रियं वाप्रियं[16] वा ॥२१॥

अपि[17] च।

---

न त्वहमीदृश इत्याशयः। अज्जके भट्टालिके शपाम्(पे) भावस्य विटस्य शीर्षेणात्मीयाभ्यां पादाभ्यां शपे यदग्रे वक्ष्यमाणं तत्सत्यमित्यर्थः। तवैव पृष्ठा(श्चा)नुपृष्टि(ष्ठि)कया। आहिण्डन्ते उद्भ्राम्यन्। श्रान्तः क्लान्तोस्मि संवृत्तः।

विटः—वेशो वेश्याजनस्थानम्।

[तरुणेति। स्पष्टम्] ॥२१॥

---

१ गडे om. AB (bd) CDEFGIJ. २ ण om. AB (bd) CDEFGIJ. ३ अज्जके AB (c) COEFIJ. ४ अनामि(?) J. ५. शीस B(d); शिरशेण DH. ६ अत्तणकेहिं AB (bc) EFGI; अत्तणकेरेहिं DH. ७ जेव्व A F ज्जेव; CEGJ एव्व DH; एव्व B (a). ८ पश्चाणुपाश्चिद्वीदाए B (a); वश्चाणुपत्थिआए B (bc); पच्छाणुपच्छिअआए BGH. ९ शन्ते om B (a). १० कलिन्ते DH; किलन्ते G. ११ कथमये B (a). शान्तः १२ B (d). १३ श्रान्तम् B (a). १४ वसन्तसेने om. B (a). १५ पश्य om. B (ab) E. १६ चाप्रियं च AB (bc) CDEFGIJ. १७ अपि च om. G

वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खोपि वर्णाधमः
फुल्लां नाम्यति वायसोपि हि लतां या नामिता बर्हिणा ।
ब्रह्मक्षत्रविशस्तरन्ति च [1]येया नावा तथैवेतरे
त्वं वापीव लतेव नौरिव जनं वेश्यासि सर्वं भज ॥३२॥

वसन्तसेना । [2]गुणो [3]क्खु अणुराअस्स कारणम् । ण उण बल्क्कारो (६९) ।

शकारः । भावे भावे एशा गब्भदाशी कामदेवाअदणुज्जाणादो पहुदि [4]ताह दलिद्द[5]चालुदत्ताह [6]अणुलत्ता ण मं कामेदि । वामदो तश्श [7]घलं । जधा तव [8]मम [9]हश्तादो [10]एशा ण पलिब्भंशादि [11]तधा [12]कलेदु भावे (७०) ।

---

[वाप्यामिति।] नाम्यति नमयति । नाम्यतीति कण्वादि(?)पाठान्नामं करोतीत्यर्थे यक्यकारलोपे च रूपम् । यथा मगधशब्दे मगध्यतीति भवति । नामं करोतीत्यर्थे णिचि संज्ञापूर्वको विधिरनित्य इति गुणमकृत्वा यणादेशे नाम्यतीति रूपमित्येके । ण्यन्तात्संपदादिपाठमभ्युपे(पे)त्य क्विपि क्यचि रूपमित्यपरे ॥३२॥

वस०—(६९) गुणः खल्वनुरागस्य कारणम् । न पुनर्बलात्कारः।

शका०—(७०) भाव भाव एषा गर्भदासी कामदेवायतनोद्यानात्परभृतकस्य (प्रभृति तस्य) दरिद्रचारुदत्तस्यानुरक्ता न मां कामयते । वामतस्तस्य चारुदत्तस्य गृहम् । यथा तव मम हस्तान्नैषा प्रभ्रश्यति तथा करोतु भावः । गर्भदासी जन्मप्रभृति चेटी । ताह तस्येत्यर्थः सर्वत्र ।

---

१ यथा D F H २ गुणा B (d). ३ खु G. ४ तस्स B (b) G. ५ चारुदत्ताह B (d). ६ अणुरत्ता D H. ७ गलं G. ८ मम अ B (d) GJ. ९ हत्थादो A B (abc) G D E F G I J; हस्तादो B. १० ण एशा B (d). ११ तथा B (d) H. १२ करेदु B(d).

विटः । स्वगतम् । यदेव परिहर्तव्यं तदेवोदाहरति मूर्खः । कथं वसन्तसेनार्यचारुदत्तमनुरक्ता । सुष्ठु खल्विदमुच्यते रत्नं रत्नेन संगच्छत इति । तद्गच्छतु । किमनेन मूर्खेण । प्रकाशम् । काणेलीमातः । वामतस्तस्य सार्थवाहस्य गृहम् ।

शकारः । अध इं । वामदो तश्श घेलं (७१) ।

वसन्तसेना । स्वगतम् । अम्महे वामदो तस्स गेहं त्तिं जं सच्चं अवरज्झन्तेण वि दुज्जणेण पिअसंगमं पाविदा (७२) ।

शकारः । भावे भावे बलिए क्खु अन्धआले मांश-

---

विटः—परिहर्तव्यं चारुदत्तवासोतिनिकट इति वसन्तसेनायाः कथयितु(तुं) नार्हतीति । तदेव च तेनोक्तम् । तद्वचनं परिहारविषयः । काणेलीमातः । 'काणेली कन्यकामाता' इति देशीप्रकाशः । असती काणेलीत्येके ।

शका०—(७१) अथ किम् । वामतस्तस्य गृहम् ।

वस०—(७२) अम्महे इत्यव्ययमाश्चर्ये । वामतस्तस्य चारुदत्तस्य गृहमिति यत्सत्यम् । अवरज्झन्तेण अपराध्यतापि दुर्जनेनोपकृतं येन प्रियसंगमं प्रापिता ।

शका०—(७३) भाव बलवत्यन्धकारे माषराशिप्रविष्टेव मशीगुडिका दृश्यमानैव प्रनष्टा वसन्तसेना ।

---

१ अध किं B(b)E. २ घडं A B (bc) D E F G I. ३ अम्हहे A B (abc) D E F G. ४ तश्श A B (c)CDFIJ. ५ घलं AB (abc)D EFGI. ६ त्ति A B (bc) FGI. ७ तं B (a). ८ सेच्चं B(d); शच्चं J. ९ अवरज्जन्तेण B (d). १० दुज्जणेण उवकिदं जेण (=दुर्जनेनोपकृतं येन)A B (bc) CDEFHIJ; दुज्जणेण उपकिदं अजेव्व जेण B(a) G. * शगमं J. ११ बलियं E. १२ खु G. १३ माष० A B(bc).

लशिपे[1]विश्टा विअ मशी[2]गुडिआ दीशन्ती[3] दीशन्ती[4] जेव्व[5] पणश्टा[6] वशन्तशेणिआ (७३) ।

विटः । अहो बलवानन्धकारः । तथाहि ।

आलोकविशाला मे सहसा तिमिरप्रवेशविच्छिन्ना ।
उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण ।। ३३ ।।

अपि च ।

लिम्पतीव तमोङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां[7] गता ।। ३४ ।।

शकारः । भावे[8] भावे अण्णेशामि वशन्तशेणिअं[9] (७४) ।

विटः । काणेलीमातः । अस्ति किंचिच्चिह्नं[10] येदु[11]पलक्षयसि ।

---

विंदू॰ (विटः)–[आलोकेति ।] आलोके दर्शने । विशाला महती ।। ३३ ।।

[लिम्पतीति] ।। ३४ ।।

शका॰–(७४) भाव अन्वेषया (न्विष्या) मि वसन्तसेनाम् ।

विटः–चिह्नं भूषणशब्दाद्युपलक्षणं माल्यगन्धादि । अस्ति किंचिच्चिह्नमुपलक्षयसीति ।

---

१ पविट्ठा A B (bcd) C D F G I J; पविष्टा B (c) E D E F I J. २ मशि A B (bcd) G. ३ दीशन्दी A B (c) J, दीशन्ती om. A B (c) C D F I. ४ दीशन्दी दीशन्दी E. ५ ज्जेव्व E; ज्जेव F J, एव्व D H. ६ पणट्ठा A B (ac) C D F G I J; पणष्टा B (b) E. ७ निफलतां E G. ८ भावे om. G. ९ वश्रान्तशेणिअं A. १० किं चिह्नं A B (bc) E G I; चिह्नं om D. ११ यत् om B (d).

शकारः । भावे[1] भावे किं विअ (७९) ।

विटः । भूषणशब्दं सौरभ्यानुविद्धं माल्यगन्धं वा ।

शकारः । शुणामि मल्लगन्धम् । अन्धआलपू[2]लिदाए उण णो[3]शिआए ण[4] शु[5]व्वत्तं पे[6]क्खामि भू[7]शणशद्दं (७६) ।

विटः । जनान्तिकम् । वसन्तसेने

कामं प्रदोषतिमिरेण न दृ[8]श्यसे त्वं
सौ[9]दामिनीव जलदोदरसंधि[10]लीना ।
त्वां सूचयिष्यति तु माल्यसमुद्भवोयं
गन्धश्च भीरु मुखराणि च नूपुराणि ॥ ३९ ॥

श्रुतं वे[11]सन्तसेने ।

वसन्तसेना । स्वगतम् । सुदं गो[12]हिदं चै[13] (७७) । नाट्येन नूपुराण्युत्सार्य माल्यानि चापनीय किंचित्परिक्रम्य हस्तेन परामृश्य ।

---

शका०–(७९) किं विअ कीदृशमिवेत्यर्थः ।

शका०–(७६) शृणोमि माल्यगन्धम् । अन्धकारपूरितया पुनर्नासिकया पुनः (?) न सुव्यक्तं पश्यामि भूषणशब्दम् । शुणामि मल्लगन्धमित्यादिना लोकविरुद्धोक्तिः ।

[काममिति।] ॥ ३९ ॥

वस०–(७७) श्रुतमवधारितम् । गृहीतमस्य तात्पर्यमय्या-(व्या)कलितम् ।

---

१ भावे om G. २ पूरिदाए B (a). ३ णाशिकाए B d. ४ ण om A B (c) C D E F G J. ५ शुव्वत्तं A B (c) C D E I; शुभत्तं B (b). ६ उण ण पेक्खामि (=पुनर्न पश्यामि ) A B (bc) C D E F G I J. ७ भूषण A E F I. ८ दृश्यते B (d). ९ सौदामनीव B (d) C D H J. १० संविलीना B (ab). ११ B (a) has त्वया after वसन्तसेने. १२ गहीदं D H. १३ अ B (a) D H J.

अम्मो भित्तिपरामरिससूचिदं पक्खदुआरअं क्खु एदं। जाणामि अँ संजोएण गेहस्स संवुदं पक्खदुआरअं (७८)।

चारुदत्तः। वयस्य समाप्तजप्योऽस्मि। तत्सांप्रतं गच्छ मातृभ्यो बलिमुपहर।

विदूषकः। भो ण गमिस्सं (७९)।

चारुदत्तः। धिक्कष्टम्।

दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते॥३६॥

अपि च।

---

(७८) अम्मो आश्चर्ये। भिति(त्ति) परामर्शसूचितं पक्षद्वारं खल्वेतत्। जानामि संयोगेन स्पर्शनेन्द्रियानुभवेन। गृहस्य संवृतं पक्षद्वारकम्।

(विदू०-(७९) भो न गमिष्यामि)।

[दारिद्र्यादिति।] बान्धवजनो वाक्ये न संतिष्ठते वचनं न करोतीत्यर्थः। प्रतापाभावात्। स्फारीभवन्त्येकीभवन्ति। तत्तस्य संभाव्यते चौर्यादिकम्। इदमस्य नासीदिदानीं कथमित्यादितः शङ्कातः॥ ३६॥

---

१ मरिशसूइदं A B (c) I; मरिससूइदं B (bcd) E G J; मरिशसइदं C D F.
२ दुवारअं D H. ३ खु G. ४ अ° om D H. ५ संज्जोएण D H. ६ दुवारअं D H.
७ गमिश्शं A B (c) F. ८ सहसा B (a). ९ परं म्लायते B (d).

सङ्गं नैव हि कश्चिदस्य कुरुते संभाष्यते[1] नादरा-
त्संप्राप्तो[2] गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते ।
दूरादेव महाजनस्य विहरत्यल्पच्छदो[3] लज्जया
मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ ३७ ॥

आपि च ।

दारिद्र्य शोचामि भवन्तमेव-
मस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्नदेहे मयि मन्दभाग्ये
ममेति चिन्ता क्व गमिष्यसि त्वम् ॥ ३८ ॥

विदूषकः । सवैलक्ष्यम् । भो वअस्स[4] ज़इ मए गन्त-व्वं ता एसा[5] वि मे सहाइणी[6] रदणिआ[7] भोदु[8] (८०) ।

चारुदत्तः । रदनिके मैत्रेयमनुगच्छ ।

---

[सङ्गमिति ।] अल्पच्छदो वस्त्रविहीनः ॥ ३७ ॥

[दारिद्र्येति ।] भवन्तमेव शोचामि । विनष्टदेहे मपि(यि) क्व यास्यसि । अस्मत्सदृक्सार्वदिकः सुह(हृ)त्कोपि नास्तीत्यर्थः । अर्थपरत्वात्पुंलिङ्गत्वम् । यद्वा तमेव भवमुत्पत्तिं स्मरामीति कुव्याख्या । सुहृन्मित्रमतो हेतोर्मयि विनष्टदेहे क्व यास्यासि त्वामिति मे चारुदत्तस्य चिन्ता ॥ ३८ ॥

विदू०-(८०) भो वयस्य यदि मया गन्तव्यं तदेषापि मे सहायिनी रदनिका भवतु । सहाइणी द्वितीया ।

---

१ संभाषते J. २ संप्राप्तौ ? B (a). ३ विरहति ? D. ४ वअस्स A B (c) F I. ५ एशा A B (c) F I. ६ शहाइणी A B (c); सहायिणी B. (a). ७ रआणिआ B (a) ८ होदु D H.

रदनिका[1] । जं अज्जो आणवेदि (८१) ।

विदूषकः । भोदि रदणिए गेण्ह बलिं[2] पदीवं च । अवा[3]-वुदं पक्खदुआरअं[4] करेमि (८२) । तथा करोति[5] ।

वसन्तसेना । मम[6] अब्भुववत्तिणिमित्तं विअ[7] अवावुदं पक्खदुआरअं[8] । ता जाव पविसामि । दृष्ट्वा । हद्धी[9] हद्धी । कधं पदीवो (८३) । पटान्तेन निर्वाप्य प्रविष्टा ।

चारुदत्तः । मैत्रेय किमेतत् ।

विदूषकः । अवावुदपक्खदुआरएण[10] पिण्डीकिदेण[11] वादेण णिव्वाविदो पदीवो । भोदि रदणिए[12] णिक्कम तुम पक्खदु[13]-

---

चेटी (रद०)–(८१) यदार्य आज्ञापयति ।

विदू०–(८२) भवति रदनिके गृहाण बलिं प्रदीपं च । अहमपावृतं पक्षद्वारकं करोमि ।

वस०–(८३) ममेवाभ्युपपत्तिनिमित्तमपावृतं पक्षद्वारकम् । तद्यावत्प्रविशामि । अपावुदं अपावृतम् । अभ्युपपत्तिरनुग्रहः । हद्धी हद्धीति भये । कथं प्रदीपः । पटान्तेन प्रदीपनिर्वापणं केनाप्यन्येन निजानवलोकनाय कृतं वसन्तसेनयेति ज्ञेयम् ।

विदू०–(८४) अपावृतपक्षद्वारेण पिण्डीकृतेन वातेन निर्वापितः प्रदीपः । भवति रदनिके निष्क्र(ष्क्रा)म त्वं पक्षद्वारकेण ।

---

१ चेटी A B (bed) E F G. I. २ पदीवं बलि अहं B (c); बलिं पदीवं अ G J; ब[illegible] अ D H. ३ अहं अवावुदं A B (c) G E F G J; अहं अवावुदं B [illegible]g; [illegible]अं D H. ५ तथा करोति om. D H ६ मम विअं B (c) E G; मम वि[illegible]° B (a) °विअ om. A B (d) D E F G. ८ दुवारअं D H. ९ हद्धि हद्धि J. ८ दोबदी A. १० दुआरेण A B (bed); दुवारेण D E H; दुवारएण D. ११ किदेण A B (bc) D F. णिए A. १३ Vide 15.

आरएण । [1]अहंपि [2]अब्भन्तर[3]चदुस्सालादो पदीवं [4]पज्जालिअ [5]आअच्छामि (८४) । इति निष्क्रान्तः ।

शकारः । भावे भावे अण्णेशामि वशन्तशेणिअं (८५) ।

विटः । [6]अन्विष्यतामन्विष्यताम् ।

शकारः । तथा कृत्वा । भावे भावे [7]गहिदा गह्निदा (८६) ।

विटः । मूर्ख नन्वहम् ।

शकारः । इदो दाव भविअ [8]एअन्ते भावे [9]चिट्ठदु । पुनरन्विष्य चेटं गृहीत्वा । [10]भावे भावे [11]गह्निदा गह्निदा (८७) ।

चेटः । [12]भट्टके चेडे [13]हगे (८८) ।

अहमप्यभ्यन्तरचतुःशालातः प्रदीपं प्रज्वाल्यागच्छामि । अस्य गीत (?) (अस्थगित)द्वारेण प्रसरणाभावात्पिण्डीभूतेनैकीभूतेन प्रतिबध(बन्ध)कत्वादपावृते पक्षद्वारे सति निर्वापितो दीपः ।

शका०—(८५) भाव भाव अन्वेषया(न्विष्या)मि वसन्तसेनिकाम् ।

शका०—(८६) भाव भाव गृहीता गृहीता ।

शका०—(८७) इतस्तावद्भूत्वैकान्ते भावस्तिष्ठतु । भाव गृहीता ।

चेटः—(८८) भट्टारक चेटोऽहम् ।

---

१ अहंवि B (a) D. २ अभ्भ० H. ३ चतुस्सा० B (a). ४ पज्जालिअ D H. ५ आअत्थामि B (c); आच्छामि B (d). ६ अन्वितां अन्विताम ? B (a). दा गहीदा D H. ८ एकन्ते G. ९ चिट्ठदु A B (de) D F G; चिट्ठ — Com इ B (a). १० भाव भाव B (a). ११ गृह्दिा गृहिदा (?) B (a). B (c) F B (b); गहीदा गहीदा D H. १२ भट्टके A B (ac) C D F ७ रआणिआ (bc) K. १३ हगे A B (bcde) D E F I K.

शकारः । इदो भावे इदो चेडे । भावे चेडे चेडे भावे । तुम्हे दाव एअन्ते चिश्ट[1] । पुनरन्विष्य रदनिकां केशेषु गृहीत्वा । भावे[2] भावे शेपदं[3] गहिदा[4] गहिदा वशन्तशेणिआ (८९) ।

अन्धआले पलाअन्ती[5] मल्लगन्धेण शूइदा ।
केशहश्ते[6] पलामिश्टा[7] चाणक्केणेव्व दोव्वदी[8] (९०)॥३९॥

विटः[9] । एषासि वयसो दर्पात्कुलपुत्रानुसारिणी ।
केशेषु कुसुमाढ्येषु सेवितव्येषु कर्षिता ॥४०॥

शकारः । एशाशि[10] वाशू शिलशि ग्गहीदा[11]
केशेशु बालेशु शिलोलुहेशु[12] ।

---

शाका०–(८९) इतो भाव इतश्चेटः । भावश्चेटश्चेटो भावः । युवां तावदेकान्ते तिष्ठ (तम्) । भाव सांप्रतं गृहीता वसन्तसेनिका । इदो भावे इत्यादि भ्रमव्युदासाय स्वनिश्चयं करोति ।

[अन्धआले इत्यादि ।] अनुष्टुप् ॥ ३९ ॥

(९०) अन्धकारे पलायमाना माल्यगन्धेन सूचिता । केशवृन्दे परामृष्टा चाणक्येनेव द्रौपदी ।

[एषासीति ।] कुलपुत्रानुसारिणी चारुदत्तानुरक्ता । सेवितव्येष्वलंकार्येषु ॥४०॥

शाका०–[ एशाशि वाशू इति । ] इ(न्द्र)वज्रायाः श्लोकः ।

---

१ चिड्ट A B (c); F G I. चिष्ट B (a); विश्चष्ट B (b); चिष्टं B (b); चिष्ट C चिंड्ड, D, चिंश्ट E. २ भावे once A. D E F G I. ३ संपदं K. ४ गहिदा once A B (be) D E FG I; गहीदा once D H; गहीदा गहीदा K. ५ पलाअंदी D. ६ केशविन्दे A B (c) C F I; °वुंदे° D H; हत्थे B (ab) G; हश्ते corr. ; हत्थे B (d), हछे E; बिन्दे J. ७ °मिड्डा° A B (c) C D F I. 3 (a) °श्चा° B (b) ष्टा corr., (मिश्ता pr. m.) B (d), °मिष्ठा° E G. मिड्डा. ८ दोबदी A B (bed) C D E F G I J. ९ वट· Mistake A. १० शिराशि A B (bc) D F G I; °रासि° B (a). ११ गिगहीदा B (a). १२ शिलोरुहेशु B (a).

अक्कोश[1] विक्कोश लेवाहिचण्डं
शंभुं शिवं शंकलमीशले[2] वा (९१) ॥ ४१ ॥

रदनिका । सभयम् । किं अज्जमिस्सेहिं[3] ववसिदं (९२) ।

विटः । काणेलीमातः अन्य एवैष[4] स्वरसंयोगः[5] ।

शकारः । भावे भावे जधा[6] दहिछाल्लिपलिलुद्धाए[7][8] मज्जालीएं[9] शलपलिवत्ते[10] होदि[11] तधा[12] दाशीए धीए शलपलिवत्ते कडे[13] (९३) ।

विटः । कथं स्वरपरिवर्तः कृतः । अहो चित्रम् । अथवा किमत्र चित्रम् ।

इयं रङ्गप्रवेशेन[14] कलानां चोपशिक्षया ।
वञ्चनापण्डितत्वेन स्वरनैपुण्यमाश्रिता ॥ ४२ ॥

---

(९१) एषासि वा(बा)ला शिरसि गृहीता केशेषु बालेषु शिरोरुहेषु । आक्रोश विक्रोश लपाधिचण्डमत्युच्चैः । हिशब्द एव वा । चण्डं महादेवं च शंभुं शिवं शंकरमीश्वरं वा ॥४१॥

रद०–(९२) किमार्यमिश्रैर्मान्यैर्व्यवसितमारब्धम् ।

शका०–(९३) भाव भाव यथा दधिभक्तलुब्धाया मार्जारिकाया स्वरपरिवृत्तिर्भवति तथा दास्याः(स्या) स्वरपरिवृत्तिः कृता । दहिसर इति पाठे छल्ली इति पाठेपि शरो दध्न उपरिभागः ।

[इयमिति ।] ॥ ४२ ॥

---

१ लबाहिचडं लबाहिचण्डं A B (c), लवाहिचण्डं c. B (d). २ मिश्चलं D H. ३ मिस्सेहिन्य...दं B (a). ४ एवैष्य? H. ५ स्वरयोग A B (bcd) D E F G I. ६ om: B (a). ७ दवि D H; दाहिं B (a). ८ लुब्धा H. ९ मज्जालिए B (a) D H. १० °पडिवत्ते B (d) in both places; °शड° B (a). ११ भोदि G. १२ तथा B (a). १३ om: A B (bc) D E F G I. १४ रङ्गप्रसङ्गेन B (a).

विदूषकः । प्रविश्य । ही ही भो[1] । पदोसमन्दमारुदेण[2] पसुबन्धोवणीदस्स विअ छागलस्स[3] हिअअं[4] फुरफुराअदि[5] पदीवो[6] । उपसृत्य रदनिकां तथां दृष्ट्वा । भोदि[8] रदणिए[9] । (१४)

शकारः । भावे भावे[10] मणुश्शे[11] मणुश्शे (१५) ।

विदूषकः । जुत्तं ण्णेदं सरिसं[12] ण्णेदं जं[13] अज्जचारुदत्तस्स[14] दलिद्ददाए संपदं परपुरिसा गेहं[15] पवेसीअन्ति[16] (१६) ।

रदनिका । अज्ज मित्तेअ पेक्ख पेक्ख[17] मे परिहवं (१७) ।

विदूषकः । किं तव[18] परिहवो आदु अम्हाणं (१८) ।

---

विदू०-(१४) ही ही भो इत्याश्चर्ये । प्रदोषमन्दमारुतेन पशुबन्धोपनीतस्येव छागक(ल)स्य हृदयं फुरफुरायते प्रदीपः । भो रदनिके । फुरफुरायतेत्यर्थं प्रकम्पते दीपः ।

शका०-(१५) भाव मनुष्यः ।

विदू०-(१६) युक्तं ने(त्कमि)दं सदृशं ने(शमि)दं यदार्यचारुदत्तस्य दरिद्रतया सांप्रतं परपुरुषा गेहं प्रवेश्यते(न्ते) ।

रद०-(१७) आर्य मैत्रेय प्रेक्षस्व मे परिभवम् ।

विदू०-(१८) किं तव परिभवोथवास्माकम् ।

---

१ भो· A B (c) C D E F J. २ °माह्लदेण B (a). ३ छाअलस्स D. ४ अहिअं B (a); हिअहअं B (b) E. ५ °पुरुपुरा० B (a); °फुरुफुरा० B (d) ६ पदीओ B (d). ७ om. C J. ८ भो र० A B (bc) C D E F G I J. ९ रदणीए H. १० om: A B (cd) E F I. ११ °णुष्षो B (a); °णश्शो B (b). १२ सरीणेदं H. १३ om: K. १४ °लुदत्त० B (ab). १५ गिहं B (ab). १६ पविसीअन्ति H. १७ om. A B (bed) C D E F G I J. १८ तुह D H.

रदनिका । णं तुम्हाणं [1]जेव्व (९९) ।

विदूषकः । किं[2] एसो [3]बलक्कारो (१००) ।

रदनिका । [4]अध इं (१) ।

विदूषकः । सच्चं (२) ।

रदनिका । सच्चं (३) ।

विदूषकः । सक्रोधं दण्डकाष्ठमुद्यम्य । मा दाव । [5]भो सके गेहे कुक्कुरोवि दाव [6]चण्डो [7]भोदि । किं उण अहं बम्हणो । ता एदिणा अम्हारिसजणभाअधेअकुडिलेण दण्डकट्ठेण दुट्ठस्स विअ [8]सुक्खाणवेणुअस्स मत्थअं दे [9]पहारेहिं [10]कुट्ट-इस्सं (४) ।

रद०—(९९) ननु युष्माकमेव । विपरीतोक्तिरियम् ।

विदू०—(१००) किमेष बलात्कारः । प्रश्नेत्र किंशब्दः ।

रद०—(१) अथ किम् ।

विदू०—(२) सत्यम् ।

रद०—(३) सत्यम् ।

विदू०—(४) मा तावत् । भो स्वके गेहे कुक्कुरोपि तावच्चण्डो बलीयान्भवति । किं पुनरहं ब्राह्मणः । ता ततः(त्) एतेनास्मादृशजनभागधेयकुटिलेन दण्डकाष्ठेन दृ(दु)ष्टस्येव सुख्खाण शुष्केत्यर्थः । वेणुअस्य(स्स) वेणुकस्य शुष्कवेणुकस्येत्यर्थः । मस्तकं ते प्रहारैः कुट्टिष्यामि । महादुष्टस्यानिग्रहेपि ममापराधो भवत्येवेत्यर्थः । यद्वा दुष्टश्चानपराधोपि निग्रहं प्राप्नोत्येवेत्यर्थः ।

---

१ जेव्व A E F G I; एव्व D H. २ om: B (ab). ३ °बक्क० H. ४ अहइं G. ५ भो· D. ६ चण्डा A I. ७ होदि D H. ८ सुक्खवेणु० D H. ९ °परिहारेहिं K. १० दे पाडइस्सं B (a).

विटः[1] । महाब्राह्मण मर्षय मर्षय ।

विदूषकः । विटं दृष्ट्वा । णं[2] एत्थ एसो अवरज्झदि । शकारं दृष्ट्वा । एसो क्खु ऐत्थ[3] अवरज्झदि । अरे रे राअसालअ[4] संठाणअ[5] दुम्मणुस्स[6] जुत्तं णेदं[7] । जइ[8] वि णाम[9] तत्तभवं अज्जचारुदत्तो[10] दलिद्दो संवुत्तो ता किं तस्स गुणेहिं णोलंकिदा[11] उज्जइणी जेण[12] तस्स गेहं पविसिअ परिअणस्स ईरिसो[13] उवमद्दो करीअदि (५) ।

मा दुग्गदो[14]त्ति परिहवो णत्थि कदन्तस्स[15] दुग्गदो णाम ।
चारित्तेण[16] विहीणो अड्ढो वि अ[17] दुग्गदो होइ (६) ॥ ४३ ॥

---

विदू०—(५) नात्रैषोपराध्यति । एष खल्वत्रापराध्यति । अरे रे राजश्यालक संस्थानक दुर्जन दुर्मनुष्य युक्तं ने(त्कमि)दम् । यद्यपि नाम तत्रभवानार्यचारुदत्तो दरिद्रः संवृत्तस्तत्किं तस्य गुणैर्नालंकृतोज्जयिनी येन तस्य गेहं प्रविश्य परिजनस्येदृश उपमर्दः क्रियते । संस्थानक इति तस्य नाम । उपमर्दो निग्रहः ।

[मा दुग्गदो इति।] गाथा [छन्दः।] (६) मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दैवस्य दुर्गतो नाम । नाम संभावनायाम् । चारित्र्येण विहीन आढ्योपि दुर्गतो दरिद्रो भवति ॥ ४३ ॥

---

१ om· D F. २ णं B (d). ३ om: G. ४ सालिअ B (d). ५ संट्ठाणअ A B (c) J; संठाण B (d). ६ दुज्जाण दुम्म० A B (bc) C D E F G I; दुदुज्जण दुम्म० B (d). ७ णेदं F J. ८ जयि बि B (a); बि om: B (d); जदबि J. ९ णामतद्व? भअवं B (a); णामत्वभवं B (d). १० °लुद० A B (abc) D E I. ११ णलंकिदा B (d). १२ om: B (a). १३ ईदिसो A B (bcd) D E F G I. १४ दुग्जदो K. १५ कअन्तस्स A B (c) I; किदंतस्स B (a) E; कदथतस्स B (b); कअं(अ)त(न्त)स्स C J, किअंतस्स D. १६ चारित्रेण B (a). १७ om: B (b) E G.

विटः । सवैलक्ष्यम् । महाब्राह्मण मर्षय मर्षय । अन्यजनशङ्कया खल्विदमनुष्ठितं न दर्पात् । पश्य ।

सकामान्विष्यतेऽस्माभिः

विदूषकः । किं इअं (७)।

विटः । शान्तं पापम् ।

काचित्स्वाधीनयौवना ।

सा भ्रष्टा शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥ ४४ ॥

सर्वथेदमनुनयसर्वस्वं गृह्यताम् । इति खड्गमुत्सृज्य कृताञ्जलिः पादयोः पतति ।

विदूषकः । सप्पुरिस उट्ठेहि उट्ठेहि । अआणन्तेण मए तुमं उवालद्धो । संपदं उण जाणन्तो अणुणेमि (८) ।

विटः । ननु भवानेवात्रानुनेयः । तदुत्तिष्ठामि समयतः ।

---

विदू०(विटः)–महाब्राह्मणश्चाण्डालः (?) । [ सकामेति । ] सकामा स्वाधीनयौवनेति पदाभ्यामस्या धारणं नापराधाय सा वेश्या तिष्ठति । न त्वियमित्याशयः । शीलवञ्चना दुश्चरितसंभावना ॥४४॥

(७) [किमिव । ]

विदू०–(८) सत्पुरुष उत्तिष्ठोत्तिष्ठ । अज(जा)नता मया त्वमुपालब्धः । सांप्रतं पुनर्जानन्ननुनयामि । आदरविषयतानुनयः ।

१ शान्तं पापं शान्तं पापं B (a). २ नष्टा A B (c) C F I. J. ३ om: B (a). ४ अजाणतण D H. ५ मये B (a). ६ उबालद्ध A B (bc) C-E F G I; °लद्धो H. ७ om: E. K.

विदूषकः। भणादु भवं (९)।

विटः। यदीमं वृत्तान्तमार्य[1]चारुदत्तस्य ना[2]ख्यास्यसि।

विदूषकः। ण कधइस्सं (१०)।

विटः। एष ते प्रणयो विप्र शिरसा धार्यते मया।
गुणशस्त्रैर्वयं येन शस्त्रवन्तोऽपि निर्जिताः ॥४९॥

शकारः। सासूयम्। किं णिमित्तं उण भावे एदश्श दु[3]श्टव[4]डुअश्श कि[5]विणं अञ्जलिं कदुअ पा[6]एशु णिवडिदे (११)।

विटः। भीतोऽस्मि।

शकारः। कश्श तुमं भीदे (१२)।

विटः। तस्य चा[7]रुदत्तस्य गुणेभ्यः।

शकारः। के विअ तश्श गुणा ज[8]श्श गेहं पवि[9]शिअ अशिदव्वं [10]पि णो[11]त्थि (१३)।

---

समयः क्रियाबन्धः। समयमेवाह। यदीममिति। (९) [भणतु भवान्।] (१०) [न कथयिष्यामि।] [एष ते इति।] गुणशस्त्रैः गुणा एव शस्त्राणि तैः ॥ ४९ ॥

शका०—(११) किंनिमित्तं पुनर्भाव एतस्य दुष्टबटुकस्य विनयाञ्जलिं कृत्वा पादयोर्निपतितः।

विदू० (शका०)—(१२) [कस्मात्त्वं भीतः।] (१३) के इव तस्य गुणा यस्य गृहं प्रविश्याशितव्यं भोक्तव्यमिति(मपि) नास्ति।

---

१ आर्य om: A B (bcd) D E F G. २ नाख्यापयसि D H. ३ दुइ A B*(abcd) D E F G; दुइ J. ४ वड्कश B (b); वड्कश्श A B (c) F; वडुव्ववश्श B*(d). ५ °विणअंजलिं A B (c) C D E F G I. J; किं बिणअं अंजलिं B (a). शविणअंजलिं B (b). ६ पादेशु D H ७ चारुत्तस्य A. ८ यश्श J. ९*पविशीअ B (d). १० वि B (a) D. ११ णस्ति B (b).

विदूषकः । मा मैवम् ।

सोऽस्मद्विधानां प्रणयैः कृशीकृतो
न तेन कश्चिद्विभवैर्विमानितः ।
निदाघकालेष्विव सोदको ह्रदो
नृणां स तृष्णामपनीय शुष्कवान्[1] ॥ ४६ ॥

शकारः । सामर्षम् । के[2] शे गेब्भदाशीअ उत्ते[3] (१४) ।

शूले विक्कन्ते पण्डवे शेदकेदू
पुत्ते[4] लाधाए लावणे इन्दउत्ते ।
आहो कुन्तीए तेण लामेण जादे
अश्शत्थामे[5] धम्मपुत्ते जडाऊ[6] (१५) ॥ ४७ ॥

विटः । मूर्ख चारुदत्तः[7] खल्वसौ ।

दीनानां कल्पवृक्षः स्वगुणफलनतः सज्जनानां कुटुम्बी
आदर्शः[8] शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः ।
सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो

---

[सोऽस्मदिति ।] प्रणयैः प्रार्थनाभिः स्नेहप्रकारैः । समयोचितदानैरित्यर्थ इत्येके ॥ ४६ ॥

शका०—[शूले विक्कन्ते] इत्यादि श्लोको वैश्वदेव्या वृत्तेन (१४) । कः स गर्भदासो गर्भदास्याः पुत्रः। (१५) शूरो विक्रान्तः पाण्डवः श्वेतकेतुः पुत्रो राधाया रावण इन्द्रदत्तः । आहो कुन्त्यास्तेन रामेण जातोऽश्वत्थामा धर्मपुत्रो जटायुः । इदं व्यर्थं विरुद्धार्थम् ।

---

१ शुष्कवाः D H. २ केश B (a). ३. गब्भदाशे गब्भदाशीए पुत्ते A B (bcd) D E F G I; गब्भदासीए पुत्ते J. ४ पुत्ते J. ५ अश्शत्थामं A B (c). ६ जडाउ F H. ७ आर्यचारु० B (bcd) C D E F G I J. ८ चादर्शः D H.

श्लोकः श्लाघ्यः स जीवत्यधिकगुणतया चो[1]च्छ्वसन्तीव चान्ये ४८
तदितो गच्छामः ।

शकारः । अ[2]गेण्हिअ व[3]शान्तशेणिअं (१६) ।

विटः । नष्टा वसन्तसेना ।

शकारः । [4]कधं विअ (१७) ।

विटः । अन्धस्य दृष्टिरिव पुष्टिरिवातुरस्य
मूर्खस्य बुद्धिरिव सि[5]द्धिरिवालसस्य ।
स्वल्पस्मृतेर्व्यसनिनः परमेव विद्या
त्वां प्राप्य सा रतिरिवारिजने प्र[6]नष्टा ॥ ४९ ॥

शकारः । अ[7]गेण्हिअ व[8]शान्तशेणिअं ण गमिश्शं (१८) ।

विटः । एतदपि न श्रुतं त्वया ।

आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यते ।
हृदये गृह्यते नारी य[9]दीदं नास्ति गम्यताम् ॥ ५० ॥

---

श्वेतकेतुरौद्दालकिर्दुर्वाससो मातुल ऋषिविशेषः । इन्द्रदत्तो बृहत्कथाप्र(?)लम्बके त्रि(त्रिं)शे संस्थितः ॥ ४७ ॥

[दीनानामिति ।] सज्जनानां कुटुबी उ(म्ब्यु)पजीव्यः ॥ ४८ ॥

शका०–(१६) अगृहीत्वा वसन्तसेनाम् ।

विटू०(विटः)–नष्टादर्शनं गता ।

शका०–(१७) कथमिव ।

[अन्धस्येति ।] ॥ ४९ ॥

(१८) अगृहीत्वा वसन्तसेनां न गमिष्यामि । [आलाने इति ।] यदिति चेदर्थे चेन्नास्ति तदा गम्यताम् ॥ ५० ॥

---

१ चो(?)च्छ्वसन्ती° K. २अगेण्हीअ D H; अगोह्निअ A. ३°वशन्तसे° B(?) वसन्तशे० H. ४ कथं B (d). ५.सिध्धि० H. ६ प्रविष्टा B (a). ७ °गेण्हिय H. ८ °सन्तसे० B (d). ९ यदिदं A B (bc) C D E F G I J.

शकारः । जइ[1] गच्छशि[2] गच्छ तुमं । हग्गे[3] ण गमिश्शं(१९)।

विटः । ऍवम्[4] । गच्छामि । इति निष्क्रान्तः ।

शकारः । गडे[5] क्खु भावे अभावे । विदूषकमुद्दिश्य । अले[6] काकपदमश्तशीशका[7] दुइटवडुअका[8] उवविश उववविश[9] (२०) ।

विदूषकः । उववेसिदा[10] जेव्व[11] अम्हे (२१) ।

शकारः । केण (२२) ।

---

शका०–(१९) यदि गच्छसि गच्छ त्वम् । अहं न गमिष्ये(ष्यामि) ।

शका०–(२०) गतः खलु भावोभावमदर्शनम् । अरे का[क]पदशीशमत्थका इति । धूर्ताद्यकार्यप्रवृत्तौ काकपदाकारा ये धूर्तास्तेषां शीर्षप्राया ग्रामण्यस्तेषा(षां) मस्तकभूत । धूर्तचक्रवर्तिनामपि प्रधानभूत । एतेनाचारकुलयोराक्षेपः कृतः । केचित्तु काकपदशीर्षः काकपदवच्छीर्षं मस्तकं यस्य यं चेत्युपलक्षणम् । अष्टकपालः । तेनालक्षणयुक्तमस्तक इत्यर्थ इत्यर्थ (?)इत्याहुः । अत्र च मते शीशमस्तक इति शकारवाणि(णी)त्वेन पुनरुक्तत्व न दोषः । दुष्टबटुकोपविश ।

विदू०–(२१) उपवेशिता एव अम्हे वयम् ।

शका०–(२२) केन ।

---

१ यदि B (abd) E F G I J K; अइ H. २ गश्चसि गश्च B (d), गच्छसि H; गश्छसि गच्छ K. ३ हगे A B (bcd) C D E F G I J; हग्जे K. ४ एवं गच्छामि J. ५ भावे गडे क्खु अ० D H. ६ अलेले B (d). ७ काकपदशीशमस्तका (= काकपदशीर्षमस्तका ?) A B (c) F I; °पदमश्चतशीशका B (a); °पदमस्तशीशका° B (bd); °शीशमत्थका C H J, काकपदमत्थकशीशका E; °मत्थशीशका G. ८ °दुइ° A B (ac) E G I; °दुष्ट° B (bd) F; °वडुआ० H; दुट्टवडुका J; अलेले दुश्टवडुका K. ९ om: D F also H. which has °शिश०(?). १० उपवेसिता B (d); उववेसिदा D. ११ ज्जेव C D J; ज्जेव्व E; एव्व H.

विदूषकः। क[1]अन्तेण (२३)।

शकारः। तां[2] उट्ठेहि उट्ठेहि[3] (२४)।

विदूषकः। उट्ठिस्सामो (२५)।

शकारः। कदा (२६)।

विदूषकः। [4]जदा पुणो वि देव्वं अणुऊलं भविस्सदि (२७)।

शकारः। अले लोद लोद (२८)।

विदूषकः। रोदाविदा[5] [6]जेव्व अम्हे (२९)।

शकारः। केण (३०)।

विदूषकः। [7]दुग्गदीए (३१)।

---

विदू०—(२३) कृतान्तेन।

शका०—(२४) उत्तिष्ठोत्तिष्ठ।

विदू०—(२५) उत्थास्यामः।

शका०—(२६) कदा।

विदू०—(२७) यदा पुनरपि दैवमनुकूलं भविष्यति।

शका०—(२८) अरे रो(रु)दिहि रो(रु)दिहि।

विदू०—(२९) रोदाविदा इति रोदायि(दि)ता इत्यप्रयत्नमसंस्कृते रोदनं कारिता इत्यर्थः। एव वयम्।

शका०—(३०) केन।

विदू०—(३१) दुर्गत्या।

---

१ किदंतेण D. H. २ om. A B (bcd) C D E F G. ३ om. A B (bc) D F H I; उच्छेहिं B (d); उट्टेहि E. ४ यदा B (d). ५ लोदाविदा D. ६ ज्जेव C J; एव्व DH. ७ दुग्गादिए H.

शकारः । अले हश हश (३२) ।

विदूषकः । हसिस्सामो (३३) ।

शकारः । कदा (३४) ।

विदूषकः । पुणोवि रिद्धीए[1] अज्ज[2]चारुदत्तस्स (३५) ।

शकारः । अले[3] ले दुश्ट[4]वडुका[5] भणेशि[6] मम[7] वअणेण तं दलिद्दचालुदत्तकं[8] । एशा शशुवण्णा शहिलण्णा णवणा[9]डअदंशणुट्ठिदा शुत्तधालिव्व[10] वशन्तशेणिआ[11] णाम गणिआ[12]दालिआ[13] कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता[14]

---

शका०–(३२) अरे हस हस ।

विदू०–(३३) हसिष्यामः ।

शका०–(३४) कदा ।

विदू०–(३५) पुनरपि ऋद्ध्या चारुदत्तस्य ।

शका०–(३६) अरे रे दुष्टबटुक भणिष्यसि मम वचनेन तं दरिद्रचारुदत्तकम् । एषा ससुवर्णा सहिरण्या नवनाटकदर्शनेशिता (?) सूत्रधारीव वसन्तसेना नाम्नी गणिकादारिका कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्तास्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा । तद्यदि मम हस्ते स्वयमेव पट्ठाविअ प्रस्थाप्य । प्रस्थापनं कारयित्वेत्यर्थः । एनां समर्पयसि ततोधिकरणे व्यवहारं विना । इत्यनेन

---

१ ऋद्धीए AB (abcd) CEFIJ; रित्थिए H. २ अज्ज om. AB (cd) DEFGI. ३ अले अले DH. ४ दुट्ठ AB (bcd) CDEFGHJ; दुष्ट B (a); दुछ H. ५ बडुका AB (c); वडवका B (d); वडुव्वका B(d); बडुका F; वडुवका G; वडुव्वका H. ६ भणाशि B (a) D. ७ °मे° C. ८ °रुदत्तकं AB (abe) FI; °रुदत्ताकं B (d) EG; दत्तअ Also H which has दत्तज्जं (?). ९ णवणालअ° B (a) K. १० °धालिणिव्व D H. ११ °शेणा° AB (bcd) CDEFGJ. १२ गणिआ H. १३ °दिआ B (a). १४ लत्ता H.

अम्हेहिं बेल्लक्कालाणुणीअमाणा[1] तुह[2] गेहं पविश्टा[3]। मम हश्ते[4] शाअं ज्जेव्व[5] पट्टाविअ एणं शामप्पेशि तदो अधि[6]अ-लणे ववहालं[7] विणा लहुं[8] णिज्जादमाणाह तव मए अणुबद्धा पीदी हुविश्शदि। आदु अणिज्जादमाणाह[9] आमलणन्तिके[10] वेल्ले[11] हुविश्शदि। अवि अ पेक्ख पेक्ख[12] (३६)।

ककालुका[13] गोच्छडलित्तवेण्टा[14]
शाके अ शुक्खे[15] तलिदे हु मंशे।
भत्ते[16] अ हेमन्तिअलत्तिशिद्धे[17]
लीणे अ वेल्ले णं[18] हु होदि पूदी(३७)॥५१॥

---

व्यवहारनाम्नो नवमाङ्कस्य सूचनम्। लघु शीघ्रम्। णिज्जादमाणाह निर्यातयतः। वसन्तसेनां निःसारयत इत्यर्थः। प्राकृते कुतः शानच् संस्कृतेत्र दुर्लभः। माणाहेति षष्ठ्यन्तं यथापूर्वमुक्तम्। चारुदत्त-स्येत्यत्र चालुदत्ताहेति समूह्यम्। एवमेवात्र सर्वत्र। तव मयानु-बद्धा प्रीतिर्भविष्यति। आदु अथवा। अणिज्जादमाणाहानिर्यातयतः। आमरणान्तिकं वैरं भविष्यति। अपि च प्रेक्षस्व प्रेक्षस्व।

[ककालुका इत्यादि।] उपजातिच्छन्दसा पद्यम्। कूष्माण्डी गोमयलिप्तवृत्ता(न्ता) शाकं च शुष्कं तलितं खलु मांसम्। तलिदं स्नेहपक्वे देशीत्येके। भक्तं च हैमन्तिकरात्रिसिद्धं लीणे अ वेल्ले इति लीनायां च वेलायाम्। गते समय इत्यर्थः। लीणे वेले इति*

---

१ °क्कारा॰ AB (bc) DFJ; °क्काआणुणीआणा (?) B (d). २ तुअ AB (bc) EGI. ३ °विट्ठा A B (c) CDEFG; पविश्श्ष्टा B(a); पविटा B(b); °विष्टा pr. m. s. श्वा (?) Corr. ट्ठा B (d) °ट्टा° J. ४ हत्थे AB (abc) CDEFGI, हच्छे H; हश्छे K. ५ जेव्व AEFG; ज्जेव C; एव D H. ६ अधिआलिणे E. ७ ववहातिवं B (a); व्ववहालं D H. ८ लहु D H. ९ अणिज्जामाणह B (d). १० °पंतिए DH. ११ वैले B (ab) E. १२ om. B (a) पेश्छ पेश्छ B (d). १३ °लुआ D. लुअ (?) H. १४ °गोछलित्त॰ B (a), गोघड S; °व्वड° (?) B (d). १५ शुक्खे व तलिदे अ हु मंशे B (a); भडिदे हु मश्शे B (d). १६ भत्तेहि D. १७ सिद्धे B(d). १८ ण दु or दु B (a).

[1]शोहेकं भणेशि। [2]लेहुकं भणेशि। [3]तधा भणेशि जधा [4]हग्गे अत्तणके[5]लिकाए पाशादबालग्गकवोद[6]वालिआए [7]उवविश्टे [8]शुणिश्शं। [9]तधा जदि ण भणेशि [10]तॉ कवालतल[11]प्पविश्टं [12]कवित्थं विअ [13]मत्तअं दे मडमडाइश्शं (३८)।

विदूषकः। [14]भणिस्सं (३९)।

---

पुंलिङ्गं शकारवचनत्वेन न दोषः। अतः पूर्वमेवोक्तम्। 'आगमलिङ्गविहीनम्' इत्यादीति ध्येयं सुधीभिः। न खलु भ(व)ति पूती पूतिर्दुर्गन्धतापि तु भवत्येवेति काकुः। चिरंतनत्वेन प्रशिथिलं स्वकार्यम्॥ ५१॥

(३८) शोह्निकं स्वस्तिकं शोभनं भणिष्यसि। लघुकं भणिष्यसि। तथा भणिष्यसि। भणेशीति भविष्यवर्तमानयोस्तुल्यं रूपम्। यथाहमात्मनः केलिकायां(?) प्रासादबालाग्रकपोतपालिकायां विटङ्के। 'बालाग्रं मत्तवारणम्'। कपोतपालिकोपरिगृहश्रेणीति दक्षिणापथे लोकोक्तिरियमिति प्राचीनटीका। उपविष्टः शृणोमि। अन्यथा यदि न भणसि तदा कपाटतलप्रविष्टं कपित्थगुलिकमिव मस्तकं तव शाब्दविशेषयुक्तं तथा भक्षयिष्यामि यथा लोकोक्त्या मडमडाइश्शमिति व्याख्यायते।

विदू०—(३९) भणिष्यामि।

---

१ शोह्निकं A B (c); शोण्डकं ? pr. m. corr. शोस्तकं B (d); शोणुकं K; शोणुकं B (a), शोह्निक C; शोहुकं E. २ लघुकं B (a); लटुकं B (b), लस्तकं B (d) del. syl. स्त et in marg. add खु B (d); लहुअं DH; लखुकं. K. ३ तथा B (d) K. ४ हगे AB (bcd) CDEFGIJ. ५ °लिआए DH; केलीकाए I. ६ वाडिआए AB (abcd) DEFGI. ७ °विट्ठे AB (c) CDFGJ; उबविश्ले B (a). ८ शुणामि AB (bcd) CDEFGIJ. ९ अण्णधा AB (bcd) CDEFG; अण्णधा दि H. १० तो B (a). ११ पविट्ठ AB (c); पविट्टं B (a), °विट्ट B (b); °पविश्टं B (d). १२ कविस्थ गुडिअं AB (bcd) EFGIJ कविट्ठं गुडिअं D. also H which has बिट्ठ. १३ मत्थअं AB (c) CDFGIJ; मस्तकं B (ad) K; मस्तअं B (b). १४ भाणिस्सं भणिस्सं G

शकारः । अपवार्य । [1]चेडे [2]गेडे शच्चकं [3]उज्जेव्व भावे (४०)।

चेटः । अध इं (४१) ।

शकारः । ता शिग्घं [4]अवक्कमम्ह (४२) ।

चेटः । ता [5]गेण्हदु [6]भश्टके अशिं (४३) ।

शकारः । तव [7]उज्जेव्व [8]हश्ते [9]चिश्टदु (४४) ।

चेटः । एशो [10]भश्टालके गेण्हदु णं [11]भश्टके अशिं (४५)।

शकारः । विपरीतं गृहीत्वा ।

---

शका०–(४०) हे चेट गतः सत्यमेव भावो विटः ।

चेटः–(४१) अथ किम् ।

शका०–(४२) ततः शीघ्रमपाक्र(क्रा)माव: ।

चेटः–(४३) तद्गृह्णातु भट्टारकोऽसिम् ।

शका०–(४४) तवैव हस्ते तिष्ठतु ।

चेटः–(४५) एषोऽसिः । भट्टारकः स्वामिको । गृह्णात्वेनं भट्टारकोऽसिम् ।

शका०–[णिव्वक्कलमित्यादि ।] उपजातिच्छन्दसा [पद्यम्] ।

---

१ चेड B (ab) K. २ om. B (b). ३ ज्जेव C; जेव्व A F G; एव्व D H. ४ अवक्कह्म G. ५ गह्णे A B (bc) D E F G I, गेह्लमं B (a). ६ भट्टके A B (c) C D F G I J; भट्टशे B (a); भट्टकें B (b), Same. del A et-add in marg. श्ट B (d). ७ ज्जेव C; एव्व D H; जेव्व E F G I. ८ हस्ते A B (bcd) E F I; हत्थे B (a) C D G H J. ९ चिट्ठदु A B (c) D F G J; चिष्टदु B (abd) C; चिठ्ठदु J; चिष्टतु K. १० भट्टारहके A B (c) F I; भट्टाळके B (a) C; भैट्टाहरके B (b); भट्टाहके B (d) E, भट्टारके D; भश्टालहशामिके K. ११ भट्टके A B (c) C D F G I J; भट्टके B (abd); भट्टाहके G; मं भट्टके K.

णिव्वक्कलं मूलकपेशिवण्णं
खन्धेण घेत्तूण अ कोशिशुत्तं[1] ।
कुक्केहिं[2] कुक्कीहिं[3] अ बुक्कअन्ते[4]
जधा शिआले शलणं पलामि(४६)॥९२॥

परिक्रम्य निष्क्रान्तौ ।

विदूषकः । भोदि[5] रदणिए णं हु[6] दे अअं अवमाणो तत्थ-[7] भवदो चारुदत्तस्स णिवेदइदव्वो[8] । दोग्गच्चपीडिअस्स[9] मण्णे दिउणदरा पीडा हुविस्सदि[10] (४७) ।

रदनिका । अज्ज[11] मित्तेअ रदणिआ[12] खु[13] अहं संजद-मुही (४८) ।

---

( ४६ ) निर्वल्कालनिरुच्यालं इत्यर्थः(?)(णिव्वक्कलं निर्वल्कलमित्यर्थः) । मूलकपेशिवष्य(ण्ण)म् । पेशिस्त्वक् । मूलकत्वग्वर्णमालोहितमित्यर्थः । स्कन्धेण घेत्तूण गृहीत्वा च कोशसुप्तम् । कोशावस्थितमित्यर्थः । कुक्कुरैः कुक्कुरीभिश्च बुक्कअन्ते शब्दायमानो यथा शृगालः शरणं गृहं प्रयाति तथा स्वगृहं प्रयामि ॥ ९२ ॥

विदू०—(४७) रदनिके न खलु तेयं कुक्कुरकुक्कुरीस्थाने यः कृतः शकारेण केशग्रहणेन कृतश्चापमानस्तत्रभवतः पूज्यस्येत्यर्थः । चारुदत्तस्य निवेदयितव्यः । दौर्गत्यपीडितस्य मन्ये द्विगुणतरा पीडा भविष्यति ।

रद०—(४८) आर्य मैत्रेय रदनिका खल्वहं संयतमुखी ।

---

१ कोशिशुत्तं K. २ कुक्केहि B (bd) C E; °क्केहीं H. ३ कुक्कीहि B (bd) C E; कुक्कीहीं H. ४ भुक्कअन्ते B (ab) K; बुक्कभंते H. ५ भो रद० G. ६ ण हु B (a); ण क्खु J. ७ °भोदो° D H. ८ णिवेदायिदव्वो B (d); °णिव्विद° H. ९ दोगच्च H. १० हुविश्शदि B (d). ११ om: B (a). १२ रअणिआ A B (bc) E G; रणिआ B (d). १३ क्खु C D F.

विदूषकः। एवं[1] णेदं[2] (४९)।

चारुदत्तः। वसन्तसेनामुद्दिश्य। रदनिके मारुताभिलाषी[3] प्रदोषसमयः[4]। शीतार्तो रोहसेनः। ततः[5] प्रवेश्यतामभ्यन्तरमयम्[6]। अनेन प्रावारकेण[7] छादयैनम्। इति प्रावारकं[8] प्रयच्छति।

वसन्तसेना। स्वगतम्। कधं[9] परिअणो[10]त्ति मं अवगच्छदि। प्रावारकं[11] गृहीत्वा समाघ्राय च स्वगतं सस्पृहम्। अम्महे[12] जादीकुसुमवासिदो पावारओ[13] अणुदासीणं से जोव्वणं[14] पडिहा[15]सेदि (५०)। अपवारितकेन प्रावृणोति।

चारुदत्तः। ननु रदनिके रोहसेनं गृहीत्वाभ्यन्तरं प्रविश[16]।

---

विदू०—(४९) एवं णेदमित्येवार्थे। एवमेवेत्यर्थः।

चारु०—रोहसेनश्चारुदत्तसुतः।

वस०—(५०) कथं परिजन इति मामवगच्छति जानातीत्यर्थः। अम्महे विस्मये। जातीकुसुमवासितः प्रावारकः। अनुदासीनं साभिलाषम्। तदनुरूपचेष्टायोगात्। से अस्य। यौवनं प्रतिभासते।

---

१ एव्वं C G H J. २ णेदं A B (cd) F. ३ तानभिलाषी D H. ४ °समयशीतार्तो A B (bc) C D F H I; सीतार्तो H. ५ ततश्च B (a). ६ अभ्यन्तरयम् (?) B (a). ७ प्रावरकेण B (bd) E. ८ प्रावरकं B (bd) E K, प्रावारं H. ९ कथं H. १० °जणोत्ति° A B (bcd) D F I; °जनोत्ति H. ११ प्राकारकं (?) B (b); प्रावरं B (d); प्रवारकं H. १२ आह्म (म्ह also) हे B (d) D H १३ पावरओ B (bd) E; पवारओ H. १४ जोव्वणं D F G I. १५ परिहा° D, परिह° H. १६ प्रविशा et-sec-m-add य B (d); प्रविश्य H.

**वसन्तसेना** । स्वगतम् । मन्दभाइणी खु[१] अहं तुह[२] अब्भन्तरस्स (५१) ।

**चारुदत्तः** । ननु रदनिके प्रतिवचनमपि नास्ति । कष्टम् ।

> यदा तु भाग्यक्षयपीडितां दशां
> नरः कृतान्तोपहितां[४] प्रपद्यते ।
> तदास्य मित्राण्यपि यान्त्यमित्रतां
> चिरानुरक्तोपि विरज्यते जनः ॥ ५३ ॥

उपसृत्य[५] रदनिका विदूषकश्च ।

**विदूषकः** । भो इअं[६] सा रअणिआ[७] (५२) ।

**चारुदत्तः** । इयं सा रदनिका । इयमपरा का ।

> अविज्ञातावसक्तेन दूषिता मम वाससा ।

**वसन्तसेना** । स्वगतम् । णं भूसिदा (५३) ।

---

वस०–(५१) मन्दभागिनी खल्वहं तवाभ्यन्तरस्य अभ्यन्तरगमनस्याभागिनी । वेश्यात्वात् । भाग्यं शोभनं कर्म ।

[चारु०–] [यदा त्विति] ॥ ५३ ॥

विदू०–(५२) भो इयं सा रदनिका ।

चारु०–[अविज्ञातेति] दूषिता परपुरुषत्वात् ॥ ५४ ॥

वस०–(५३) णं ननु भूषिता ।

---

१ क्खु C D F H J. २ तुम्ह A B (c) E F G I; °तुहे° C J; °तुम्हन्भे° B (d); म्हे अभ्भं H, तुव अब्भं K. ३ तुने (?) B (a). ४ °न्तोपिहितां K. ५ विदूषकः रदनिकामुपसृत्य J. ६ om. B (d). ७ रदणिआ C J.

**चारुदत्तः** ।

छादिता शारदभ्रेण चन्द्रलेखेव रा[1]जते ॥ ५४ ॥

अथवा न युक्तं परकलत्रदर्शनम् ।

**विदूषकः** । भो अलं परक[2]लत्तदं[3]सणसङ्काए । एसा वसन्तसेणा कामदेवाअदनुज्जाणादो पहुदि भवन्तमणु[4]रत्ता (५४) ।

**चारुदत्तः** । अये इयं वसन्तसेना । स्वगतम् ।

यया मे जनितः कामः क्षीणे विभवविस्तरे ।
क्रोधः कुपुरुषस्येव स्वगात्रेष्वेव सीदति ॥ ५५ ॥

**विदूषकः** । भो[5] वअस्स एसो क्खु रा[6]असालो भ[7]णादि (५५) ।

**चारुदत्तः** । किम् ।

**विदूषकः** । एसा[8] ससुवण्णा सहिलण्णा णवणाडअदंसणु[9]ट्ठिदा सुत्तधा[10]लि व्व वसन्तसेणा णाम गणिआदालिआ का-

---

विदू०–(५४) भो अलं परकलत्रदर्शनशङ्कया । एषा वसन्तसेना कामदेवायतनोद्यानात्प्रभृति भवन्तमनुरक्ता ।

चारु०–[ययेति ।] सीदति कर्तव्यासामर्थ्यात्प्रव्यक्तो न भवति ॥ ५५ ॥

विदू०–(५५) भो वयस्य एष खलु राजश्यालो भणति ।

विदू०–(५६) एषा ससुवर्णा सहिरण्या नवनाटकदर्शनेशिता (?)

---

१ दृश्यते A B (b c) C D E F G H I J; वर्तते B (d). २ कलाप्र [?] G. कलत्र J. ३ °दणु° D. ४ °मणुलत्ता° B (a). ५ भो वअस्स om: E. ६ °सालसंठाणो° B (a); °अशालो B (d). ७ भणदि B (a). ८ °एसा क्खु समुण्णासहिलाण्णा° B (a). ९ °सणुष्ठिदा° A B (c). १० °धालिणिव्व D. H.

मदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता[1] अम्हेहिं[2] बलक्कारा[3]णुणीअमाणा तुह गेहं[4] पविट्ठा[5] (५६)।

वसन्तसेना। स्वगतम्। बलक्काराणुणीअमाणेत्ति[6][7] जं सच्चं अलंकिदम्हि[8] एदेहिं अक्खरेहिं (५७)।

विदूषकः। ता जइ मम हत्थे सअं ज्जेव्व[9] पट्ठाविअ[10] एणं समप्पेसि तो[11] अधिअरणे[12] ववहारं[13] विणा लहुअं[14] णिज्जादेमाणाह[15] तव मए अणुबद्धा[16] पीदी हुविस्सदि। अण्णधा[17] आमरणं[18] वेरं[19] हुविस्सदि (५८)।

सूत्रधारीव वसन्तसेना नाम गणिकादारिका कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्तास्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा।

वस०-(५७) बलात्कारानुनीयमानेति यत्सत्यमलंकृतास्म्येतैरक्षरैः। अलंकृतास्मीति ममान्यत्राभिलाषो नास्तीत्यर्थः।

विदू०-(५८) तद्यदि मम हस्ते स्वयमेव प्रस्थाप्यैनां समर्पयसि ततोधिकरणे व्यवहारं विना लघुकं निर्यातयतस्तव मयानुबद्धा प्रीतिर्भविष्यति। अन्यथामरणं वैरं भविष्यति।

---

१ अणुलत्ता A B (bcd) C D E F G H J. २ अह्मेहिं D. ३ बलकालाणु° B (a) C; वबलक्काराणु० B (d); बलत्काराणु० F. ४ गे om. हं B (a)? ५ पविच्चिश्शा B (a). ६ omit: B (ab). ७ °माणत्ति B (a); माणं त्ति B (b)? ८ अलं किदं ह्मि [?] B (abd). ९ ज्जेव C; एव्वं D; जेव्व F G. १० पश्चाविअ B (d); पश्ठाविअ K. ११ तदो C J. १२ अधिअलणे B (a) C J. १३ ववहालं B (ad) C J, व्ववहालं F H. १४ लहुं C J. १५ °माणह B (d) १६ सं अणुबद्धा B (a). १७ अण्णहा D. १८ आमलणं D E F G I; °मलणं C J. १९ वैलं B (ad); वेलं B (b) D E F G I; वेलम्तिके C J.

**चारुदत्तः।** सावज्ञम्। अज्ञोसौ। स्वगतम्। अये[१] कथं देवतोपस्थानयोग्या युवतिरियम्। तेन खलु तस्यां वेलायां

प्रविश गृहमिति प्रतोद्यमाना
न चलति भाग्यकृतां दशामवेक्ष्य।
पुरुषपरिचयेन च प्रगल्भं
न वदति यद्यपि भाषते बहूनि॥ ५६॥

प्रकाशम्। भवति वसन्तसेने अनेनाविज्ञानादपरिज्ञातपरि-[२]जनोपचारेणापराद्धोऽस्मि[३]। शिरसा भवतीमनुनयामि[४]।

**वसन्तसेना।** एदिणा[५] अनुचिदभूमिआरोहणेण[६] अवरद्धा[७] अज्जं सीसेण[८] पणमिअ[९] पसादेमि (५९)।

**विदूषकः।** भो दुवेवि तुम्हे सुसंपण्णा[१०] विअ कलमकेदारा

---

चारु०—देवतेवोपस्थानं यस्याः सा। [प्रविश गृहमिति।] पुष्पिताग्रा छन्दः॥ ५६॥

वस०—(५९) एतेनानुचितभूमिकारोहणेनापराद्धार्थं शीर्षेण प्रणम्य प्रसादयामि। अनुचितभूमिकारोहं(ह)णं पक्षद्वारेण वासप्रवे-शादिकम्।

विदू०—(६०) भो द्वावपि युवां सुखं प्रणम्य कलमकेदारा-वन्योन्यं शीर्षेण शीर्षं समागतौ। अहमप्यनेन करभजानुसदृशेन

---

१ अयं [?) B (d); अए K. २ आविज्ञात B (d). ३ °वरद्धो° K. ४ °मनुयामि B (b). ५ एदिणा क्खु अणु° B (a). ६ भूमिअ°? H. ७ °णारवज्झा A B (c) C D F I; णअरज्झा J; णवरद्धा K. ८ शीशेण A B (abc); सिसेण H I. ९ पणमामिअ B (d); पणामिअ H. १० सुसंपुण्णा विअ B (a); सुखं पणमिअ A B (bc) C D E F G H I J; संपूण्णा विअ K.

अण्णोण्णं सीसेण सीसं समागदा । अहं पि इमिणा करहजाणुसरिसेण सीसेण दुवेवि तुम्हे पणमिअ पसादेमि उट्ठेधत्ति (६०)।

चारुदत्तः । भवतु । तिष्ठतु प्रणयः ।

वसन्तसेना । स्वगतम् । चदुरो मधुरो अ अअं उवण्णासो । ण जुत्तं अज्ज ईदिसेण इध आअदाए मए पडिवसिदुं । भोदु एव्वं दाव भणिस्सं । प्रकाशम् । अज्ज जइ एव्वं अहं अज्जस्स अणुगेज्झा ता इच्छे अहं इमं अलंकारअं अज्जस्स गेहे णिक्खिविदुं । अलंकारस्स णिमित्तं एदे पावा अणुसरन्ति (६१) ।

शीर्षेण द्वावपि युवां प्रसादयाम्युत्तिष्ठथ(तम्) इति । कलमाः शालयस्तेषां केदाराः क्षेत्राणि । समागतौ मिलितौ । प्राकृते नास्ति द्वि[व]चनम् । अत एव न भाषायाम् । प्राकृतस्य भाषात्वात् । करभ उष्ट्रशिशुः ।

चारु०—प्रणय इत्यनेन संभोगप्रार्थना । कूटाक्षिप्ता (?) (कटाक्षिता) ।

वस०—(६१) चतुरो मधुरश्चायमुपन्यासः । न युक्तमद्येदृशेनेहागतया मया प्रतिवसितुम्(वस्तुम्) । भवत्वेवं तावद्भणिष्ये भ[णि]ष्यामीत्यर्थः । इ(ई)दृशेनेत्यगृहीतसंभोगोपकरणादिनेत्यर्थः ।

१ समाअदा A B (bc) C D E F G H I J. २ अहं वि D. ३ करहजासरि? B (b). ४ सेरिसेण A B (c) F I. ५ om. A B (bc) C D E F G I J; पणामिअ K. ६ पसादो (?) B (b). ७ °धसुत्ति B (a); °त्थेधत्ति B (d); °त्थेधत्ति K. J adds after this इति उत्तिष्ठति. ८ om. DH. ९ जइ (?) B (a). १० एरिसेण C E J; इदिसेण H. ११ इह D H. १२ मये B (a). १३ एवं B (a) om: K. १४ भणइस्सं B (a). १५ अज्जविश A B (c) F I. १६ अणुगेच्छाका B (a); अणुगेज्झा A B (bc) E G; अणुग्गेज्झा J; अणुग्गहवदी D F-H; अणुगेह्लिता K. १७ om. B (a). १८ अलंकारं B (d). १९ अज्जगेहे D F H. २० अलंकारणिमित्तं G. २१ अणुसरंदि D H.

चारुदत्तः । अयोग्यमिदं न्यासस्य गृहम् ।

वसन्तसेना । अज्ज अ[1]लिअं । पु[2]रिसेसु णासा णि[3]क्खिविअन्ति ण उण गेहेसु (६२) ।

चारुदत्तः । मैत्रेय गृह्यतामयमलंकारः ।

वसन्तसेना । अ[4]णुगहिदम्हि (६३) । इत्य[5]लंकारानर्पयति ।

विदूषकः । गृहीत्वा । सोत्थि भो[6]दिए (६४) ।

चारुदत्तः । धिङ्मूर्ख न्यासः खल्वयम् ।

---

प्रकाशम् । आर्य यद्येवमहमार्यस्य अणुगेज्झानुग्रहवतीत्यर्थः । आर्यसंबन्ध्यनुग्रहपात्रमिति विशिष्टार्थः । ता तदेत्यर्थः । इच्छे इच्छामि । अहमिममलंकारकमार्यस्य गेहे निक्षेप्तुम् । अलंकारस्य निमित्तमेते पापा अनुसरन्ति । एते शकारविटादयः । पापा अकार्यकारिणः ।

चारु०—इदमस्मदीयं गृहं न्यासस्यालंकारन्यासस्यायोग्यम् । भग्नत्वाद्रक्षकाभावाच्चायोग्यता ।

वस०—(६२) अलीकं मिथ्या । भवता यदयोग्यमित्युच्यते तदलीकमित्यर्थः । पुरुषेषु न्यासा नि[क्षि]प्यन्ते न पुनर्गेहेषु ।

वस०—(६३) अनुगृहीतास्मि । अत्यन्तप्रश्रयवत्त्वादनुग्रहः ।

विदू०—(६४) स्वस्ति भवत्यै । अयं परिहास इति ज्ञेयं विज्ञैः ।

१ अलीअं B (a) J. २ पुरुसेसु A B (bc) C E F J; पुलिसेसु D H. ३ णिक्खिअन्ति D. ४ अणुगिहिदंह्मि B (a); दह्मि K, अणुग्गहिदम्हि J. ५ अलंकारं C J. ६ भवदीए B (d) K.

विदूषकः । अपवार्य । जइ एव्वं[1] ता चोरेहिं अवहरीअदु[2] (६५) ।

चारुदत्तः । अचिरेणैव कालेन ।

विदूषकः । एसो से अम्हाणं विण्णासो[3] (६६) ।

चारुदत्तः । निर्यातयिष्ये ।

वसन्तसेना । अज्ज इच्छे अहं इमिणा अज्जेण अणुगच्छिज्जन्ती[4] सकं गेहं गन्तुं (६७) ।

चारुदत्तः । मैत्रेय[5] अनुगच्छ तत्रभवतीम् ।

विदूषकः । तुमं ज्जेव्व[6] एदं कलहंसगामिणीं[7] अणुग-

---

विदू०—अपवार्य । तृतीयादावप्रभृति(?) द्वाभ्यामन्योन्यं मन्त्रणेपवार्येति संकेतः । द्वाभ्यामित्युपलक्षणम् । (६५) यद्येवं तदा चौरैरपह(ह्रि)यतामिति । चोरेहिं अवहरीअदु इति संधिच्छेदनाम्नस्तृतीयाङ्कस्य सूचनम् ।

विदू०—(६६) एष सेस्या अस्माकं विन्यासः । एषोस्या वसन्तसेनाया अलंकारविन्यासः । अस्माकमित्यर्थः । परिहसतीति भावः ।

वस०—(६७) आर्य इच्छाम्यहमनेनार्येण सहेति शेषः । अणुगच्छिज्जन्ती अनुगम्यमानेत्यर्थः । सकं स्वकम् । गेहं गन्तुम् । अनेन मैत्रेयेणेत्यर्थः ।

---

१ एवं B (d); अ एव्वं ? H. २ °हरीअदुत्ति॰ D F H I; त्ता हरिअदु. ३ विणासो A B (a); वि णासो? B (d). ४ °गच्छन्ती B. (a). ५ om: B (a). ६ ज्जैव C E G; एव्व D. ७ गामिणीमणु A B (hcd).

च्छन्तो राअहंसो विअ सोहसि । अहं उण बम्हणो तहिं [2]जणेहिं [3]चउप्पहोवणीदो विअ उवहारो कुक्कुरेहिं विअ खज्ज-माणो [4]विवज्जिस्सं (६८) ।

चारुदत्तः । एवं भवतु । स्वयमेवानुगच्छामि [5]भव-तीम् । तद्राजमार्ग[6]विश्वासयोग्याः प्रज्वाल्यन्तां प्रदीपिकाः ।

विदूषकः । [7]वड्ढमाणआ [8]जालेहि [9]पदीविआओ (६९) ।

चेटः । जनान्तिकम् । [10]अले तेल्लेण [11]विणा पदीविआओ [12]पज्जालीअन्ति (७०) ।

विदूषकः । जनान्तिकम् । भो ताओ क्खु अम्हाणं

---

विदू०-(६८) तत्रमेवैतां कलहंसगामिनीमनुगच्छन्राजहंस इव शोभसे । अहं पुनर्ब्रा(र्ब्रा)ह्मणो यत्र तत्र जनैश्चतुष्पथोपनीत इवो-पहारः कुक्कुरैरिव खाद्यमानो विपत्स्ये । जनैः खाद्यमान इत्यन्वयः(?)। उपहारो देवताबलिः ।

विदू०-(६९) वर्धमानक प्रज्वालय प्रदीपिकाः । वर्धमान-कश्चारुदत्तस्य दासः । अयमेव चेटः ।

चेटः-(७०) अरे तैलेन विना प्रदीपिकाः प्रज्वाल्यन्ते ।

विदू०-जनान्तिकमित्येकान्ते ।

---

१ तहिं B (a) K, जहि तहिं A B (bc) C D E. २ जणेहि B (a); om: B (b). ३ °प्पहोपणीदो B (a); °ऊपाहोब° B (b), °उप्पवहो° B (d), °बाणिदो° D H. ४ विबाज्झिस्सं pr. m B (d). ५ तत्रभवतीं (divided and undivided) A B (c) and C D F. ६ विश्वास om: B (a). ७ वड्ढमाणअ A B (c) CD E F G H I J. ८ पज्जालेहि A B (bc) C D E J. ९ °पिआओ D. १० आले H. ११ वीणा H. १२ °ज्जालीयन्ति A B (c) C; °लियन्ति° D I; °जालिआंति H.

पदीविआओ अवमाणिदणिद्धणकामुआ विअ गणिआ णिस्सिणेहाओ दाणिं संवुत्ता (७१) ।

चारुदत्तः । मैत्रेय भवतु । कृतं प्रदीपिकाभिः । पश्य ।

> उदयति हि शशाङ्कः कामिनीगण्डपाण्डु-
> ग्रहगणपरिवारो राजमार्गप्रदीपः ।
> तिमिरनिकरमध्ये रश्मयो यस्य गौराः
> स्रुतजल इव पङ्के क्षीरधाराः पतन्ति ॥ ५७ ॥

उत्थाय सानुरागम् । भवति वसन्तसेने इदं भवत्या गृहम् । प्रविशतु भवती । वसन्तसेना सानुरागमवलोकयन्ती निष्क्रान्ता ।

चारुदत्तः । वयस्य गता वसन्तसेना । तदेहि । गृहमेव गच्छावः ।

---

(७१) भो ताः खल्वस्माकं प्रदीपिका अवमानितनिर्धनकामुका इव गणिका निःस्नेहा इदानीं संवृत्ताः । स्नेहे(हो)नुरागस्तैलं च ।

चारु०—भवत्वित्य(त्यु)पसंहारोक्तिः । प्रदीपिकाभिः कृतं पर्याप्तं व्यर्थमिति भावः । 'युगपर्याप्तयोः कृतम्' इत्यमरः । अत एवाह ।

[उदयतीति ।] हीत्याश्चर्ये । अस्य शशाङ्कस्य । तमोवृन्दमध्ये शुभ्रा रश्मयः पतन्ति यथा स्रुतं जलं यस्मात्तादृशे प्रशिथिले इत्यर्थः । पङ्के दुग्धधाराः । पङ्कस्य तमोवन्नीलतया स्रुतजल इति

---

१ अविमाणिद° B (d). २ °णिद्धण° D ; °णिद्धनं E; णिद्धणं G. ३ °अ ग° B (d); विआ H. ४ गणिआओ D H. ५ णिस्सणेहाओ B (b) E G. ६ संवुत्ताओ B (ab); संवुत्ता H; णि वुत्ताओ K. ७ om: B (a); भवतु भवतु B (d). ८ दीपिकाभि. B (a). ९ स्रुत इव जलं(ल)पङ्के B (b) E. १० om: A B (c) C D H I J. ११ °रागं पश्यन्ती . . . . . वसन्तसेना B (a).

राजमार्गो हि शून्योऽयं रक्षिणः संचरन्ति च ।
वञ्चना परिहर्तव्या बहुदोषा हि शर्वरी ॥ ५८ ॥

परिक्रम्य । इदं च सुवर्णभाण्डं रक्षितव्यं त्वया रात्रौ वर्ध- 665
मानकेनापि दिवा ।

विदूषकः । जधा भवं आणवेदि (७२) ।

इति निष्क्रान्तौ ।

इति मृच्छकटिकायामलंकारन्यासो नाम प्रथमोऽङ्कः ।

---

विशेषणेन दुग्धधारासंपातघातभिदुरत्वं झटिति प्रतीयते । एवमेवोपमेयभूततमसः शशाङ्ककिरणसंपर्कमात्रेणैव विनश्यदवस्थत्वमवगम्यते । तथा च प्रदीपिकाप्रज्वालनप्रयासोऽन्यथासिद्ध इति भावः ॥ ५७ ॥

[राजमार्ग इति ।] ॥ ५८ ॥ रक्षितव्यमिति त्वया मैत्रेयेण । चारुदत्तगृहे रात्रिशयननियमात् । दिवा वर्धमानकेन रक्षितव्यम् । भृत्यत्वेन दिवापि विद्यमानत्वादिति भावः ।

विदू०–(७२) यथा भवानाज्ञापयति ॥ निष्क्रान्तौ इति चारुदत्तविदूषकौ निर्गतावित्यर्थः । प्राधान्यादनयोर्निदे(र्दे)शः । चेटे( टो )-प्यनुगतः स्यादेवेति ज्ञेयम् । अङ्कः प्रथमः । अलंकारन्यासो नाम अलंकारन्यासपदवाच्य इत्यर्थः । इति श्रीमृच्छकटिकप्रकरणविवृत्तौ श्रीमन्महाराजश्रीबलिसेनसाहबसंमदाय श्रीलल्लदीक्षितेन निर्मितायामलंकारन्यासो नाम प्रथमोऽङ्कः ॥ १ ॥

---

१ अणवेदि H. २ om: B (abd). ३ °कटिके A B (c) c D F I J; after कटिके add प्रकरणे D H.

# द्वितीयोऽङ्कः ।

प्रविश्य

चेटी[१] । अत्ताए[२] अज्जआसआसं[३] संदेसेण पेसिदम्हि । ता जाव पविसिअ अज्जआसआसं[४] गच्छामि । परिक्रम्यावलोक्य[५] च । एसा अज्जआ[६] हिअएण कंपि[७] आलिहन्ती[८] चिट्ठदि[९] । ता जाव उवसप्पामि[१०] (१) ।

ततः प्रविशत्यासनस्था सोत्कण्ठा वसन्तसेना मदनिका च ।

---

प्रविश्य चेटी । इयं वसन्तसेनायाश्चेटी वसन्तसेनामदनिकयोः प्रवेशमङ्कारम्भकं सूचयति ।

(१) अत्ताए माता वसन्तसेनायाः । अत्ता इति मातुः श्वश्र्वाश्च प्राकृते संज्ञा । अज्जआसआसमार्यासकाशम् । आर्या वसन्तसेना । संदेशेन प्रेषितास्मि । तद्यावत्प्रविश्यार्यासकाशं गच्छामि । एषार्या हृदयेन कमप्यालिखन्ती । अभिलषती(न्ती ?)त्यर्थः । तिष्ठति । तद्यावदुपसर्पामि ।

१ चेटी चेटी B (ad) G. २ अत्ताणं G. ३ अज्जुआ० B throughout the act translated by अज्जुका० E G K; अज्जासआसं D H. ४ अज्जा० D H. ५ परिक्रम्य om: B (a). ६ अज्जा D H. ७ किंपि A B (ac) C F J K; किं वि D. ८ आलीहन्ती B (d); आलिहन्दी D; अलिहन्दि H; आलिहिन्ती K. ९ चिट्ठइ D. १० उंवस० E.

वसन्तसेना । हञ्जे तदो तदो (२) ।

चे[1]टी । अ[2]ज्जए ण किं[3]पि मन्तेसि । किं तदो तदो(३) ।

वसन्तसेना । किं मए भ[4]णिदं (४) ।

चे[5]टी । तदो त[6]दो त्ति (५) ।

वसन्तसेना । सभ्रूक्षेपम् । आं । एव्वं (६) ।

---

वस०–(२) हञ्जे इति चेट्यादेराह्वाने । 'हञ्जे हण्डे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः । तत्र सख्याह्वाने हलेति प्रसिद्धं शाकुन्तले । हञ्जे हण्डे इति तु नीचायाश्चेट्याश्चाह्वाने ज्ञेयमिति विवेकः । तदो तदो ततस्ततः । तदो तदो इत्युन्मादस्य कामावस्थायाः सूचनम् ।

चेटी–(३) चेटी इयं मदनिका । आर्ये न किमपि मन्त्रयसि कथयसीत्यर्थः । किं ततस्ततः । ततस्तत इत्येव कथनं किमित्यर्थः । किंशब्दः प्रश्ने ।

वस०–(४) किं मया भणितम् । इदं तत्क्षणोक्तास्मरणमप्युन्मादः *कामावस्थैव ।

चेटी–(५) ततस्तत इति ।

वस०–(६) आम् । एवम् । आमित्यङ्गीकारेऽव्ययम् । यदुच्यते त्वया यत्त्वया ततस्तत इत्येव कथितं नान्यत्तदङ्गीकृतमित्यर्थः । एवमीदृशमित्यर्थः ।

---

१ मदनिका B, B (a). २ अज्जे D H; अज्जुए K. ३ किंवि D. ४ भणिदे A B (c) F. ५ मदनिका B, B (a). ६ तदो तदो J; त्ति om: J.

उपसृत्य

**प्रथमा चेटी**[1]। अज्जए अत्ता आदिसदि ण्हादा[2] भविअ देवदाणं पूअं णिव्वत्तेहि[3] त्ति (७)।

**वसन्तसेना**। हञ्जे विण्णवेहि अत्तं अज्ज ण ण्हा-इस्सं[4]। ता[5] बह्मणो ज्जेव्व[6] पूअं [7]णिव्वत्तेदु त्ति (८)।

**चेटी**। जं अज्जआ[8] आणवेदि (९)। इति निष्क्रान्ता।

**मदनिका**। अज्जए सिणेहो पुच्छेदि[9]। ण पुरोभाइदा। तां[10] किं णेदं (१०)।

**वसन्तसेना**। मदणिए[11] [12]कोरिसिं मं[13] पेक्खसि (११)।

**मदनिका**। अज्जआए[14] सुण्णहिअअत्तणेण जाणामि हिअअगदं कंपि[15] अज्जआ[16] अहिलसदि त्ति (१२)।

---

चेटी—(७)प्रथमेति। या वसन्तसेनाजनन्या प्रेषिता सा प्रथमे-त्यर्थः। आर्ये मातादिशति स्नाता भूत्वा देवतानां पूजां निर्वर्तयेति। निर्वर्तय संपादयेत्यर्थः।

वस०—(८) हञ्जे विज्ञापय मातरम् अद्य न स्नास्यामि। तद्ब्रा-ह्मण एव पूजां निर्वर्तयत्विति।

चेटी—(९) यदार्याज्ञापयति।

मद०—(१०) आर्ये स्नेहः पृच्छयते(?)। न पुरोभागिता। तत्किं ने(णे)दम्। पुरोभागिता दोषैकदर्शिता। 'दोषैकदृक् पुरोभागी' इत्यमरः।

वस०—(११) मदनिके कीदृशीं मां प्रेक्षसे।

चेटी(मद०)—(१२) आर्यायाः शून्यहृदयत्वेन जानामि हृदयगतं कमप्यार्याभिलषतीति।

---

१ चेटी चेटी B (ab). २ णाइादा A B (c). ३ णिव्वट्टेहित्ति D H. ४ णहाइस्सं A B (c). ५ ताव B (a) K. ६ एव्व D H. ७ °व्व° णिव्व °ट्टे° D H. ८ अज्जा D. ९ पुत्थादि B (b); पुछीअदी A B (c) D E F G. १० ता om: A B (c) F; ता किं णेदं om: D H. ११ मअणिए D H. १२ कीदिसिं B D E. १३ om: B (d). १४ अज्जाए D H. १५ कंवि D. १६ अज्जा D.

**वसन्तसेना** । सुट्ठु तुए[1] जाणिदं । पे[2]रहिअअग्गहणपण्डि[3]आ मदणिआ क्खु[4] तुमं (१३) ।

**मदनिका** । पिअं मे पिअं । कामो क्खु णाम एसो भअवं । अनु[5]गहिदो महूसवो तरुणजणस्स । ता क[6]धेदु अज्जुआ[7] किं राआ राअवल्लहो वा सेवीअदि (१४) ।

**वसन्तसेना** । हञ्जे रमिदुमिच्छामि । ण सेविदुं (१५) ।

**मदनिका** । विज्जाविसेसालंकिदो किं[8] कोवि[9] बह्मणो जुआ[10] कामीअदि[11] (१६) ।

---

वस०–(१३) सुष्ठु त्वया ज्ञातम् । परहृदयग्रहणपण्डिता मदनिका खलु त्वम् ।

मद०–(१४) प्रियं मे प्रियम् । कामः खलु नामैष भगवान् । अनुगृहीतो महोत्सवस्तरुणजनस्य । तत्कथयत्वार्या किं राजा राजवल्लभो वा सेव्यते ।

वस०–(१५) हञ्जे रन्तुमिच्छामि । न सेवितुम् । कामोपभोगरसिकास्मि । न द्रव्यार्थिनीत्यर्थः । द्रव्यपुष्कलतयैवालंकारन्यासश्चारुदत्तस्य वल्लभतमस्य करे कृतः प्रथमाङ्क इति भावः ।

मद०–(१६) विद्याविशेषालंकृतः किं कोपि ब्राह्मणो युवा काम्यते ।

१ क्खु तुए B (a). २ पर om: B (d). ३ पाण्डिदा D. ४ खु B. ५ अणवगीहिदो B E K; अणवगा हिदो; °वग्गहिदो B (a); °गुग्गिहिदो D; °हीदो° H. ६. °हेदु° D H. ७ अज्जा D. H. ८ om: B (d). ९ कोपि A B (cd). १० जुवा A B (bc). D. ११ कामेदि B (a).

वसन्तसेना । पूँअणीओ[1] मे बह्मणो जणो (१७) ।

मदनिका । किं अणेअणअरो[2]भिगमणजाणिदविहव[3]वित्थारो वाणिअ[4]ज्जुआ[5] वा कामीअदि (१८) ।

वसन्तसेना । हञ्जे उवारूढ[6]सिणेहं पि पणइ[7]जणं परिच्चइअ[8]देसन्तरगमणेण वाणिअजणो महन्तं विओअ[9]दुक्खं उप्पादेदि (१९) ।

मदनिका[10] । अज्जए ण राआ[11] ण राअवल्लहो ण बह्मणो ण वाणिअजणो[12] । ता को दाणिं सो[13] भट्टिदारिआए[14] कामीअदि (२०) ।

---

वस०–(१७) पूजनीयो मे ब्राह्मणो जनः । पूजनीयाश्च ये भवन्ति तेषां विलासवैमुख्यं म(स)देति भावः ।

मद०–(१८) किमनेकनगराभिगमनजनितविभवविस्तारो वाणिजयुवा वा काम्यते । वणिजोयं वाणिजः । तस्येदमित्यण् । वायसराक्षसादिवद्वा स्वार्थेण् ।

वस०–(१९) हञ्जे उपारूढस्नेहमपि प्रणयिजनं परिचय्य(त्यज्य) देशान्तरगमनेन वाणिजजनो महद्वियोगजदुःखमुत्पादयति ।

मद०–(२०) आर्ये न राजा न राजवल्लभो न ब्राह्मणो न वणिग्जनः । तत्क इदानीं स भर्तृदारिकया काम्यते ।

---

१ हञ्जे पूअ० B (ad). २ °राभिगमण° B. ३ विहव हव (?) वित्थारो B (a); वित्थादो° (?) H. ४ वाणिज D. H. ५ जुवा D. ६ उआरूढ A B (bcd). ७ पणजणां (?) B (a); °यिजणं D. ८ परिच्चअ B (ad). ९ °विअज० B (b). १० चेटी throughout the page for मदनिका A B (bcd) E. ११ राआ A B (c) F. १२ °जनो° C. १३ ओसो (?) K. १४ °भट्ट° B (d) D H.

वसन्तसेना । हञ्जे तुमं मए सह कामदेवाअदणुज्जाणं [1]गदा [2]आसि (२१) ।

मदनिका । अज्जए गदम्हि (२२) ।

वसन्तसेना । [3]हञ्जे [4]तधावि मं [5]उदासीणा विअ पुच्छसि (२३) ।

मदनिका । जाणिदं । [6]किं सो [7]ज्जेव्व [8]जेण [9]अज्जआ सरणाअदा अब्भुववण्णा (२४) ।

वसन्तसेना । किंणामहेओ [10]क्खु सो (२५) ।

मदनिका । सो [11]क्खु सेट्ठिचत्तरे [12]पडिवसदि (२६) ।

वसन्तसेना । [13]अइ [14]णामं से पुच्छिदासि (२७) ।

---

वस०—(२१) हञ्जे त्वं मया सह कामदेवायतनोद्यानं गतासीः ।

चेटी (मद०)—(२२) आर्ये गतास्मि ।

वस०—(२३) तथापि मामुदासीनेव पृच्छसि ।

मद०—(२४) ज्ञातम् । किं स एव येनार्या शरणागताभ्युपपन्ना । अनुगृहीतेत्यर्थः । अभ्युपपत्तिरनुग्रहः ।

वस०—(२५) किंनामधेयः खलु सः ।

मद०—(२६) स खलु श्रेष्ठिचत्वरे प्रतिवसति । श्रेष्ठी वणिक् । 'सेठ' इति भाषा ।

वस०—(२७) अयि नामास्य पृष्टासि ।

---

१ ण गदा B (a). २ असि H. ३ om: A B (bc) C D E F H J. ४ तधा बि B; तहा बि D, तथा वि F; तहावि H; तहाबि J. ५ अणुदासिणा B (a). ६ अज्जुए किं B, B (abd). ७ एव्व D H; एव्वजणो D. ८ तेण (?) B (d). ९ अज्जा D. H. १० खु. ११ °सुसेट्ठि° B (b). १२ परिव० B (ad). १३ अवि D; आवि H. १४ णाम संपुच्छिदासि B (ab).

**मदनिका ।** सो क्खु अज्जए [1]सुगहिदणामहेओ अज्जचारुदत्तो णाम (२८) ।

**वसन्तसेना ।** [2]सहर्षम् । साहु ।[3]मदणिए साहु । सट्ठु तुए जाणिदं (२९) ।

**मदनिका ।** स्वगतम् । एव्वं दाव । प्रकाशम् । अज्जए [4]दलिद्दो क्खु सो सुणीआदि (३०) ।

**वसन्तसेना ।** अदो ज्जेव्व[5] कामीआदि । दलिद्दपुरिससंकान्तमणा क्खु गणिआ लोए अवअणीआ भोदि[6] (३१) ।

**मदनिका ।** अज्जए[7] किं [8]झीणकुसुमं सहआरपादवं म[9]हुअरीओ उण सेवन्ति[10] (३२) ।

---

मद०—(२८) स खल्वार्ये सुगृहीतनामधेय आर्यचारुदत्तो नाम ।

वस०—(२९) साधु । मदनिके साधु । सुष्ठु त्वया ज्ञातम् ।

मद०—(३०) एवं तावत् । आर्ये दरिद्रः खलु स श्रूयते ।

वस०—(३१) अत एव काम्यते । दरिद्रपुरुषसंक्रान्तमनाः खलु गणिका लोकेवचनीया भवति । अवचनीयार्थानभिलाषेण गुणमात्रानुरागेण च वागगोचरमाहात्म्यशालिनीत्यर्थः ।

मद०—(३२) आर्ये किं हीनकुसुमं सहकारपादपं मधुकर्यः पुनः सेवन्ते ।

---

१ सुगृहिद B (a); सुगदिणामं B (d); सुग्गहिद D; सुगहीद J. २ om: D. ३ मअणिए B (a) D. ४ दरिद्दो D H. ५ एव्व D H. ६ होदि D; होदी H. ७ om· B (a). ८ ज्जीण marg. जीर्ण B (d); °हीण° D H. ९ भरिओ D H. १० सेवन्दि D H.

**वसन्तसेना।** अदो ज्जेव्व ताओ महुअरीओ[1] वुच्चन्ति[2] (३३)।

**मदनिका।** अज्जए जइ[3] सो मणीसिदो ता कीस दाणिं सहसा णाहिसारीअदि[4] (३४)।

**वसन्तसेना।** हञ्जे सहसा अहिसारिअन्तो[5] पच्चुअआर[6]-दुब्बलदाए मा दाव जणो[7] दुल्लहदंसणो पुणो भविस्सदि (३५)।

**मदनिका।** किं अदो ज्जेव्व सो अलङ्कारओ तस्स हत्थे णिक्खित्तो (३६)।

**वसन्तसेना।** हञ्जे सुट्ठु दे[9] जाणिदं (३७)।

---

वस०—(३३) अत एव ता मधुकर्य उच्यन्ते। मधु कुर्वन्ति सेवन्ते माता (मत्ता?) इत्यर्थः।

मद०—(३४) आर्ये यदि स मनीषितस्तत्कीसः(स) किमर्थमिदानीं सहसा नाभिसार्यते। मनीषितो वाञ्छितः। स गृहे यत्र कुत्रापि संकेते वा किमितीदानीं नाहूयते। तद्गृहे स्वयमेव वा कुतो [न] गम्यत इति भावः।

वस०—(३५) हञ्जे सहसाभिसार्यमाणः प्रत्युपकारदुर्बलतया मा तावज्जनो दुर्लभदर्शनः पुनर्भविष्यति।

मद०—(३६) किमत एव सोलंकारस्तस्य हस्ते निक्षिप्तः।

वस०—(३७) सुष्ठु ते त्वया ज्ञातम्।

नेपथ्ये। अथ द्यूतं निरूपयति। तत्र मायू[थु]रः सभिकः। द्यूतकर-नामा यथार्थनामा तत्र माथुरेण जितः। संवाहकनामा पराजितः पलाय-

---

१ °अरिओ° D H. २ उच्चन्ति D, उच्चन्दि H. ३ जयि B (a); जई J. ४ सालिआद्दि B (a). ५ सारीअन्तो B (d) D. H. ६ पच्चुएअ (?) H. ७ ज्जणो. D. ८ अज्जुए किं B, B (ad). ९ तुए D.

नेपथ्ये । अ[1]ले भट्टा दश सु[2]वण्णाह लु[3]द्धु जू[4]दकरु पपल्ली[5]णु पपलीणु । ता गे[6]ल्ह गेल्ह चिट्ठ[7] चिष्ठ दू[8]लात् पादिष्टोसि (३८) ।

प्रवि[9]श्यापटीक्षेपेण संभ्रा[10]न्तः ।

**संवाहकः।** कॆ[11]ष्टे एशे जूदि[12]अलभावे । हीमाणहे ।

णवबन्धणमुक्का[13]पुए विअ[14]
गद्दहीए हा ताडिदोम्हि गद्दहीए ।

---

मानः प्रविशति । अयं संवाहको मागधीभाषापाठकः । ढक्कभाषापाठकौ माथुरद्यूतकरौ । तत्र अरे भट्टा इत्यादि वाक्यं माथुरस्य द्यूतकरं प्रति ।

(३८) अरे भट्टा इति द्यूतकरस्य संबोधनम् । दश शुवण्णाह दश सुवर्णस्य । कृत इति शेषः । लुद्धु रुद्धः । जूदकरु हे द्यूतकर । यद्वा द्यूतकरः संवाहकः । पपलीणु पपलीणु प्रपा(प)लायि प्रपा(प)लायि । तद्गृहाण गृहाण । तिष्ठ तिष्ठ । त्वं मया दूरात्प्रदृष्टोसि । सुवर्णे दशमासिकं मुद्रा तत्तद्राजाङ्कघटिता । मोहर इति भाषा(ष)-यां । प्रपलायितः संवाहकस्तद्गृहाण धारयेत्यन्वयः । संभ्रान्तो भीतः ।

संवा०—(३९) कष्टं एष द्यूतकरभावः । हीमाणहे विस्मयेऽव्ययम् ।

[णवबन्धणेत्यादि ।] चित्रजातिः । नवबन्धनमुक्तयेव गर्दभ्या हा ताडितोस्मि गर्दभ्या । अङ्गराजमुक्तयेव शक्त्या घटोत्कच

---

१ अरे A B (bc) D K; अरेरे B (ad). २ शुवण्णाह A B (bc); सुवण्णाहकिदे D H. ३ लुद्धः B (a). ४ जूतकरु B (b) K, जूदिअरु B; द्यूतअरु B (d). ५ पपलीणु B B (a); °लीणु° D F H. ६ गेह्लध गेह्लध B (b) E; गेह्ल K. ७ तिष्ठ B; तिष्ठ B (a): तिष्ठ तिष्ठ (?) B (d); चिष्ठ D; विष्ठ K. ८ दूरात्प्रदृष्टोसि B; प्रदिष्टो B (d); दूरदो पदट्ठोसि D H K. ९ अपटाक्षेपेण A B (abc); पटाक्षेपेण D. १० om: B (a). ११ कष्टे. B (abcd); हीमाणहे कश्टे B (a); कष्टे D-H; हीमाणहे कष्टे E F K. १२ जूदिअले भावे D F H. १३ मुक्काए B (a). १४ om: A B (bd).

अङ्कुलाअमुक्काए[1] विअ[2] शत्तीए
घडुक्को विअ घादिदोम्हि शत्तीए[3] ॥ १ ॥ 75
लेखअवावडहिअअं[4] शहिअं[5] देइटूण[6] झत्ति पब्भट्टे[7] ।
एण्हि[8] मग्गणिवडिदे कं णु[9] हु शलणं[10] पवेज्जामि[11] ॥ २ ॥
ता जाव एदे[12] शहिअजूदिअला[13] अण्णदो मं अण्णेशन्ति

---

इव घातितोऽस्मि शक्त्या । अस्यार्थः । नवबन्धनान्मुक्तयेव गर्दभ्या रासभस्त्रिया ताडितोऽस्मि । हा कष्टम् । गर्दभ्या वराटिकया निमित्तभूतया पराजितस्ताडितोऽस्मि गर्दभ्या । गर्दभी तु ताडनस्वभावा सा प्रसिद्धैव । गद्दहीति वराटिकानाम । गर्दभीशक्तिके अथ२ (?) इति प्रसिद्धं द्यूतके कर्प(प)र्दकनामधेये । अङ्गराजेन कर्णेन मुक्तया शक्त्या सूर्यदत्तेन कुन्तेन शस्त्रविशेषेण ताडितो घटोत्कचो भीमसेनसुत इव ताडितोऽस्मि शक्त्येति ॥ १ ॥

[लेखअवावडेति।] आर्याछन्दः । लेखकव्यापृतहृदयं सभिकं दृष्ट्वा झटिति प्रभ्रष्टः । इदानीं मार्गनिपतितः कं नु खलु शर (?) शरणं प्रव्रजामि । कं नु खल्विति विमर्शे ॥२॥

तद्यावदेतौ सभिकद्यूतकरावन्यतो मामन्विष्यतः । न प्राकृते द्विवचनमित्यसकृदावेदितम् । तावदितो विपरीताभ्यां पादाभ्यामेतच्छून्यं देवकुलं प्रविश्य देवीभविष्यामि । इदं च्विप्रत्ययान्तम् ।

---

१ मुक्काए B (a). २ वि B (d), om: J. ३ शत्तिए D H. ४ लेखक B (a). ५ सहिअं A B (bcd) D, शहिअं om: B (a). ६ दट्ठुण A B (abcd) C D F J K. ७ पब्भट्टे A B (abc) C D F J; पडिभट्टे B (d). ८ एण्हि मग्गे D (also) H which has एण्ही. ९ णु B B (a). १० शरणं B (a). ११ पवज्जेमि D H. १२ एदो B (d). १३ °दअला D.

ताव इदो विप्पडीवेहिं पादेहिं एदं शुण्णदेउलं पविशिअ देवीहुविश्शं (३९)। बहुविधं नाट्यं कृत्वा तथा स्थितः।

ततः प्रविशति माथुरो द्यूतकरश्च।

माथुरः। अले भट्टा दशसुवण्णाह लद्धु जूदिकरु पपलीणु पपलीणु। गेह्ण गेह्ण चिट्ठ चिट्ठ। दूलात् पदिट्ठोसि (४०)।

---

अदेवो देवो भूत्वा प्रतिमारूपस्तिष्ठामीत्याशयः। देवकुलं देवगृहम्। देवालयमिति यावत्। अत्र कुलशब्दो 'व्रजं स्याद्गोकुलं गोष्ठम्' इत्यत्र च गृहार्थकः। तथा च महाभाष्यम्। 'यथा कुम्भकारकुलं गत्वा कश्चिदाह कुरु घटान् जलमाहरिष्य इति तथा वैय्याकरणकुलं गत्वा न कश्चिदाह कुरु शब्दान्प्रयोक्ष्य इति शब्दनित्यताभावादे (?) गृहार्थक एवात्र कुलशब्दः प्रयुक्तश्चक्षुःश्रवसां पत्येति ध्येयम्'। संवाहकसूचितप्रवेशौ माथुरद्यूतकरौ प्रविशतः। 'नासूचितस्य प्रवेश' इत्यसकृदुक्तम्।

माथु०-(४०) अरे भट्टा दशसुवर्णस्य कृते रुद्धो द्यूतकरः प्रपलायितः। गृहाण गृहाण तिष्ठ तिष्ठ दूरात्प्रदृष्टोसि। व्याख्यातमिदमनुपदमेव।

१ विपडीदेहिं marg -विपरीताभ्यां A B (c); विपडीवेहिं B (bd)F; विपडिदेहिं =विपरीताभ्या D. २ पदेहिं H. ३ भविस्सं A B (bcd) D; भविस्संसं C J. ४ om: B (a). ५ अले अले B (ad); अरेरे B. ६ शुवण्णाह A B (bcd) सुवण्णाह।केदेदु D H. ७ जूदकक्करु B (b) जूदिअरु B; °अरू° K. ८ °पलीणु once B; ° पल्लीणु- . . . ल्लीणु D; लाणू . . . . लाणू H. ९ om: D. १० तिष्ठ तिष्ठ B. ११ दूरात्प्रदृष्टोसि B K; दूरदोप and पदृट्ठोसि D H.

द्यूतकरः ।

जइ वज्जसि पोआलं[१] इन्दं[२] सेलणं[३] च[४] सम्पदं[५] जासि[६] ।
सहिअं वज्जिअ एक्कं रुद्दो वि ण रक्खिदुं तरइ[७] (४१) ।।३।।

माथुरः । कहिं कहिं सुसहिअविप्पलम्भआ
पलासि ले[८] भअपलिवेविदङ्गआ ।
पदे पदे समविसमं[९] खलन्तआ
कुलं जसं[१०] अइकसणं[११] कलेन्तआ (४२)।।४।।

द्यूतकरः[१२] । पदं वीक्ष्य । एसो वज्जादि । इअं[१३] पणट्ठा पदवी (४३) ।

---

द्यूत०—[जइ वज्जसीति ।] आर्याछन्दः । उद्दिश्य संवाहकमुक्तिरियम् ।(४१) यदि व्रजसि पातालमिन्द्रं शरणं च सांप्रतं यासि । सभिकं वर्जयित्वैकं रुद्रोपि न रक्षितुं तरइ शक्नोतीत्यर्थः ।।३।।

माथु०—[कहिं कहिं इत्यादि ।] तुंचिरावृत्तं (?) छन्दः । (४२) कुत्र कुत्र सुसभिकविप्रलम्भक पलायसे रे भयपरिवेपिताङ्गक । पदे पदे समविषमं खलन्तआ स्खलन् कुलं यशोतिकृष्णं कलन्तआ कुर्वन् ।। ४ ।। इयमप्युद्दिश्य संवाहकमेव सभिकस्य माथुरस्योक्तिः । स(सु)सभिकस्य माथुरस्य विप्रलम्भक प्रतारक । विप्रलम्भः प्रतारणम् । समेत्यादि स्ख[ल]नक्रियाविशेषणम् ।

द्यूत०—पदं संवाहकचरणचिह्नं मार्गधूलिषु वीक्ष्येत्यर्थः । (४३) एष व्रजति । इयं प्रनष्टा पदवी । एष संवाहकः । व्रजति । इयं पद-

---

१ पातआलं B (a). २ इदं B (a) इइं B (d). ३ सलणं B D. ४ अ B (a) ५ संवदं K. ६ जाशि B (d). ७ तरई H. ८ रे B B (a). ९ शामविशमं B D. १० यसं B (d). ११ सकलुशअं B; °लुसं B (a); स . . . . सअं K.. १२ यूतकारः K. १३ इअं इअं B, B (abd).

**माथुरः ।** आलोक्य । सवितर्कम् । [1]अले [2]विप्पदीवु [3]पादू । [4]पडिमाशुण्णु [5]देउलु । विचिन्त्य । [6]धुत्तु [7]जुदिअरु [8]विप्पदीवेहिं पादेहिं [9]देउलं [10]पविट्ठु (४४) ।

**द्यूत[11]करः ।** ना अणुसरेम्ह (४५) ।

**माथुरः ।** एव्वं भोदु (४६) ।

उभौ देवकुलप्रवेशं [12]निरूपयतः । दृष्ट्वान्योन्यं संज्ञाप्य ।

**द्यूतकरः ।** कधं कट्ठमयी पडिमा (४७) ।

---

वी मार्गः प्रनष्टा । महामार्गमपहायान्यतो गतेत्यर्थः । उक्तमिवेद-मनुमानेनेति ध्येयम् ।

माथु०–(४४) अरे विप्रतीपौ पादौ । प्रतिमाशून्यं देवकुलम् । प्रयोजनविरहेण नात्र मानुषसंभव इति भावः । धूर्तो द्यूतकरो विप्रतीपपादाभ्यां देवकुलं प्रविष्टः । द्यूतकरः संवाहकः । विप्रतीपेति विपरीतेत्यर्थः । ढक्कभाषायामस्यामुकारान्तानि प्रथमान्तादीनीत्यवधेयम् ।

द्यूत०–(४५) तन्नोनुसरावः । संवाहकमिति शेषः ।

माथु०–(४६) एवं भवतु । संज्ञाप्येति । अयं संवाहक एव प्रतिमारूपेणात्मानं निह्नुवान इह तिष्ठतीति संज्ञापनं कृत्वेत्यर्थः ।

द्यूत०–(४७) कथं काष्ठमयी प्रतिमा ।

---

१ अरे B. २ विप्पतीपु B.D; °प्पतीप B (a) K. ३ पादू K. ४ पडिमशुण्ण B (a); °मंडिमशुण्णु B (b); पाडिमशुण्णं B (d) ५ देवडलु A B (c) D K; देउलं B (d). ६ धुत्त B (ab), धूत K. ७ जूदिअरु B; जूदिकरु A B (c); जूदिकरू B (bd) जुदिकरु D. ८ विप्पदीवपदेहिं A B (bcd) D F. ९ देउलं B (d). १० °विट्ठ B (a); °विट्ठे B (d); °विट्ठो J. ११ °कारः K. १२ °नाटयतः D.

**माथुरः।** अले णं हु ण हु शेलप्पडिमा। इति बहुविधं चालयति। संज्ञाप्य चं। एव्वं भोदु। एहि जुदं किलेम्ह। (४८) बहुविधं द्यूतं क्रीडतः।

**संवाहकः।** द्यूतेच्छाविकारसंवरणं बहुविधं कृत्वा। स्वगतम्। अले

कत्ताशद्दे णिण्णाणअश्श हलइ हडक्कं मणुश्शश्श।
ढक्काशद्देव्व णलाधिवश्श पब्भट्ठलज्जश्श॥ ५॥
जाणामि ण कीलिश्शं शुमेलुशिहलपडणशंण्णिहं जूअं।
तह वि हु कोइलमहुले कत्ताशद्दे मणं हलदि (४९)॥६॥

---

माथु०-(४८) अरे न खलु शैलप्रतिमा। शिलाया इयं शैली सा चासौ प्रतिमेति कर्मधारय एव समासः। माथुरद्यूतकरौ प्रतिमाभूतं संवाहकं चालयत इत्यर्थः। अयं संवाहक इत्यन्योन्यं संज्ञाप्य चेत्यर्थः। एवं भवतु। एहि द्यूत इत्यर्थः। क्रीडावः।

संवा०—संवरणं गोपनम्। स्वस्य प्रतिमारूपेण स्थितत्वात्। स्वगतं मनस्येवाहेत्यर्थे। अरे [कता(त्ता)शद्दे इति।] आर्याछन्दः। (४९) कत्ताशब्दो निर्नाण[क]स्य हरति हृदयं मनुष्यस्य। ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य द्यूतकरणं यया सा कत्ता। काउ इति प्रसिद्धः। नादी (नान्दी) पूर्वः (पूरा) इति प्रसिद्धे। द्यूत इत्यन्ये। नान्दी नक्की इति भाषायाम्। पूर्वःपूरा इति भाषया प्रसिद्धः। निर्नाणकस्य नाणं शिवादिदेवाङ्कं ठ(ट)ङ्कादीत्युक्तं पूर्वाङ्के। निर्गतं नाणमपि यस्य यस्माद्वा स तथा तस्य निर्नाणकस्य अतिनिर्धनस्येत्यर्थः॥ ५॥

---

१ णहु once A B (c) D F K. २ शैलप्प° D F. ३ चायलत B. ४ om. B. ५ कीलेह्म B (a). ६ क्रीडति J. ७ ण्णाणअस्स B (abcd) D K ८ हडक्कं B (abd) D. ९ सद्दे B (d). १० णला. D. ११ पब्भ . . . इलज्जस्स B (a); पब्भलज्जस्स B (d). १२ शुहलं H. १३ संण्णिह B (d) १४ जूअं B D. १५ तहविअ B; °विअ B (a). १६ माहुले ? H.

द्यूतकरः[1] । मम पाठे[2] मम पाठे (५०) ।

माथुरः । ण हु मम पाठे मम पाठे (५१) ।

संवाहकः । अन्यतः सहसोपसृत्य । णं मम पाठे[3] (५२) ।

द्यूतकरः । लद्धे गोहे (५३) ।

माथुरः । गृहीत्वा । अले पेदण्डा[4] गहीदोसि[5] । पअच्छ तं दशसुवण्णं[6] (५४) ।

---

[जाणामि इति ।] आर्याछन्दः । जानामि न क्रीडिष्यामि सुमेरुशिखरपतनसंनिभं द्यूतम् । तथापि खलु कोकिलमधुरः कत्ताशब्दो मनो हरति । जानामि नेति भङ्ग्युक्तिर्द्यूतव्यसनिनाम् । सुमेरुशिखरेत्यादिविशेषणेन घोरमहत्त्वं द्यूतस्य बोध्यते । व्याख्यातोनुपदमेव कत्ताशब्दः ॥६॥

द्यूत०–(५०) मम पाठे मम पाठे ।

माथु०–(५१) न खलु मम पाठे मम पाठे । संवाहकोन्यतः सहसोपसृत्येति प्रतिमारूपं त्यक्त्वा देवालयस्तम्भान्तरान्तरेण झटिति समीपमागत्येत्यर्थः ।

(५२) ननु मम पाठे इति आर्थं २ (?) । द्यूतकरोक्तिविशेषः ।

द्यूत०–(५३) लब्धः गोहे पुरुषः । यं संवाहकं गवेषयन्नासीः सोयं लब्ध इत्यर्थः ।

माथु०–(५४) अरे पेदण्डा लुप्तदण्डक गृहीतोसि । गोहे पेदण्डा इति देशी । प्रयच्छ दशसुवर्णम् ।

---

१ °कारः K. २ पाडे throughout the page D. H. पाढे K. ३ पाडे D. ४ पेदण्डा B, B (ad). ५ गहीदो° A B (c); गृहीतो° B; गृहीदं B(b). ६ दस B (a).

संवाहकः । अज्ज दइस्सं (५५) ।

माथुरः । अहुणा पेअच्छ (५६) ।

संवाहकः । दइस्सं पसादं कलेहि (५७) ।

माथुरः । अले णं संपदं पअच्छ (५८) ।

संवाहकः । शिलु पडदि (५९) । इति भूमौ पतति ।

उभौ बहुविधं ताडयतः ।

माथुरः । एसु तुमं हु जूदिअरमण्डलीए बद्धोसि (६०) ।

संवाहकः । उत्थाय सविषादम् । कधं जूदिअलमण्डलीए

---

संवा०–(५५) अद्य दास्यामि ।

माथु०–(५६) अधुना प्रयच्छ ।

संवा०–(५७) दास्यामि प्रसादं कुरु ।

माथु०–(५८) अरे ननु सांप्रतं प्रयच्छ ।

संवा०–(५९) शिरः पतति भ्रमतीत्यर्थः ।

उभौ माथुरद्यूतकरौ । बहुविधं मुष्टिपादादिप्रहारैः । संवाहकं ताडयत इत्यर्थः ।

माथु०–(६०) एष त्वं खलु द्यूतकरमण्डल्या बद्धोसि ।

संवा०–(६१) कथं द्यूतकरमण्डल्या बद्धोस्मि । हीति

---

१ दइस्सं A B (cd). २ पईच्छ K. ३ दइस्सं B (abd) D; ईस्सं K. ४ पसादं B (a) K. ५ संपदे B (a). ६ किं शिलुप्पडति B (c); पडदि marg. पातयति B (d). ७ नाटयत D. ८ एसु तुहं द्यूतकरमण्डली कृत्वा जूदि &c. B; एसु तुहं जूदिमंडलीए बद्धोसि । इति द्यूतमंडलीं कृत्वा तथा करोति B (a), एसु तं जूदि० D F; द्यूत. . . . . (त्वा &c.) om; तुहं द्यूतमण्डलीं कृत्वा रसो जूदिअर &c. E K; हु om: E K.

बद्धोम्हि । ही एशे[1] अम्हाणं जूदिअलाणं अलङ्घणीए शमए[2] । ता कुदो देश्शशं[3] (६१) ।

माथुरः । अले गन्थु कुलु कुलु (६२) ।

संवाहकः । एव्वं[5] कलेमि । द्यूतकरमुपस्पृश्य[6] । अद्धं ते देमि । अद्धं मे[7] मुञ्चदु[8] (६३) ।

द्यूतकरः[4] । एव्वं भोदु (६४) ।

---

कष्टम् । एषोस्माकं द्यूतकराणामलङ्घनीयः समयः । तत्कुतो दास्यामि ।

माथु०—(६२) अरे गन्थु गण्डः । कुलु कुलु कुतः कुतः । त्वये-त्यर्थ्यायाति । गण्डो लम्बकः । डात्र इति भाषा । द्यूत त्वया गण्डः कृतः स्थित इति तदृश सुवर्णं देहीत्याशयः ।

संवा०—(६३) एवं करोमि । ददामीत्यर्थः । उपस्पृश्य करे धृत्वा । त्यक्त्वा माथुरं मन्त्रयति संवाहक इति भावः । अर्धं ते ददामि । अर्धं मे मुञ्चतु । दशसुवर्णमध्येऽर्धं तुभ्यं ददामि । मे मह्यमर्धं सभिको माथुरो मुञ्चतु । न गृह्णात्वित्यर्थः ।

द्यूत०—(६४) एवं भवतु ।

संवा०—(६५) अर्धस्य गन्थु गण्डं लम्बकम् । करोमि । अर्धमपि

---

१ से B (a) ; एसे D ; हा एसे K. २ समये B (a) ; समए D ; सु॰ H. ३ दश्शं B (a). ४ द्यूतकर· B (a). ५ एवं H. ६ उपसृत्य B, B (ad) ७ मे अक्को K. ८ मुञ्चेदु D.

विदूषकः । मम दाव दुवेहिं[1] ज्जेव्व हस्सं जाअदि । इत्थि[2]-आए सक्कदं[3] पठन्तीए[4] मणुस्सेण अ काअलीं[5] गाअन्तेण । इत्थिआ दाव सक्कदं[6] पठन्ती[7] दिण्णणवणस्सा विअ[8] गिट्ठी अधिअं[9] सुसुआआदि[10] । मणुस्सोवि काअलीं[11] गाअन्तो सुक्ख[12]-सुमणोदामवेढिदो[13] वुड्ढपुरोहिदो[14] विअ मन्तं जवन्तो दिढं[15] मे ण रोअदि[16] (९) ।

---

विदू०—(९) मम तावद्द्वाभ्यामेव हास्यं जायते । द्वाभ्यामित्युक्तं तदाह । स्त्रिया संस्कृतं पठन्त्या मनुष्येण च काकलीं गायता । स्त्री तावत्संस्कृतं पठन्ती दत्तनवनासिकारन्ध्ररज्जुरिव गृष्टिगौ(गौ)रधिकं सुसुआअदि । इदमव्यक्तध्वनेरनुकरणम् । सूसूशब्दं करोतीत्यर्थः । मनुष्योपि काकलीं गायन् शुष्कसुमनोदामवेष्टितो वृद्धपुरोहित इव मन्त्रं जपन्दृढं मे मह्यं न रोचते । णस्सा नासिकाविवररज्जुः । गृष्टिः सकृत्प्रसूता गौरिति । पोटाइ (?) युवतीति सूत्रे स्पष्टं कौमुद्याम् । इयं परिहासेनोपमेति ज्ञेयम् । शुष्केत्यादिविशेषणेन चिरकालजपप्रवणत्वमुक्तम् ।

१ दावेहि B (b) ; दुवेहि एव्व D. This *MS.* has एव्व throughout for ज्जेव्व H. ज्जेव J. दाव हिदुज्जेव (=हृदय एव)? २ इत्थाआए B (bd). ३ सक्किदं B (a) संकदं DH. ४ पढन्तीए BK. पढन्तीये B (a). ५ काआलि B काआली (?) H. ६ सक्किदं B (a). ७ पढन्ती BK. ८ दिइआ for गिट्ठी B (d) विअलगंठी for विअगिट्ठी (=विवरग्रन्थि) K. ९ अधिपंअं? B (a); अहिअं C, J. अधियं E. १० सुसुआआदि BDJ. शशुआदि (=सुषुभायते)K. ११ काअली AB (c) १२ सुक्ख-खवणो E. १३ °वेढिदो EGK. १४ वुढ्ढ°B (d). १५ दढं B (ad) दिडं K. १६ एअदि (राअदि?) B (ab).

चारुदत्तः । [1]वयस्य सुष्ठु खल्वद्य गीतं भाव रेभिलेन । न च भवान्परितुष्टः ।

रक्तं च नाम [2]मधुरं च [3]समं स्फुटं च
भावान्वितं च ललितं च मनोहरं च ।
किं वा प्रशस्तवचनैर्बहुभिर्मदुक्तै-
[4]रन्तर्हिता यदि भवेद्वनितेति मन्ये ॥ ९ ॥

अपि च ।

तं तस्य स्वरसंक्रमं [5]मृदुगिरः श्लिष्टं च [6]तन्त्रीस्वनं
वर्णानामपि मूर्च्छनान्तरगतं तारं विरामे [7]मृदुम् ।

---

चारु०–[रक्तं चेति । ] पूर्वोक्तं छन्दः । गीतमित्यस्य(स्या)नुपदोक्तस्य रक्तं चेत्यादीनि सप्त विशे[ष]णानि पूर्वस्मादुत्तरोत्तरं हेतुहेतुमद्भावापन्नानीत्यवधातव्यम् । रक्तं तत्तद्रागरमणीयमतो मधुरं रागमाधुर्यवत् । भावो रतिः । ललितं लालित्याख्यधर्मविशेषशाल्यत एव मनोहरम् । मदुक्तैर्मया चारुदत्तेनोक्तैर्बहुभिः प्रशस्तवचनै रक्त(क्तं) च मधुरं चेत्यादिभिः प्रशंसास्पदं गीतमिति कथनैः किं वा न किमपीत्यर्थः । अन्तर्हि(र्हि)ता गुप्ता पिहिता । अदृश्यमानेति यावत् । इ(ई)दृशी वनिता यदि गायन्ती भवेत्तदेति । इतीदं रक्तं चेत्यादिना कथितं गीतसौन्दर्यमा(हा)त्म्यमहं मन्ये नान्यथेत्यर्थः । तत्र चाच्छन्ना योपि(षि)देव गायन्ती स्थिता न तु पुरुष इति भासत इति भावः ॥ ९ ॥

[तं तस्येति । ] शार्दूलविक्रीडितं छन्दः । यद्गीतसमये विरतेपि गतेपि सर्वमिदमिदं शृण्वन्निवाहं गच्छामि तत्सत्यमित्यन्वयः । इद-

---

१ वअस्स B (a). २ मधरं च K. ३ समस्फुटं च G. ४ °रन्तर्हिता° D. K. ५ मृदुगिराश्लिष्ट K. ६ तन्त्रीस्वरं G. ७ मृदु B (ab).

हेलासंयमितं पुनश्च ललितं रा[1]गद्विरुच्चारितं
यत्सत्यं विरतेपि गीतसमये गच्छामि शृण्वन्निव ॥ ६ ॥

विदूषकः। भो वअस्स आव[2]णन्तररच्छाविहाएसु सुहं कुक्करा वि सु[3]त्ता। ता गे[4]हं गच्छेम्ह। अग्रतोवलोक्य। वअस्स पे-

---

मिदं किम्। मृदुगिरः कोमलकण्ठस्वरस्य तस्य रेभिलस्य तमिदानीं श्रुतं स्वरसंक्रमं स्वराणां निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमानां सप्तानां प्रसिद्धानां समीचीनं क्रममारोहावरोहरूपम्। शृण्वन्ति(न्नि)त्यत्रान्वयः सर्वद्वितीयान्तानाम्। श्लिष्टं गीताक्षरैरभिन्नतया श्रूयमाणम्। तन्त्री वीणा तस्याः स्वनं च शृण्वन्नित्यर्थः। वर्णानां गानाक्षराणां मूर्छना। यथा कुटुम्बिनः सर्वे एकीभूता भवन्ति हि। तथा स्वराणां संदोहो मूर्छनेत्यभिधीयत इति। तस्या अन्तरगतं मध्यगतम्। तार उ(मु)च्चम्। विरामे समाप्तौ। मृदुम्। इदं विशेषणत्रयं तन्त्रीस्वनस्येति बोध्यम्। हेला रागस्यारोहावरोहयोरनौचित्यम्। तत्र संयमितं नियमितम्। अनौचित्यान्निवृत्तमिति भावः। पुनश्च ललितं रागेषु द्विरुच्चारितं द्विस्त्रिरुक्तं गीतं शृण्वन्नित्यर्थः ॥ ६ ॥

विदू०—(६) भो वयस्य आपणान्तररथ्याविभागेषु सुखं कुक्कुरा अपि सुप्ताः। तद्गेहं गच्छावः। आपणो विपणिः। बाजार इति भाषा। तस्यान्तररथ्याविभागेषु मध्यमार्गप्रवेशेष्वित्यर्थः। वयस्य पश्य पश्य। एषोप्यन्धकारस्येवावकाशं ददद‍न्तरिक्षप्रासादादवतरति

---

१ रागाद्वि° B B (ad) J. २ °वणन्तरवीहीए° B. °वीहीरे B (a) वणन्तररच्छावितहीए एइं om. सुहं B (b) रच्छाविहाए pr. m. dele रच्छा at corr वीहीए B (d) रच्छावताराए E. ३ पसुत्ता BK. ४ गहं B (a) गेहे B (b).

क्ख पेक्ख । ऐसो[1] वि अन्धआरस्स विअ अवआसं देन्तो[2] अन्तरिक्खपासादादो ओदरदि भअवं चन्दो[3] (६) ।

चारुदत्तः । सम्यगाह भवान् ।

असौ हि दत्त्वा तिमिरावकाश-
मस्तं व्रजत्युन्नतकोटिरिन्दुः ।
जलावगाढस्य वनद्विपस्य
तीक्ष्णं विषाणाग्रमिवावशिष्टम् ॥ ७ ॥

विदूषकः । भो एदं अम्हाणं गेहम् । वड्ढमाणआ[4] उग्घाडेहि[5] दुआरअं[6] (७) ।

चेटः । अज्जमित्तेआह[7] शलशंजोए[8] शुणीअदि । आगदे[9] अज्जचालुदत्ते । तां[10] जाव दुआलअं शो[11] देमि । तथा कृत्वा । अज्ज

भगवांश्चन्द्रः । अवतरत्यस्ताभिमुखं यातीत्यर्थः । 'दृशेः पेक्खः (क्खः)' इति सूत्रेण पश्यतेः पेक्ख(क्ख)देशः । ददादित्यत्राभ्यस्तत्वान्नुमागमाभाव इति बोध्यम् ।

चारु०–[असौ हीति ।] स्फुटं पद्यम् । जलावगाढस्य जलनिमग्नस्य । वनद्विपस्येति वनपदेन सामदन्तवत्त्वं व्यज्यते । तेन च तीक्ष्णं विषाणाग्रं दन्ताग्रमिवेत्युपमापि संघटते इत्यपि बोध्यम् ॥७॥

विदू०–(७) भो एतदस्माकं गेहम् । वर्धमानक उद्घाटय । द्वारम् ।

चेटः–(८) आर्यमैत्रेय(स्य) स्वरसंयोगः श्रूयते । आगत आर्यचारुदत्तः । तद्यावद्द्वारमस्य ददामि । आर्य वन्दे । मैत्रेय त्वा-

१ एसो वि B (a). २ अवआस देंतो B (a). ३ चन्दो B (a) ४ वड्ढमाणआ वड्ढमाणआ B L. ५ देहि SBGK. ६ दुवारअं E. ७ अज्जअ° B (a). अज्जमित्ते B (d) अज्जमित्तेअ शल° AB (c) D. ८ संजोए B (a). ९ अगदे AL. १० ता जाव दुआलअ B (a). ११ शो om B, शोदेमि (=शोधयामि) K.

वन्दामि। मित्तेअं तुमं पि वन्दामि। एत्थ वित्थिण्णे आसणे[२] णिसीदन्तु[३] अज्जा (८)।

उभौ नाट्येन प्रविश्योपविशतः।

विदूषकः। वड्ढमाणआ[४] रअणिअं सद्दावेहि पादाइं धोइदुं (९)।

चारुदत्तः। सानुकम्पम्। अलं सुप्तजनं प्रबोधयितुम्।

चेटः। अज्ज[५] मित्तेअ अहं पाणिअं गेह्णे। तुमं पादाइं धोवेहि[६] (१०)।

विदूषकः। सक्रोधम्। भो वअस्स[८] एसो दाणिं दासीए पुत्तो[९] भविअ पाणिअं गेह्णेदि[१०]। मं उण[११] बम्हणं पादाइं सोच्चावेदि[१२] (११)।

---

मपि वन्दे। त्वां चारुदत्तम्(?)। अत्र विस्तीर्ण आसने निषीदत-आ(मा)र्यौ।

विदू०–(९) वर्धमानक रदनिकां सद्दावेह्याकारय पादौ धावितुम्।

चेटः–(१०) आर्य मैत्रेय अहं पानीयं गृह्णामि। त्वं पादौ धाव[य]। चारुदत्तस्य चरणौ प्रक्षालयेत्यर्थः।

विदू०–(११) भो वयस्य एष इदानीं दास्याः पुत्रो भूत्वा पानीयं गृह्णाति। मां पुनर्ब्राह्मणं पादौ सोच्चावेदि शोचयति। धावयतीत्यर्थः।

---

१ अज्जमित्तेअ B. २ आसणे D. ३ णिसीदन्तु B (abd) D. ४ वड्डमाणआ AB (c) वढ्ढमा° B (d). ५ अज्ज मित्तेअ bis B (b). ६ धावेहि (=धावय) D; साचावेहि E. ७ om: D EK. ८ वयस्स G. ९ उत्तो B. G. १० गह्णदि B गेह्णदि E (Sen) K. ११ मं च B. K. १२ सोधावेदि DF. ढोधावेहि AB (c) [illegible]

चारुदत्तः । वयस्य मैत्रेय त्वमुदकं गृहाण । वर्[1]धमानकः पादौ प्रक्षालयतु ।

चेटः । अज्ज मित्तेअ देहि उदअं (१२) ।

विदूषकस्तथा करोति । चेटश्चारुदत्तस्य पादौ प्रक्षाल्यापसरति ।

चारुदत्तः । दीयतां ब्राह्मणस्य पादोदकम् ।

विदूषकः । किं मम पादोदएहिं । भूमीए [2]ज्जेव्व मए गद्[3]दहेण विअ पुणोवि लोट्टिदव्वं (१३) ।

चेटः । अज्ज मित्तेअ ब[4]म्हणे क्खु तुमं (१४) ।

विदूषकः । जधा सव्वणागाणं म[6]ज्झे डु[7]ण्डुहो तधा सव्वबम्हणाणं मज्झे अहं बम्हणो (१५) ।

---

चेटः—(१२) आर्य मैत्रेय देह्युदकम् ।

विदू०—(१३) किं मम पादोदकैः । भूम्यामेव मया गर्दभेनेव पुनरपि लु(लो)ठितव्यम् । लोठनं कर्तव्यमित्यर्थः ।

चेटः—(१४) आर्य मैत्रेय ब्राह्मणः खलु त्वम् ।

विदू०—(१५) यथा सर्वनागानां मध्ये दुन्दुभस्तथा सर्वब्राह्मणानां मध्येहं ब्राह्मणः ।

१ वर्धमानश्च B. K, °नस्तु B (d). २ एव्व H. ३ विलिद्दगद्द° BC; ताडिदग° J; °मणपि लो(वि)ट्टिदग° K. ४ बह्मणो G. K. ५ तुमुं A.B (cd). ६ मज्जे E. ७ डुड्डहो B (a).

**चेटः**। अज्ज मित्तेअ तधा वि [1]धोइस्सं । तथा कृत्वा। अज्ज मित्तेअ एदं तं [2]शुवण्णभण्डअं मम दिवा [3]तुह [4]लत्तिं च। ता गेह्ण (१६)। इति दत्त्वा [5]निष्क्रान्तः।

**विदूषकः**। गृहीत्वा। अज्ज वि एदं चिट्ठदि। किं एत्थ [6]उज्जइणीए चोरोवि णत्थि। जो एदं दासीए[7] पुत्तो णिद्दाचोरं ण अवहरदि। भो वअस्स [8]अब्भन्तर[9]चतुःसालअं [10]पवेसआमि णं (१७)।

**चारुदत्तः**।

[11]अलं चतुःशालमिमं [12]प्रवेश्य
प्रकाशनारीधृत एष यस्मात्।
[13]तस्मात्स्वयं धारय विप्र ताव-
द्यावन्न तस्याः [14]खलु भोः समर्प्यते ॥ ८॥

---

चेटः—(१६) आर्य मैत्रेय तथापि धाविष्यामि। आर्य मैत्रेय एतत्तत्सुवर्णभाण्डं मम दिवा तव रात्रौ च। तद्गृहाण।

विदू॰—(१७) अद्याप्येतत्तिष्ठति। किमत्रोज्जयिन्यां चौरोपि नास्ति। य एतद्दास्याः पुत्रो निद्राचौर्य(रं) नापहरति। भो वयस्य अभ्यन्तरचतुःशालकं प्रवेशयामि। णं एनम्। अलंकारमित्यर्थः।

चारु॰—[अलमिति।] श्लोकः [उपजातिच्छन्दसा]। इममलंकारं चतुःशालं प्रवेशयालं वृथा। कुतो यस्मादेषोलंकारः प्रकाशनारी वेश्या

---

१ धोइस्सं B (abd) D २ सुवण्ण B (abd). ३ मुइ B (a). ४ रत्तिं B (abd) DE; तव रत्ति G. ५ नि क्रान्त. K. ६ उज्जअणीए B (a) ७ °डत्तो B; दासीपुत्तो G. ८ अभ्भतर H. ९ चतुरसा° B. १० पवेसामि B (abd). ११ अवे च॰? E.- १२ प्रविश्य B (a), प्रवेश (?) श्य B (d). १३ तत् B (a). १४ खलु भो K.

निद्रां[1] नाटयंस्तं तस्य स्वरसंक्रम[2]मिति पुनः पठति ।

विदूषकः । अवि णिद्दाअदि भवं[3] (१८) ।

चारुदत्तः । अथ किम् ।

इयं हि निद्रा नयनावलम्बिनी
ललाटदेशादुपसर्पतीव माम् ।
अदृश्यरूपा चपला[4] जरेव या[5]
मनुष्यसत्त्वं परिभूय वर्धते ॥ ९ ॥

विदूषकः । ता सुवेम्ह (१९) । नाट्येन[6] स्वपितः ।

ततः प्रविशति शर्विलकः ।

---

वसन्तसेना तया धृतो न्यासरूपेणास्मासु स्थापितः । तस्या वसन्तसेनायाः । शेषं सुगमम् ॥ ८ ॥ 'तं तस्य' इति पुनः पठतीति गानानुध्यानमिति ज्ञेयम् ।

विदू०—(१८) अपि निद्राति भा(भ)वान् ।

चारु०—[इयं हीति ।] श्लोकः [वंशस्थच्छन्दसा] सुगमः । निद्राजरयोरुपमेयोपमानभावः । सत्त्वं बलम् । सर्वाणि विशेषणानि द्व्यर्थान्युभयान्वितानि साधारणधर्मतां वहन्तीति बोध्यम् ॥ ९ ॥

विदू०—(१९) तत्स्वपिवः । तदिति हेत्वर्थेऽव्ययम् । निद्रागमनरूपकारणादित्यर्थः । स्वापं कुर्वः इत्यर्थः । स्वपितः स्वापं

---

१ विदू० which G om.; निद्रां नाटयति add B (ab)E ; निद्रा नाटयन् om. B (ab) E ; °यति चारु० तं तस्य B (ab) E. G. २ °संकम ? B (a) corr. संक्रम° B (d); °संक्रममिति षष्ठश्लोकं पु० D, °सयमं EFG. ३ भअव B (a) ४ चपळा K. ५ या om. BDEFG.K. ६ नाट्येन स्वपित.. om. B (b); स्वपतः G.

शर्विलकः ।

कृत्वा शरीरपरिणाहसुखप्रवेशं
शिक्षाबलेन[1] च बलेन च कर्ममार्गम् ।
गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो
निर्मुच्यमान इव जीर्णतनुर्भुजंगः ॥ १० ॥

नभोवलोक्य सहर्षम् । अये कथमस्त[2]मुपगच्छति स भगवान् मृगाङ्कः । तथा हि ।

नृपतिपुरुषशङ्कितप्रचारं
परगृहदूषणनिश्चितैकवीरम् ।
[3]घनतिमिरनिरुद्धसर्वभावा
रजनिरियं [4]जननीव संवृणोति ॥ ११ ॥

---

कुरुतः । चारुदत्तविदूषकावित्यर्थः । अत्रायं निशीथसमय इत्यनुसंधेयम् । शर्विलक इति । अयं शर्विलकः स एव यो द्वितीयाङ्के दर्दुरकेण कथितश्चौरः । चारुदत्तभवनपर्यन्तवृक्षवाटिकाप्राकारभित्तौ कृत्वा संधिं चारुदत्तभवनं प्रविष्ट इति तदिदमेव वर्णयति । [कृत्वेति ।] स्फुटार्थं पद्यम् [वसन्ततिलकच्छन्दसा] । कर्मणश्चौर्यस्य मार्गं संधिम् । अस्यैव शरीरेत्यादि विशेषणम् ॥ १० ॥ 'चौराणां चन्द्रमा रिपुः' इति वचनादिन्दावस्तं गते हृष्टस्तावदन्धकाररजनीं जननीरूपकेण वर्णयति ।[नृपतीति ।] [पुष्पिताग्राछन्दसा श्लोकः ।] अन्यगृहस्य यद्दूषणं चौर्येण सर्वस्वहरणं तस्य निश्चितं निश्चयस्तेन तत्र वैकं मुख्यं वीरं मामित्यर्थः । भावाः पदार्थाः। संवृणोत्याच्छादयति । यथा जननी

---

१ बलेन च बळेण° K. २ °स्तं गच्छति D. ३ घनपटलतमो निरुद्धतारा E. K; °निरुद्धमर्वभाव° D; °निरुद्धमर्वभावम् H, ४ न (?) जननीव B (a).

वृक्षवाटिकापरि[1]सरे संधिं कृत्वा प्रविष्टोऽस्मि मध्यमकम् । तद्यावदिदानीं चतुःशालकमपि दूषयामि । भोः

कामं नीचमिदं वद[2]न्ति पुरुषाः स्व[3]प्ने च यद्वर्धते
विश्वस्तेषु च वञ्चनापरिभवश्चौर्यं न शौर्यं हि तत् ।
स्वाधीना [4]वचनीयतापि हि वरं बद्धो न सेवाञ्जलि-
र्मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्वं [5]कृतो द्रौणिना ॥ १२ ॥

तत्[6]कस्मिन्नुद्देशे संधिमुत्पादयामि ।

---

जननीति शून्यमतिदुर्वृत्तमपि सुतं संवृणोति तथा तमिस्राप्यजस्रं चौरसहस्रं संवृणोतीति विशिष्टार्थः ॥ ११ ॥ वृक्षवाटिकापरिसरे प्राकारभित्ताविल्यर्थः । मध्यमकं मध्यभागम् । चतुःशालकमनुपदोक्तं गृहं चारुदत्तस्य । यद्विदूषकेणोक्तमेनमलंकारं चतुःशालकं प्रवेशयामि तदुपरि च चारुदत्तेनोक्तमलं चतुःशालमिमं प्रवेश्येत्यादि तदिदं चतुःशालकम् । दूषयामि संधिं कृत्वा भिंदामी(भिनद्मी)त्यर्थः । चौर्यमेव परमपुरुषार्थ इत्याह । [काममिति ।] शार्दूलविक्रीडितं छन्दः । स्पष्टम् । मार्ग इति नरेन्द्रसौप्तिकानां राजरक्षिणां वधे द्रौणिनाश्वत्थाम्ना एष मार्गः पूर्वं महाभारत एव कृतः न तु नवीनः कर्तव्यौ(व्यो)स्तीत्यर्थः । महाभारते सौप्तिके पर्वणि संविष्टसेना-द्वारपालकशर्वाज्ञामादायाश्वत्थामा सुप्तानेव सर्वानाजघान तद्वदेव सुप्ता एव मया हन्तव्या इत्याशयः ॥ १२ ॥

चतुःशालकभित्तिसमीपं गत्वा विचारयति तत्कस्मिन्नित्यादि ।

---

१ °परिवसरे H. २ वदन्तु J. ३ स्वभ्रेमि च यद्व B (a), स्वभेषु B (d). ४ वञ्चनीयतो (?) D. H. ५ कृतौ. B (a). ६ कास्मिन्न देशे B, कस्मिन्देशे B (a) G.

देशः को नु जलावसेकशिथिलो यस्मिन्न शब्दो भवे-
द्भित्तीनां च न दर्शनान्तरगतः संधिः करालो भवेत् ।
क्षारक्षीणतया च लोष्टककृशं जीर्णं[1] क्व हर्म्यं भवे-
त्कस्मिन्स्त्रीजनदर्शनं च[2] न भवेत्स्यादर्थसिद्धिश्च मे ॥१३॥

भित्तिं परामृश्य । नित्यादित्यदर्शनोदकसेचनेन[3] दूषितेयं[4] भूमिः क्षारक्षीणा[5] । मूषिकोत्करश्चेह । हन्त सिद्धोऽयमर्थः । प्रथममेतत्स्कन्दपुत्राणां सिद्धिलक्षणम् । अत्र कर्मप्रारम्भे कीदृशमि[6]दानीं संधिमुत्पादयामि । इह खलु भगवता कनकशक्तिना चतुर्विधः संध्युपायो दर्शितः । तद्यथा । पक्वेष्टकानामाकर्ष-

[देश(शः) को न्विति च ।] [पूर्वोक्तमेव छन्दः।] दर्शनं शास्त्रम् । दर्शनान्तरं कनकशक्त्यादिमतविशेषस्तत्र गतोनुगतस्तेन मतेन बोधित इत्यर्थः । करालो विपरीतः । तन्मतविरुद्ध इति यावत् । भित्तीनां संधिर्न भवेत् । कस्मिन्नुद्देशे स्त्रीजनदर्शनं ह्येतच्छास्त्रविरुद्धमनिष्टाचरणं वीरजनगर्हितं चेति संज्ञातव्यम् । श्लोकार्थः सर्वोयं विचाररूप एवेति बोध्यम् ॥ १३ ॥

अयमर्थः प्रयोजनं संधिरूपः सिद्ध इत्यर्थः । स्कन्दपुत्राणां स्कन्दोपजीविनां चौराचार्याणां प्रथमं सिद्धिलक्षणमेतत् । नित्यादित्येत्यादि यदुक्तं तत् । कर्मणश्चौर्यस्य प्रारम्भे इह खलु भगवता कनकशक्तिनेति । स्कन्देनेत्यर्थः । चौरशास्त्रप्रवर्तकश्चौराणां देवः स्वा(मि)मी कार्तिकस्तस्याप्युपदेष्टा गुरुर्ब्रह्मा । तदिदं स्फुटीभविष्यत्यखिलमनुप-

१ जीर्णी कि? B (b); क्षीणं क्व E  २ न च B (d) K  ३ नित्यादित्याद्दर्शनोदकसेवनेन B (ad) ( d corr सेचनेन ); °दित्या ...... सेचनेन च K.  ४ सेविता B (d).  ५ °क्षीणमूषि° B (d); °मूषको B (a).  ६ om. B (a).  ७ इष्टिका AB (bcd).

णमामे[1]ष्टकानां छेदनं पिण्डमयानां सेचनं काष्ठमयानां पाट[2]-नमिति । तदत्र पक्केष्टके इ[3]ष्टिकाकर्षणम् । [4]तत्र

[5]पद्मव्याकोशं भास्करं बालचन्द्रं
[6]वापी विस्तीर्णं स्वस्तिकं पूर्णकुम्भम् ।
तत्कस्मिन्देशे दर्शयाम्यात्मशि[7]ल्पं
दृष्ट्वा [8]श्वो यं यद्विस्मयं यान्ति पौराः ॥ १४ ॥

तदत्र पक्केष्टके पूर्णकुम्भ एव शोभते । तमुत्पादयामि ।

अन्यासु भित्तिषु मया निशि पाटितासु
क्षारक्षतासु विषमासु च कल्पनासु ।

---

दमग्रे । संध्युपायचातुर्विध्यमुदाहरति तद्यथेति । पक्केष्टकानामकर्षणमित्यादिना । [पद्मव्याकोशमिति ।] वैश्वदेवी छन्दः । शालिनीछन्दोपेक्षयात्रादावेक एव गुरुरधिक इति ध्येयम् । पद्मव्याकोशमित्यादयः संधीनां भेदाः । यदुक्तं चौरदर्शने 'इष्टकाभित्तौ संस्कारवशेन पद्मव्याकोशादिसंज्ञाः सप्तसंधयः' इति । पद्मवद्व्याकोशं फुल्लम् । फुल्लपद्मसदृशमित्यर्थः । भास्करं मण्डलाकारम् । पश्चान्येपि बालचन्द्रादयः संधयो नामसमानाकारा ज्ञेयाः । आत्मशिल्पं संधिम् । आत्मशिल्परूपं संधिमित्यभेदान्वयः । तत्तस्माद्धेतोः । कस्मिन्देशे दर्शयामि । यद्यस्माच्छ्वः पौराः यं संधिं दृष्ट्वा विस्मयं यान्ति परमरमणीयोयं संधिरिति वर्णयन्तीत्यर्थः ॥ १४ ॥

[अन्यास्विति ।] वसन्ततिलका छन्दः । सुगमं पद्यम् । कल्पनासु रचनासु विषमासु विपरीतासु सतीषु । दोषानिति यत्र न सम्य-

---

१ °ष्टकाना तु° BK. २ घा (प्पा?) टनं D. H. ३ इष्टका° H. K. ४ om. B (b). ५. पतन्व्या° B (a); तत्पव्या° B (b); पद्मं व्या° K. ६ वापीविस्तीर्णं J. ७ शील्पं ? H. ८ यत् om. B (ad) E, श्वो दृय वि° B (b); °विस्मयं om. E, श्वो यद्वि° G; यद्विस्मयं om. K.

दृष्ट्वा प्रभातसमये प्रतिवेशिवर्गो
दोषांश्च मे वदति कर्मणि कौशलं च ॥ १९ ॥

नमो वरदाय कुमारकार्त्तिकेयाय, नमः कनकशक्तये ब्रह्मण्याय देवाय देवव्रताय, नमो भास्करनन्दिने[1], नमो योगाचार्याय[2] यस्याहं प्रथमः शिष्यः । तेन च परितुष्टेन योगरोचना[3] मे दत्ता ।

अनया हि समालब्धं न मां द्रक्ष्यन्ति रक्षिणः ।
शस्त्रं च पतितं गात्रे रुजं नोत्पादयिष्यति ॥ १६ ॥

तथा करोति । धिक्कष्टम् । प्रमाणसूत्रं मे विस्मृतम् । विचिन्त्य । आं इदं[4] यज्ञोपवीतं प्रमाणसूत्रं भविष्यति । यज्ञोपवीतं हि नाम ब्राह्मणस्य महदुपकरणद्रव्यं[5] विशेषतोऽस्मद्विधस्य[6] । कुतः ।

एतेन मापयति भित्तिषु कर्ममार्ग-
मेतेन मोचयति भूषणसंप्रयोगान् ।
उद्घाटको भवति यन्त्रदृढे कपाटे
दष्टस्य कीटभुजगैः[7] परिवेष्टनं च ॥ १७ ॥

---

क्तत्र दोषान्वदिष्यति । यत्र तु सुन्दरं तत्र कर्मणि संधिरूपे कौशलमपि वदति वदिष्यतीत्यर्थः । अप्यर्थे चकारः ॥ १९ ॥

चिकीर्षुः संधिं निजं देवं प्रणमति नम इत्यादिना । कनकस्य शक्तिः कुन्तो यस्य तस्मै । योगाचार्यः स्कन्दशिष्यः । [अनयेति ।] अनुष्टुप् । समालब्धमालिप्तम् । रुजं पीडाम् ॥ १६ ॥

आ इ(मि)ति वितर्के(र्के) । अस्मद्विधस्य चौरचूडामणेरित्यर्थः । [एतेनेति ।] वसन्ततिलका छन्दः । ये(ए)तेन यज्ञोपवीतेन । कर्मणः संधेर्मार्गम् ॥ १७ ॥

---

१ भास्करानन्दिने B (a). २ आय B (a). ३ योगरचना D ४ इदं मे य॰ D. ५ उपकरणम् B; उपरणं B (a), उपकरण द्र॰ B (d). ६ हि अस्म॰ B (a). ७ भुजगै! H.

मापयित्वा कर्म समारभे । तथा कृत्वावलोक्य च । एकलोष्टावशेषोयं संधिः । धिक्कष्टम् । अहिना दष्टोस्मि । यज्ञोपवीतेनाङ्गुलीं बद्ध्वा विषवेगं नाटयति । चिकित्सां कृत्वा स्वस्थोस्मि । पुनः कर्म कृत्वा दृष्ट्वा च । अये ज्वलति प्रदीपः । तथा हि ।

शिखा प्रदीपस्य सुवर्णपिञ्जरा
महीतले संधिमुखेन निर्गता ।
विभाति पर्यन्ततमःसमावृता
सुवर्णरेखेव कषे निवेशिता ॥ १८ ॥

पुनः कर्म कृत्वा । समाप्तोयं संधिः । भवतु प्रविशामि । अथवा न तावत्प्रविशामि । प्रतिपुरुषं तावत्प्रवेशयामि । तथा कृत्वा । अये न कश्चित् । नमः कार्तिकेयाय । इति प्रविश्य दृष्ट्वा च । अये पुरुषद्वयं सुप्तम् । भवतु आत्मरक्षार्थं द्वारमु-

---

कर्म संधिरूपम् । अत्र पुरतः परतश्च कर्मपदेन संधिर्बोध्यः । [शिखा प्रदीपस्येति ।] स्फुटार्थकं पद्यम् [वंशस्थछन्दसा] ॥ १८ ॥ भवत्वित्यादि वितर्कः शर्विलकस्येति बोध्यम् । प्रतिपुरुषं सहवर्तमानं पुरुषमित्यर्थः (?) । तथा कृत्वा तं पुरुषमन्तः प्रवेश्य । अये न कश्चिदिति प्रश्नः । शर्विलकस्य बहिर्वर्तमानस्य नम इत्यादि पूर्वोक्तं पठित्वा प्रविष्टः शर्विलको दृष्ट्वा प्राह अये इत्यादि । पुरुषद्वयं चारुदत्तविदूषकद्वयात्मकं ज्ञातव्यम् । आत्मरक्षार्थमुद्घाटितद्वारेण

१ °मारभते B (a); समारेभ AB (c) DF, समारभते K २ °लोष्टा० H. ३ हा धिक B (d). ४ Corr. लि H. ५ कर्ममारभते ? कृत्वा B (a). ६ ज्वलिति H. ७ सुवर्णप° B (d). ८ सुर्णरे° B (d) ९ °षं निवेशयामि AB (bc) CDFGJK; प्रति° del वि et add in marg. तावत्प्र० B (d) pr. m. १० इति om. BCDGJ. ११ कपाट B. B (a) E.

द्धाटयामि । कथं जीर्णत्वा[१]दुद्गृहस्य विरौति क[२]पाटः । तद्या-वत्सलिलमन्वेषयामि । क्[३] नु खलु सलिलं भविष्यति । इतस्ततो दृष्ट्वा सलिलं गृहीत्वा क्षिपन्सशङ्कम् । मा तावद्भूमौ पत-च्छब्दमुत्पादयेत् । भवतु एवं तावत् । पृष्ठेन प्रतीक्ष्य कपाट-मुद्घाट्य । भवतु एवं तावदिदानीं प[४]रीक्षे किं ल[५]क्ष्यसुप्तमुत परमार्थसुप्तमिदं द्वयम् । त्रासयित्वा प[६]रीक्ष्य च । अये परमार्थसुप्ते-नानेन भवितव्यम् ।

तथा हि ।

निःश्[७]वासोऽस्य न शङ्कितः सु[८]विशदः स्वप्नान्तरं वर्त्तते
दृष्टिर्गाढनिमीलिता न विकला ना[९]भ्यन्तरे चञ्चला ।
गात्रं स्र[१०]स्तशरीरसंधिशिथिलं शय्याप्रमाणाधिकं
दीपं चापि न मर्षयेदभिमुखं स्याल्ल[११]क्ष्यसुप्तं यदि ॥ १९ ॥

झटिति पलायनार्थम् । प्रतीक्ष्य उद्घाट्य । भवत्वन्तरसंवादे । लक्ष्यसुप्तं व्याजसुप्तम् । मिथ्यासुप्तमित्यर्थः । 'व्याजोपदेशो लक्ष्यं च' इत्यमरः । उतेत्यव्ययं पुनरित्यर्थकं वितर्के परमार्थसुप्त(प्तं)सत्यसुप्तमिदं द्वयं पूर्वोक्तं पुरुषद्वयम् । अनेन पुरुषद्वयेन । वितर्क्य सत्यसुप्तत्वमुप-पादयति । तथा हीति । [निःश्वासोऽस्येति] श्लोकेन । शार्दूलविक्री-डितं छन्दः । पद्यमिदमतिस्फुटदर्थं कथयत्यर्थं निगदेनैव । अस्य पुरुषद्वयस्य निःश्वासः अस्य दृष्टिः अस्य गात्रं इत्यन्वयः । इदं द्वयम् । अस्येत्यस्य विभक्तिविपरिणामादिदमित्यायातं कर्तृ । दीपमिति कर्म । न मर्षयेन्न सहेत ॥ १९ ॥

१ °त्वाद्गृ° A B (c) °त्वं गृ° D H. २ कपाटं K. ३ क नु खलु । सलिलं गृहीत्वा° AB (bc) G ; नु om. K. ४ om. B परीक्षे किं । AB(bc); परीक्ष्य B (d), परीक्ष्ये D. H. ५ लक्ष K. ६ परीक्ष्य, H. ७ निश्वासो B (ad) विश्वासो H. ८ सुवि-शदस्तुल्यान्तरं B °°द स्तुल्या° B (d). °द स्वल्पान्तर B (ab) EGK. ९ नाभ्यन्तरं AB (bc) DEFG. १० अस्त B (d). ११ लक्ष B (abd) K.

समन्तादवलोक्य । अये कथं मृदङ्गः, [१]अयं दर्दुरः, अयं पणवः, इयमपि वीणा, एते वंशाः, अमी पुस्तकाः । कथं नाट्याचा[२]र्यस्य गृहमिदम् । अथवा भवनप्रत्ययात्प्रविष्टोऽस्मि । तत्किं परमार्थदरिद्रोऽयमुत राजभयाच्चौरभयाद्वा [३]भूमिष्ठं द्रव्यं धारयति । तन्ममापि नाम शर्विलकस्य [४]भूमिष्ठं द्रव्यम् । [५]भवतु । बीजं प्रक्षिपामि । तथा कृत्वा । निक्षिप्तं बीजं न क्वचि[६]त्स्फारीभवति । अये परमार्थदरिद्रोऽयम् । भवतु । गच्छामि ।

**विदूषकः** । उत्स्वप्नायते । भो वअस्स [७]सन्धी विअ दिज्जदि । [८]चोरं विअ पेक्खामि, ता गेह्णदु भवं एदं सुवण्णभण्डअं (१९) ।

---

भवनप्रत्ययात् । भवनस्य गृहस्य प्रत्ययाद्विश्वासात् । महदिदं भवनं भासते इति भूरि स्यादत्र धनमिति विश्वासादिति भावः । स्फारीभवतीति । अभिमन्त्रितो बीजविशेषो अन्तर्धनसहितभूतले क्षिप्तो बहुलीभवतीति चौरशास्त्रप्रसिद्धिः । अत्र तु न तथेति निश्चिनोति । अये परमार्थदरिद्रोऽयमिति ।

विदू०—उत्स्वप्नायत इति । सान्द्रनिद्रित एव जनो यत्र जल्पत्याक्रोशति हसति रोदिति विपरिवर्तत्युत्तिष्ठते च स उच्यत उत्स्वप्न इति । स्वप्नविशेष इत्यर्थः । अत एवोत्कृष्टः स्वप्न उत्स्वप्न इत्यवयवार्थः संगच्छते । तमुत्स्वप्नमाह । (१९) भो वयस्य

---

१ अयं om. H. २ °चार्यगृह° B,B (ad) K. ३ °ष्ठद्रव्यं B °स्थं द्रव्यं B (b) EGK °स्थद्रव्यं° B (d). ४ °स्थं द्रव्यं B (bd) K °स्थद्रव्यं G. ५ °तुं ज प्रक्षि० B (a) भधतु बीजं om. AB (c). ६ °क्वचिदपि ष्पा स्फारी० B (a) °स्फारि० H. ७ सुसन्धी (?) D सन्धिविअ दिज्जादि सन्धिविअ दिज्जादि G. ८ चोरोविअ G भाअवं B (a).

शर्विलकः । किं नु खल्वयमिह मां प्रविष्टं ज्ञात्वा दरिद्रोऽस्मीत्युपहसति । तत्किं । व्यापादयामि उत लघुत्वादुत्स्वप्नायते । दृष्ट्वा । अये जर्जरस्नानशाटीनिबद्धं दीपप्रभयोद्दीपितं सत्यमेवैतदलंकरणभाण्डम्[1] । भवतु । गृह्णामि । अथवा न युक्तं तुल्यावस्थं[2] कुलपुत्रजनं पीडयितुम् । तद्गच्छामि ।

विदूषकः । भो वअस्स[3] साविदो सि गोबह्मणकामाए[4] जइ एदं सुवण्णभण्डअं णं[5] गेह्णसि[6] (२०) ।

शर्विलकः । अनतिक्रमणीया[7] भगवती[8] गोकाम्या ब्राह्मणकाम्या च । तद्गृह्णामि[9] । अथवा ज्वलति प्रदीपः । अस्ति[10] च मया प्रदीपनिर्वापणार्थमाग्नेयः कीटो धार्यते । तं[11] तावत्प्रवेशयामि । तस्यायं[12] देशकालः । एष मुक्तो मया[13] कीटो यात्वैवास्य[14]

---

संधिरिव दीयते । चौरमिव पश्यामि । तद्गृह्णातु भवानेतत्सुवर्णभाण्डम् ।

[शर्वि०]—व्यापादयामि मारयामि । लघुत्वादिति । लघुर्नीचः खलूत्स्वप्नां(प्ना)यते न तु महाशय इति भावः । तुल्यावस्थं स्वसदृशावस्थं दरिद्रमित्यर्थः । कुलपुत्रजनं कुलीनम् ।

विदू०—(२०) भो वयस्य शापितोसि गोब्राह्मणकाम्यया यद्येतत्सुवर्णभाण्डं न गृह्णामि(सि) । गोकाम्यया ब्राह्मणकाम्यया चेत्यर्थः । गोकाम्या गवेच्छा । ब्राह्मणकाम्या ब्राह्मणेच्छा । ताभ्यां

---

१ °लंकार° B; °सत्येवेतद° B (a), सत्येवैतलंक° B (b). २ तुल्यावस्थकुल० B (a). ३ वयस्स C. ४ कम्याए D. ५ णं H. ६ गेह्णेसि G. ७ अनातिक्रमणी मम B (a). ८ भगवती मम B, भगव marg B(d). ९ तद् om. AB (bcd) K. गृह्णाति AB(bc) DG तद्गृण्हामि om. E १० अस्ती ? H. ११ °तं · · मि० om. B.B (ad). १२ °यामि । तथा कृत्वा । अये निर्वापित प्रदीप । तस्या° AB (bc) DFG. १३ मुक्ता वचैवास्य दीपोपरि मण्डकै · ·त्रै विरचयति B (a); दीपरि मण्डलं विचरति B (b); दीपोपरि · विरचयाति B (d) °मण्डलं विचरति DEFG. १४ .यात्येवास्य D.

दीपस्योपरि मण्डलैर्विचित्रैर्विचरति। [1]एष पक्षद्वयानिलेन निर्वापितो [2]भद्रपीठेन। धिक्। [3]कृतमन्धकारम्। अथवा [4]मयाप्यस्मद्ब्राह्मणकुले धिक्कृतमन्धकारम्। [5]अहं हि चतुर्वेदविदो प्रतिग्राहकस्य पुत्रः शर्विलको नाम ब्राह्मणो गणिकामदनिकार्थमकार्यमनुतिष्ठामि। इदानीं करोमि ब्राह्मणस्य प्रणयम्। इति जिघृक्षति।

विदूषकः। भो वअस्स सीदलो दे अग्गहत्थो (२१)।

शर्विलकः। धिक्प्रमादः। सलिलसंपर्काच्छीतलो मेग्रहस्तः। भवतु [6]कक्षयोर्हस्तं प्रक्षिपामि। [7]नाट्येन [8]सव्यहस्तमुष्णीकृत्य गृह्णाति।

विदूषकः। गहिदं (२२)।

---

शापितः शपथं प्रापित इत्यर्थः। सति संभवे गोब्राह्मणयोरिच्छापूरणीयैवास्ति कैरिति धर्मदर्शनराद्धान्तः। गोब्राह्मणयोरिच्छायाः प्रतिघाते महत्पातकमिति निर्णयसिन्धुमुखग्रन्थेषु स्पष्टम्। यदीयं(दं) सुवर्णभाण्डं न गृह्णासि तर्हि गोब्राह्मणेच्छयोः प्रतिघातं करोषीत्याशयः। तदिदं सर्वमनुसंधायाह शर्विलकः।

[शर्वि०]—अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या चेति। भगवती पूज्या शपथरूपा।

विदू०—(२१)भो वयस्य शीतलस्तेग्रहस्तः हस्ताग्रमित्यर्थः। राजदन्तादिवत्।

विदू०—(२२) गृहीतम्।

---

१ एव B (d). २ भद्रकीटेन D. H. ३ °विकृत० (?)AB (c) ४ °ममाप्य० E. ५ अहं कि H. ६ कक्षाया DH. ७ इति नाटचेन० BB (a) ८ स्वहस्त...त्य G; च° K.

शर्विलकः। अनतिक्रमणीयोयं ब्राह्मणप्रणयः[1] तद्गृहीतम्।

विदूषकः। दाणिं[2] विक्किणिदपण्णो[3] विअ वाणिओ अहं[4] सुहं सुविस्सं (२३)।

शर्विलकः। महाब्राह्मण स्वपिहि वर्षशतम्[5]। कष्टमेवं मदनिकागणिकार्थे ब्राह्मणकुलं[6] तमसि पातितम्। अथवा आत्मा[7] पातितः।

धिगस्तु खलु दारिद्र्यमनिर्वेदितपौरुषम्[8]।
यदेतद्गर्हितं कर्म निन्दामि च करोमि च॥ २०॥

तद्यावन्मदनिकाया निष्क्रयणार्थं[9] वसन्तसेनागृहं गच्छामि। परिक्रम्यावलोक्य च। अये पदशब्द इव। मा[10] नाम रक्षिणः। भवतु। स्तम्भीभूत्वा तिष्ठामि। अथवा ममापि[11] नाम शर्विलकस्य रक्षिणः। योऽहं

मार्जारः क्रमणे मृगः प्रसरणे श्येनो गृहालुञ्चने[12]
सुप्तासुप्तमनुष्यवीर्यतुलने श्वा सर्पणे पन्नगः।

---

विदू०–(२३) इदानीं विक्रीतपण्य इव वणिगहं सुखं स्वप्स्यामि।

शर्वि०– ब्राह्मणकुलं निजपित्रादि गोत्रम्। तमसि पापे। विचार्य राद्धान्तमाह। अथवेति। [मार्जारः क्रमणे इति।] शार्दूल-

---

१ The words प्रणयः ...... महाब्राह्मण D add marg. २ इदाणि B (ab) K दाणीं AB (c) J. इदाणी B (d). ३ विणिक्किणिद B (d) ४ om. B.B (ad). ५ वर्षशतं स्वपिहि B.B (a). ६ ब्राह्मकुलं B (a), °णस्य कुल० B (d) ७ आत्मापि पातित G. ८ वेदित J. ९ नि क्र° K. १० मानामस्तम्भो F °मानाम ....... स्तम्भो° ACDEGK. ११ ममापि शर्वि० ... नाम B (a). १२ °गृहा० AB (bcd) DF.

माया रूपशरीरवेशरचने, वाग्देशभाषान्तरे
दीपो रात्रिषु संकटेषु डुडुभो[1] वाजी स्थले नौर्जले ॥२१॥

अपि च ।

भुजग इव गतौ गिरिः स्थिरत्वे
पतगपतेः परिसर्पणे च तुल्यः ।
शश इव भुवनावलोकनेऽहं
वृक इव च ग्रहणे बले च सिंहः ॥ २२ ॥

प्रविश्य ।

**रदनिका** । हेद्धि[2] हद्धी । बाहिरदुआरसालाए[3] पसुत्तो वड्ढमाणओ । सोवि एत्थ ण दीसदि[4] । भोदु । अज्जमित्तेअं[5] सद्दावेमि (२४) । इति परिक्रामति ।

**शर्विलकः** । रदनिकां हन्तुमिच्छति । निरूप्य । कथं स्त्री ! भवतु । गच्छामि । इति निष्क्रान्तः[6] ।

---

विक्रीडितछन्दः । सुगमम् । रूपशरीरवेषरचने माया शाब-(म्ब)?री विद्या । अहं देशभाषान्तरे तत्तद्देशभाषाविज्ञानमध्ये वाग्देवी सरस्वती अहमित्यन्वयः । शेषं स्पष्टम् ॥ २१ ॥

[भुजग इव गताविति ।] पुष्पिताग्रा छन्दः । पतगपतेर्गरुडस्य तुल्यः । परिसर्पणे त्वरितधावने ॥ २२ ॥

रदनिका चारुदत्तदासी पूर्वोक्ता । (२४) हद्धि हद्धीति भये । बहिर्द्वारशालायां प्रसुप्तो वर्धमानकः । सोऽप्यत्र न दृश्यते । भवतु । आर्यमैत्रेयं सद्दावेमि आह्वयामि । निष्क्रान्तः शर्विलक इत्यर्थः ।

---

१ डुद्रमो B (a), डुमो B (b) corr. डुडुभो B (d); डुडुभो K. २ हाद्धि Semel (once) D. H हद्धी F ३ सायए B (a) ; शालाए B (b); शालए B (d). ४ दीसइ AB (bcd) FJK. दीसई H.- ५ मित्तेयं K. ६ °नि क्रान्तः K.

**रदनिका** । गत्वा सत्रासम् । हद्धि हद्धी अम्हाणं गेहे संधिं कप्पिअ चोरो णिक्कमति[1] । भोदु । मित्तेअं गदुअ पबोधेमि । विदूषकमुपगम्य । अज्ज मित्तेअ उट्ठेहि[2] उट्ठेहि । अम्हाणं गेहे संधिं कप्पिअ चोरो णिक्कन्तो (२५) ।

**विदूषकः** । उत्थाय । आः[3] दासीए धीए किं भणासि । चोरो[4] कप्पिअ संधिं णिक्कन्तो (२६) ।

**रदनिका** । हदास अलं परिहासेण । किं ण पेक्खसि एणं (२७) ।

**विदूषकः** । आः[5] दासीए धीए किं[6] भणासि । दुदिअं[7] विअ दुआरअं उद्घाडिदंत्ति[8] । भो वअस्स चारुदत्त, उट्ठेहि उट्ठेहि । अम्हाणं गेहे संधिं दइअ चोरो णिक्कन्तो (२८) ।

---

रद०–(२५) हद्धि हद्धी [हा धिक् हा धिक्] अस्माकं गेहे संधिं कल्पयित्वा चौरो निष्क्रामति । कप्पिअ इति कर्तयित्वेत्यर्थो वा । भवतु । मैत्रेयं गत्वा प्रबोधयामि । आर्य मैत्रेय उत्तिष्ठोत्तिष्ठ । अस्माकं गेहे संधिं कर्तयित्वा चौरो निष्क्रान्तः ।

विदू०–(२६) आ इत्याश्चर्ये । दास्याः पुत्रि किं भणसि । चौरः कल्पयित्वा संधिं निष्क्रान्तः । धि(धी)या इति धी इति पुत्रीनाम भाषायाम् ।

रद०–(२७) हताश अलं परिहासेन । किं न प्रेक्षसे एतत् ।

विदू०–(२८) आः दास्याः पुत्रिके किं भणसि । द्वितीयमिव

---

१ णिक्कमदि B G. २ उत्थेहि B (bd); उत्थेहि उत्थेहि G. ३ आ D. H. ४ चोरो कप्पिदो संधी णिक्कन्तोत्ति BB (ad) K, °चोरं कप्पिअ संधी० B (b) CJ. ५ om. B (d). E. ६ किं भणासि om. B (a). ७ °दुदिअं बिदुआ० BK, ह दुदिअं B (a), दुदिअंपि add marg. B (d), दुदीअ दुआरअं G, दुदिअं H. ८ उग्घाडिदत्ति B : °डत्ति० A B (c), दंति B (abd), उग्घाडिदत्ति D.

चारुदत्तः । भवतु । भोः अलं परिहासेन ।

विदूषकः । भो[1] ण परिहासो । पेक्खदु भवं[2] (२९) ।

चारुदत्तः । कस्मिन्नुद्देशे[3] ।

विदूषकः । भो एसो (३०) ।

चारुदत्तः । विलोक्य । अहो दर्शनीयोयं संधिः ।

उपरितल[4]निपातितेष्टकोयं
शिरसि तनुर्विपुलश्च मध्यदेशे ।
असदृशजनसंप्रयोगभीरो[5]-
र्हृदयमिव स्फुटितं महागृहस्य ॥ २३ ॥

कथमस्मिन्नपि कर्मणि कुशलता ।

विदूषकः । भो वअस्स अअं[6] संधी दुवेहिं[7] ज्जेव्व[8] दिण्णो भवे । आदु आगन्तुएण[9] सिक्खिदुकामेण वा । अण्णधा[10] इध[11] उज्जइणीए[12] को[13] अम्हाणं घरविहवं[14] ण आणादि (३१) ।

---

द्वारमुद्घाटितमिति । भो वयस्य चारुदत्त उत्तिष्ठोत्तिष्ठ । अस्माकं गेहे संधिं दत्वा चौरो निष्क्रान्तः ।

विदू०—(२९) भो न परिहासः । प्रेक्षतां भवान् ।

विदू०—(३०) भो एषः ।

चारु०—दर्शनीयः सुन्दरः । [उपरितलेति] पुष्पिताग्राछन्दः । स्पष्टार्थं पद्यम् ॥२३॥ अस्मिन्नपि कर्मणीति संधावित्यर्थः ।

विदू०—निद्रायां तस्करापहृतहेमभाण्डगमनमजानन्नेवाह भो इत्यादि । (३१) भो वयस्य अयं संधिर्द्वाभ्यामेव दत्तो भवेत् । अथवा-

---

१ °भो B(ab). २ भअवं B(a). ३ कस्मिन्नु देशे B. ४ उपरितन B(d). ५ भीरोर्ह° H. ६ अयू B(d). ७ दुवहि B(a). ८ एव्व DH ९ °अगन्तु °H. १० अण्दहा B B(ad). ११ इह B(a). १२ उज्जअणीए B(a). १३ अम्हाण घरविहवं को B. १४ घरं विहव A.

चारुदत्तः ।

वैदेश्येन कृतो भवेन्मम गृहे व्यापारमभ्यस्यता
नासौ वेदितवान्धनैर्[1]विरहितं विस्रब्ध[2]सुप्तं जनम् ।
दृष्ट्वा प्राङ्महतीं निवासरचनामस्माकमाशान्वितः
संधिच्छेदनखिन्न एव सुचिरं पश्चान्निराशो गतः ॥२४॥

ततः सुहृद्भ्यः किमसौ कथयिष्यति तपस्वी सार्थवाहसुतस्य गृहं प्रविश्य न किंचिन्मया[3] समासादितमिति ।

विदूषकः । भो कधं तं ज्जेव्व[4] चोरहदअं अणुसोचेसि[5] । तेण चिन्तिदं महन्तं एदं गेहं । इदो रअणभण्डअं सुवण्णभण्डअं वा णिक्कामइस्सामि[6] । स्मृत्वा[7] सविषादमात्मगतम् । कहिं तं सुवण्णभ[8]ण्डअं । पुनरनुस्मृत्य प्रकाशम् । भो वअस्स तुमं सव्वकालं[9] भणा-

---

गन्तुकेन शिक्षितुकामेन वा । अन्यथेहोज्जयिन्यां कोऽस्माकं गृहविभवं न जानाति । व्यर्थं कृतः संधिरिति भावः ।

चारु०—निद्रितान्मैत्रेयात्तस्करेणापहृतं हेमभाण्डमजानन्नेव प्राह । [वैदेश्येनेति ।] [शार्दूलविक्रीडितं छन्दः ।] धनैर्विरहितं यतोऽतो विश्रब्धसुप्तम् । स्फुटार्थम् ॥ २४ ॥ ततः यतो रिक्तो गतस्तस्मादित्यर्थः । तपस्वी शोच्यः । सार्थवाहः सागरदत्तश्चारुदत्तपिता तत्सुतस्येत्यर्थः । सार्थवाहसुतस्येत्यनेन महाधनिकपुत्रत्वमावेद्यते ।

विदू०—(३२) भोः कथं तमेव चौरहतकमनुशोचामि(चसि) । तेन चिन्तितं महदेतद्गृहम् । इतो रत्नभाण्डं सुवर्णभाण्डं वा निष्क्रामयिष्यामि । कुत्र तत्सुवर्णभाण्डम् । भो वयस्य त्वं सर्वकालं भणसि

---

१ °धनैर्वि° H. २ विश्रब्ध B. B (ad). D. ३ °मयासादित° E. ४ एव्व H. ५ अणुसोचेमि A B (c) G. अणुसोचसि C. J. ६ °यिस्सामि° B (a). ७ स्मृत्या (त्वा ?) D. ८ °सुवण्णस्स भ० K. ९ सव्वं कालं B (a).

से मुक्खो मित्तेअओ[१] अपण्डिदो मित्तेअओ त्ति । सुट्ठु[२] मए[३] कदं तं[४] सुवण्णभण्डअं भवदो हत्थे समप्पअन्तेण । अण्णधा[५] दासीए पुत्तेण[६] अवहदं भवे (३२) ।

चारुदत्तः । अलं परिहासेन ।

विदूषकः। भो जह[७] णाम अहं मुक्खो किं ता परिहासस्स वि देशआलं ण आणामि (३३) ।

चारुदत्तः । कस्यां वेलायाम् ।

विदूषकः । भो जदा तुमं मए भणिदोसि[९] सीदलो दे अग्गहत्थो (३४) ।

चारुदत्तः । कदाचिदेवमपि स्यात् । सर्वतो निरूप्य सहर्षम् । वयस्य दिष्ट्या ते[१०] प्रियं निवेदयामि ।

विदूषकः । किं ण अवहदं (३५) ।

चारुदत्तः । हृतम् ।

---

मूर्खो मैत्रे[यः] अपण्डितो मैत्रेय इति । सुष्ठु मया कृतं तत्सुवर्णभाण्डं भवतो हस्ते समर्पयता । अन्यथा दास्याः पुत्रेणापहृतं भवेत् । दास्याः पुत्रेणेति गाली । चौरेणेत्यर्थः ।

विदू०–(३३)भो यथा नामाहं मूर्खः किं तत्परिहासस्यापि देशकालं न जानामि । परिहासस्य देशकालमपीत्यन्वयः ।

विदू०–(३४) भो यदा त्वं मया भणितोसि शीतलस्तेऽग्रहस्तः ।

विदू०–(३५) किं नापहृतम् ।

---

१ मित्तेओ B (a). २ सुट्ठुक्खु मए B ; °खु° B (a). ३ मे किदं B (a). ४ om. B (a) ५ अण्णहा B.B (a). ६ उत्तेण B. B (a). ७ जहवि णाम ८. तहावि परि° B. B (a). ८ om. B. ९ °णिदो सदिलो B (a), °णिदोसि सिद० B (b) ; णिदो सिद° B (d). १० प्रियं ते B. B (ad). G. K.

विदूषकः। तधा वि[1] किं पिअं (३६)।

चारुदत्तः। यदसौ कृतार्थो गतः।

विदूषकः। णासो क्खु सो (३७)।

चारुदत्तः। कथं न्यासः। मोहमुपगतः[2]।

विदूषकः। समस्ससदु[3] भवं। जइ णासो चोरेण अवहृदो तुमं[4] किं मोहं उवगदो[5] (३८)।

चारुदत्तः। समाश्वस्य। वयस्य[6]

कः श्रद्धास्यति[7] भूतार्थं सर्वो मां[8] तुलयिष्यति[9]।
शङ्कनीया हि लोकेस्मिन्निष्प्रतापा[10] दरिद्रता ॥ २५ ॥

भोः कष्टम्[11]।

यदि तावत्कृतान्तेन प्रणयोऽर्थेषु मे कृतः।
किमिदानीं नृशंसेन चारित्रमपि[12] दूषितम् ॥ २६ ॥

---

विदू०—(३६) तथापि किं प्रियम्।

विदू०—(३७) न्यासः खलु सः।

विदू०—(३८) समाश्वसितु भवान्। यदि न्यासश्चौरेणापहृतस्त्वमपि किं मोहमुपगतः।

चारु०— [कः श्रद्धेति।] अनुष्टुप् श्लोकः। भूतार्थं चौरेण हृतं हेमभाण्डमित्येवंरूपम् ॥ २५ ॥

[यदीति।] श्लोकः [पूर्वोक्तमेव छन्दः]। कृतान्तेन दैवेन। 'कृतान्तो यमसिद्धान्त दैवाकुशलकर्मसु' इत्यमरः ॥ २६ ॥

---

१ किं पियं A B (bc); कं पिअं H. २ °मुपागत B (a). ३ समस्ससदु D. H. ४ तुमं बि किं AB (bcd) del. बि B (d). ५ उपगदो B. G; उपागदो B (a). ६ om. B B (ad). ७ वयस्यांत pr m.क श्रद्धास्य om; del वयस्य add in marg क श्रद्धास्यति D. ८ मा B (d). ९ °इष्याति°G. १० नि प्रतापा K. ११ om B (d). १२ चारित्रमपि G.

विदूषकः । अहं क्खु [1]अवलविस्सं । केण दि[2]ण्णं, केण गहिदं, को वा सक्खि त्ति (३९) ।

चारुदत्तः । अह[3]मिदानीमनृतमभिधास्ये ।

भैक्ष्येणाप्य[4]र्जयिष्यामि पुनर्न्यासप्रतिक्रियाम् ।
अनृतं नाभिधास्यामि चारित्रभ्रंशकारणम् ॥ २७ ॥

रदनिका । ता जाव [5]अज्जाधूदाए [6]गदुअ णि[7]वेदेमि (४०) । इति नि[8]ष्क्रान्ता ।

प्रविश्य चेट्या सह चारुदत्तवधूः ।

वधूः । ससंभ्रमम् । [9]अइ सच्चं [10]अवरिक्खदसरीरो अज्जउत्तो अज्जमित्तेएण सह (४१) ।

चेटी । भट्टिणि सच्चं । किंतु जो सो वे[11]स्साजणकेरको [12]अलंकारओ सो अवहदो (४२) ।

---

विदू०—(३९) अहं खल्वपलपिष्यामि । केन दत्तं, केन गृहीतं, को वा साक्षीति ।

चारु०—[भैक्ष्येणेति ।] ॥ २७ ॥

रद०—(४०) तद्यावदार्याधूतायै गत्वा निवेदयामि । धूता चारुदत्तस्य स्त्री । अत्र वधूपदेनेयमेव सर्वत्र ग्राह्या ।

वधूः—(४१) अपि सत्यमपरिक्षतशरीर आर्यपुत्रः आर्यमैत्रेयेण सह । चेटीयं रदनिकैवेति ज्ञेयम् ।

चेटी—(४२) भट्टिनि स्वामिनि । सत्यम् । किं तु यः स वेश्याजनस्यालंकारः सोपहृतः । सत्यं त्वयोक्तं अपरीत्यादि तत्सत्यमित्यर्थः । केरक इति षष्ठ्यर्थेत्र प्राकृते पूर्वापरत्र बोध्यम् ।

---

१ अबलयिबिस्सं ? B (b). २ दिणं दिणं B (a). ३ अधि (?) धास्ये B (d). ४ प्या (?) र्जयिष्यामि D. ५ अज्जाए धूदाए H. ६ om. B (a). ७ णिवेदिमि E. ८.नि क्रान्ता G. K. ९ आवि सच्चं G. १० अबक्खद० B (a). ११ वेश्याजन B (d). १२ अलंकारको D. H.

वधूर्मोहं नाटयति ।

चेटी । [1]समस्ससदु अज्जा धूदा (४३) ।

वधूः । समाश्वस्य । हञ्जे किं भणासि [2]अवरिक्खदसरीरो अज्जउत्तो त्ति । वरं दाणिं सो सरीरेण [3]परिक्खदो ण उण चारित्तेण । संपदं [4]उज्जइणीए जणो [5]एव्वं मन्तइस्सदि दलि[6]द्ददाए अज्जउत्तेण [7]ज्जेव [8]ईदिसं अकज्जं [9]अणुचिट्ठिदंत्ति । [10]ऊर्ध्वमवलोक्य निः[11]श्वस्य च । [12]भअवं [13]कअन्त पोक्खरव[14]त्तपडिद-जलविन्दुचञ्चलेहिं की[15]लसि दलिद्दपु[16]रिसभाअधेएहिं ! इअं च मे एक्का [17]मादुघरलद्धा रअणावली चिट्ठदि । [18]एदं पि अदिसोण्डीरदाए [19]अज्जउत्तो ण गेह्लिस्सदि । हञ्जे अज्जमित्तेअं दाव सद्दावेहि (४४) ।

---

चेटी—(४३) समाश्वसितु आ(त्वा)र्या धूता ।

वधूः—(४४) हञ्जे किं भणस्यपरिक्षतशरीर आर्यपुत्र इति । वरमिदानीं स शरीरेण परिक्षतो न पुनश्चारित्रेण । सांप्रतमुज्जयिन्यां जन एवं मन्त्रयिष्यति दरिद्रतयार्यपुत्रेणैवेदृशमकार्यमनुष्ठितमिति । भगवन् कृतान्त हे दैवेत्यर्थः । पुष्करपत्रपतितजलबिन्दुचञ्चलैः क्रीडसि दरिद्रपुरुषभागधेयैः । इयं च मे एका मातृगृहलब्धा रत्नावली तिष्ठति । एतामप्यतिशौण्डीरतयार्यपुत्रो न ग्रहीष्यति । हञ्जे आर्यमैत्रेयं तावदाकारय ।

---

१ समस्ससदु समस्ससदु B. K. २ अवक्खद B (a). ३ परिक्खत्तो B (a). ४ उज्जअणीए B (b) K. ५ एवं B (d); एव्व स मन्त॰ B (b). ६ दलिदाए B (b); दलीहादाए B (d) ७ एव्व H. ८ इदिसं AB (d). ९ अणुविचिदात्ति (?) K. १० ऊर्ध्दं A. ११ निश्वस्य A B (abc). १२ भवं B (a). १३ काअन्त B (b). १४ °पडिदजलेहिं कील॰ B (b) १५ कीलेसि H. १६ °पुरुस G. १७ °मादुळघर॰ K. १८ °एदं आदि° D: H; शोण्डीर A. B (c), °एदंपि सोण्डीर॰ K. १९ एसो अज्जउत्तो B. B (ad). K.

**चेटी** । जं अज्जा धूदा[1] आणवेदि । विदूषकमुपगम्य । अज्ज मित्तेअ धूदा दे सद्दावेदि (४५) ।

**विदूषकः** । कहिं सा (४६) ।

**चेटी** । एसा चिट्ठदि, उवसप्प[2] (४७) ।

**विदूषकः** । उपसृत्य । सोत्थि भोदीए[3] (४८) ।

**वधूः** । अज्ज[4] वन्दामि । अज्ज पुरत्थिआमुहो[5] होहि (४९) ।

**विदूषकः** । एसो[6] भोदि पुरत्थिआमुहो[7] संवुत्तोम्हि[8] (५०) ।

**वधूः** । अज्ज पडिच्छ[9] इमं (५१) ।

---

चेटी–(४५) यदार्या धूताज्ञापयति । आर्य मैत्रेय धूता ते त्वां आकारयति ।

विदू०–(४६) कुत्र सा ।

चेटी–(४७) एषा तिष्ठति । उपसर्प ।

विदू०–(४८) स्वस्ति भवत्यै ।

वधूः–(४९) आर्य वन्दे । आर्य पुरस्तान्मुखो भव । पुरत्थिआ पुरस्तादित्यर्थः ।

विदू०–(५०) एष हे भवति पुरस्तान्मुखः संवृत्तोस्मि ।

वधूः–(५१)आर्य प्रतीच्छ गृहाणेत्यर्थः । इमां रत्नावलीमित्यर्थः ।

---

१ धूआ G. २ उपसप्प B (a). ३ भोदिए H. ४ अज्जं AB (c)DFGK. ५ पुरत्थिमा B (a) (=पौरस्त्या०) K; पुरात्थिअ B (b); पुरत्थीआ B (d) ६ एसो भो० CDJ. ७ पुरुस्थिमा B (a); पुरास्थिअ B (b). ८ संउत्तो G. ह्मि om. B (a) as G; संवृत्तोह्मि. H. ९ पडिच्छ H.

विदूषकः। [1]किं णेणदं (५२)।

वधूः। [2]अहं क्खु [3]रअणसट्ठिं [4]उववसिदा [5]आसि। [6]तहिं जधाविहवाणुसारेण बम्हणो [7]पडिग्गाहिदवो। [8]सो अण्णपडिग्गाहिदो। ता तस्स कदे पडिछ इमं [9]रअणमालिअं (५३)।

विदूषकः। गृहीत्वा। सोत्थि। [10]गमिस्सं। पिअवअस्सस्स णिवेदेमि[11] (५४)।

---

विदू०–(५२) किं ने(णे)दमिति वितर्के विचारे वा ग्रन्थेत्र सर्वत्र बोध्यम्।

वधूः–(५३) अहं खलु रत्नषष्ठीमुपोषितासम्। तत्र यथाविभवानुसारेण ब्राह्मणः प्रतिग्राहि(हयि)तव्यः। सः अन्यप्रतिग्राहितः (?)। तत्तस्य कृते प्रतीच्छेमां रत्नमालिकाम्। रत्नषष्ठी अरण्यरत्नषष्ठिकाभिधं व्रतम्। इदं ग्रीष्मव्रतमित्येके। तत्र रत्नषष्ठीव्रत इत्यर्थः। सर्वोप्ययं परिहास इति ज्ञेयम्। दीयते चेयं सुवर्णभाण्डप्रतिदानत्वेनेतीदं स्फुटमा(म)ङ्कसमाप्त्येव।

विदू०–(५४) स्वस्ति। गमिष्यामि। प्रियवयस्यस्य निवेदयामि। यत्त्वयोक्तं दानं दीयत इति तन्निवेदयामीत्यर्थः। अत एवाह।

---

१ भोदि किं णेदं B, °किं णेदं AB (cd) D; °किण्णेद K. २ अज्ज अहं० B. B (ad). ३ रअणछट्टि B; छट्ठि B (a); सट्ठि AB (cd); सट्टीं D सट्ठी H छट्ठिं K ४ उअ (अ?) वसिदा B(a); उपवसिदा B (d). ५ आसिं AB (bc); असि H. ६ ताहि B (d) ७ पडिग्गाहिदव्वो G; पडिग्गाहिदो AB (bc) ८ सो अण (=सच न) BCE; सो अण्ण० AB (bc); सो अण° pr. m., del. अ B (d) सो अण्णत्तं० D, .H. अण्णं पडिग्गहिदो G, सोअ पडि० J. ९ रअणावलिअं B; रअणावालिअं B (a). १० गहिस्सं B (d) ११ °दिमि G.

वधूः । अज्ज मित्तेअ मा[1] क्खु मं लज्जावेहि (९९) । इति निष्क्रान्ता ।

विदूषकः । सविस्मयम् । अहो से महाणुभावदा (९६) ।

चारुदत्तः । अये चिरयति मैत्रेयः । मा नाम वैक्लव्यादकार्यं कुर्यात् । मैत्रेय[2] मैत्रेय ।

विदूषकः । उपसृत्य । एसोम्हि । गेण्ह एदं (९७) । रत्नावलीं दर्शयति ।

चारुदत्तः । किमेतत् ।

विदूषकः । भो[3] जं दे सरिसदारसंगहस्स फलं (९८) ।

चारुदत्तः । कथं ब्राह्मणो मामनुकम्पते । कष्टमिदानीमस्मि दरिद्रः ।

आत्मभाग्यक्षतद्रव्यः[4] स्त्रीद्रव्येणानुकम्पितः ।
अर्थतः पुरुषो नारी या नारी सार्थतः पुमान् ॥ २७ ॥

वधूः—(९९) आर्य मैत्रेय मा खलु मां लज्जावेहि । लज्जितां कुर्वित्यर्थः ।

विदू०—स्वगतम् । (९६) अहोस्या महानुभावता । अस्या धूतायाः ।

विदू०—(९७) एषोस्मि । गृहाणैताम् ।

विदू०—(९८) भो यत्ते सदृशदारसंग्रहस्य फलम् । सदृशेति योग्येत्यर्थः ।

१ मा क्खु॰तं० B. B (a); °रखु मं° H. २ Once K. ३ °भो वअस्स जं० B; भोवस्स B (a); pr. m. भो जं दे del जं दे et add in marg. वअस्स जं दे B (d). ४ द्रव्य स्त्री० B (a).

अथवा । नाहं दरिद्रः । यस्य मम

विभवानुगता भार्या सुखदुःखसुहृद्भवान् ।
सत्यं च[1] न परिभ्रष्टं यद्दरिद्रेषु दुर्लभम् ॥ २८ ॥

मैत्रेय गच्छ रत्नावलीमादाय वसन्तसेनायाः[2] सकाशम् । वक्तव्या च सा मद्वचनात् । यत्खल्वस्माभिः सुवर्णभाण्डमात्मीयमिति[3] कृत्वा विश्रम्भाद्द्यूते[4] हारितम् । तस्य कृते गृह्यतामियं रत्नावलीति ।

विदूषकः । मा दाव अक्खाइदस्स अभुत्तस्स अप्पमुल्लस्स चोरेहिं[5] अवहृदस्स कारणादो चदुस्समुद्दसारभूदा[6] रअणावली दीअदि (९९) ।

चारुदत्तः । वयस्य[7] मा मैवम् ।

यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः ।
तस्यैतन्महतो[8] मूल्यं[9] प्रत्ययस्यैव दीयते ॥ २९ ॥

---

चारु०—[आत्मेति] श्लोकः ॥ २७ ॥ [विभवेति] ॥ २८ ॥

विदू०—(९९) मा तावदखादितस्याभुक्तस्याप्र(ल्प)मौ(मू)ल्यस्य चौरैरपहृतस्य कारणाच्चतुःसमुद्रसारभूता रत्नावली दीयते । अखादितस्येत्यादिविशेषणविशिष्टस्य सुवर्णभाण्डस्य कारणादित्यन्वयः ।

चारु०—[यं समेति] श्लोकः । तस्य महतः प्रत्ययस्य विश्वासस्य मूल्यं रत्नावलीरूपं दीयत इत्यर्थः ॥ २९ ॥ स्पृष्टिकया स्पर्शेने-

---

१ न च B (d). २ वसन्तसेनागृहं B B (a). ३ °अस्मदीय° B B (a). ४ °विस्रम्भा° A B (abc) D. ५ चोरेहि K ६ °चत स° B (a), °चतुस्स° B (d); चदुस्समुद्दस्य सार° B (b). ७ वयस्य मैवम् B (a). ८ तस्यै तन्महि० A B (c); तस्मै तन्मह० B (b). ९ मूलं B (d) K.

तद्वयस्यास्मच्छरीरस्पृष्टिकया शापितोसि । नैनामग्राहयित्वात्रागन्तव्यम् । वर्धमानक[१]

एताभिरिष्टिकाभिः[२] संधिः क्रियतां सुसंहतः[३] शीघ्रम् ।
परिवाद[४]बहलदोषान्न[५] यस्य[६] रक्षां[७] परिहरामि ॥ ३० ॥

वयस्य मैत्रेय भवताप्यकृपणशौण्डीर्यमभिधातव्यम् ।

**विदूषकः** । भो दलिद्दो किं अकिविणं[८] मन्तेदि(६०) ।

**चारुदत्तः** । अदरिद्रोस्मि सखे । 'यस्य मम । विभवानुगता भार्ये'त्यादि[९] पुनः पठति । तद्गच्छतु भवान् । अहमपि कृतशौचः संध्यामुपासे । इति निष्क्रान्ताः[१०] सर्वे ।

॥ [११]संधिच्छेदो नाम तृतीयोङ्कः समाप्तः[१२] ॥

---

त्यर्थः । शापितः शपथं प्रापितः । [एताभिरिति ।] आर्याच्छन्दः ॥३०॥ अकृपणमदीनं शौण्डीर्यमौद्धत्यसहितं वीर्यं यत्र तदेवं यथा स्यात्तथा अभिधातव्यं कथि(थयि)तव्यम् । इदमभिधानक्रियाविशेषणम् । वसन्तसेनायाः पुर इति शेषः ।

विदू०–(६०) भो दरिद्रः किमकृपणं मन्त्रयति । किंतु कृपणमेव मन्त्रयतीत्यर्थः । इतीदं परिहसतीति भावः । संध्यां प्रातःसंध्यामित्यर्थः । इति मृच्छकटिकप्रकरणव्याख्यायां श्रीलल्लादीक्षितसंख्यावता श्रमेण महता राजश्रीबलिसेनसाहबानंदायाचूडामूलं व्याख्यातायां संधिच्छेदो नाम तृतीयोङ्कः ॥ ३ ॥ शुभमस्तु ॥

---

१ वर्धमानक वर्धमानक B (b) E, °वर्ध ..क० om B (d); °नकः G. २ °ष्टिका corr °ष्टका° B (d); °ष्टकाभिः D K, रिष्टिकामाभिः ? F. ३ सुहत· (?) B (d). ४. परित्वावाद (?) B (d). ५. दोषात् नयस्य K, बहुलदोषात् F G. ६. नृपस्य B B (ad) K. ७ °रक्षान्प° BB (a) K. ८ अकिबिणे B (d). ९ whole verse instead of इत्यादि &c. D. १० नि क्रान्ता K. ११ इति मृच्छकटिकायां सं० B; इति मृच्छकटिके D. १२. om. B D F H K.

# चतुर्थोऽङ्कः ।

ततः प्रविशति चेटी ।

**चेटी** । आणत्तम्हि[1] अत्ताए[2] अज्जआए[3] सआसं गन्तुं । एसा[4] अज्जआ चित्तफ[5]लअणिसण्णदिट्ठी मदणिआए[6] सह किंपि[7] मन्तअन्ती[8] चिट्ठदि । ता जाव उवसप्पामि[9] (१) ।

इति परिक्रामति ।

ततः प्रविशति यथानिर्दिष्टा वसन्तसेना मदनिका च ।

**वसन्तसेना** । हञ्जे मदणिए[10] अवि सुसदिसी इअं चित्तकिदी[11] अज्जचारुदत्तस्स (२) ।

---

श्रीः । चेटीयं काचन वसन्तसेनादासीति ज्ञेयम् ।

चेटी– (१) आज्ञप्तास्म्यार्यया (१) र्यासकाशं गन्तुम् । आर्यया वसन्तसेनामात्रा माधवसेनया । आर्या वसन्तसेना । एषार्या चित्रफलकनिषण्णदृष्टिर्मदनिकया सह किमपि मन्त्रयन्ती तिष्ठति । तद्याव‌दुपसर्पामि । यथानिर्दिष्टेति । चित्रदत्तदृष्टिरित्यादीत्यर्थः ।

वस०– (२) हञ्जे मदनिके अपि सुसदृशीयं चित्राकृतिरार्यचारुदत्तस्य । सुसदृशी योग्या । मत्सौन्दर्यानुरूपसौन्दर्येति यावत् । चित्रे लेख्य आकृतिः सर्वावयवसंस्थानं चित्राकृतिरित्यर्थः । चित्ररूपालेख्यरूपाकृतिरिति वा ।

---

१ आणत्तं ह्मि B (ad), अणत्ताह्मि D; अणत्त° H २ °ताए H. ३ अज्जुआमआसं AB (bcd) EG, अज्जुआए स° B, अज्जआ स° D. ४ एसा अ अज्जुआ B (a) EK. which has अज्जुआ throughout for अज्जआ as also E. ५ °फलणि° AB (bcd) DFK, °फल° B. ६ मअणि° K. ७ किं वि D H. ८ मं विअन्ती? H. ९ उप० B (ab). १० मआणिए BDK · मअणीए G. ११ °कदी B (d).

मदनिका । सुसदिसी (३) ।

वसन्तसेना । क[1]धं तुमं जाणा[2]सि (४) ।

मदनिका । जेण अज्जआए सु[3]सिणिद्धा दिट्ठी अणु[4]लग्गा (५) ।

वसन्तसेना । हञ्जे किं वेसवासद[5]क्खिण्णेण [6]मदणिए एव्वं भणासि (६) ।

मदनिका । अज्जए किं जो ज्जेव जणो वेसे पडिवसदि सो ज्जेव अ[7]लीअद[8]क्खिण्णो भोदि (७) ।

---

मद०—(३) सुसदृशी ।

वस०—(४) कथं त्वं जानासि ।

मद०—(५) येनार्यायाः सुस्निग्धा दृष्टिरनुलग्ना ।

वस०—(६) हञ्जे किं वेशवासदाक्षिण्येन मदनिके एवं भणसि । 'वेशो वेश्याजनसमाश्रयः' इत्यमरः । वेशे यो वासस्तेन यद्दाक्षिण्यं नैपुण्यं तेनेत्यर्थः । 'वेशवाददाक्षिण्येन' इति पाठे वेशानां वेश्याश्रितानां यो वादस्तस्य दाक्षिण्येन चातुर्येणेत्यर्थः । दाक्षिण्येन प्रेम्णा इत्यप्यर्थः ।

मद०— (७) आर्ये किं य एव जनो वेशे प्रतिवसति स एवालीकदाक्षिण्यो भवति । अलीकं मिथ्या दाक्षिण्यं प्रीतिर्यस्य स इत्यर्थः ।

---

१ कथ B (ad). २ जानासि H. ३ सुसणिद्धा B, सुणिरद्धा B (b). ४ °लग्ग ? B (bd). ५ दक्खिणेण E, दाक्खि° J; दक्खिण्णेन K. ६ मअणिए B, D F, °णि एव B (d). ७ अलिअ B. ८ दक्खिणो J.

**वसन्तसेना** । हञ्जे णाणापुरिससङ्गेण वेसा[1]जणो अली[2]अदक्खि[3]ण्णो भोदि (८)।

**मदनिका** । जदो दाव अज्जआए दिट्ठी इध अभिरमदि हिअअं[4] च[5] तस्स कारणं किं[6] पुच्छीअदि (९)।

**वसन्तसेना** । हञ्जे सहीअणादो[7] उवहसणीयदं[8] रक्खामि[9] (१०)।

**मदनिका** । अज्जए[10] एव्वं णेदं । सहीअण[11]चित्ताणुवत्ती[12] अबलाअणो[13] भोदि (११)।

---

वस०— (८) हञ्जे नानापुरुषसङ्गेन वेश्याजनोलीकदाक्षिण्यो भवति। वादपराजिता मदनिका कथं त्वं जानासीत्यस्योत्तरमाह।

मद०— (९) यतस्तावदार्याया दृष्टिरिहाभिरमति(ते) हृदयं च तस्य कारणं किं पृच्छ्यते। तस्सेत्यादेर्यत्र चक्षुर्हृदयं च लग्नं तत्र कारणं किं पर्यालोच्यते। पुंसीदृशि सुन्दरे तावदासक्तावलं विलम्बेनेत्याशयः। इह चारुदत्तचित्रफलके।

वस०— (१०) हञ्जे सखीजनादुपहसनीयतां रक्षामि। अयोग्योनया नायकः कृत इत्येवंरूपामुपहसनीयतामित्यर्थः।

मद०— (११) आर्ये एवं ने(वमि)दम्। सखीजनचित्तानुवर्त्यबलाजनो भवति।

---

१ वेस्सा° D. २ अलिअ B. ३ दक्खिणो J. ४ हिआअं B (b)- ५ om. D H. ६ किं पि B (d); om. G. ७ सहि० B (d), सहि अण्णादो= अन्यस्या K ८ °णीअदा A B (c); °अदं B; °सणीअ (?) B (b); उवहसणिआदं E H, °णीयदां J. ९ दिक्खामि A B (c) F; देक्खामि B (b), दक्खामि (=द्रक्ष्यामि) D, also H. १० °ए एवं A B (c); अज्जुए वं B (d). ११ सहीअन C, °जण D K. १२ °णुवदी D; °ता गुणवदी ? H. १३ °जणो B.

**प्रथमा चेटी** । उपसृत्य । अज्जए अत्ता आणवेदि गहिदावगुण्ठणं पक्खदुआरए सज्जं पवहणं । ता गच्छेत्ति (१२) ।

**वसन्तसेना** । हञ्जे किं अज्जचारुदत्तो मं णइस्सदि (१३) ।

**चेटी** । अज्जए जेण पवहणेण सह सुवण्णदससाहस्सिओ अलङ्कारओ अणुप्पेसिदो (१४) ।

**वसन्तसेना** । को उण सो (१५) ।

**चेटी** । एसो ज्जेव राअसालो संटाणओ (१६) ।

---

चेटी– (१२) आर्ये माताज्ञापयति गृहीतावगुण्ठनं पक्षद्वारे सज्जं प्रवहणम् । तद्गच्छेति । गृहीतावगुण्ठनमाच्छादनमहापटाच्छादितं 'कर्णीरथः प्रवहणम्' इति कोशः । स्त्रीणां स्थितियोग्योभितः समाच्छन्नो रथः प्रवहणम् । स एव कर्णीरथः स्फुटं चेदं दशकुमारे द्वितीयचरिते ।

वस०–(१३) हञ्जे किमार्यचारुदत्तो मां नयि(ने)ष्यति ।

चेटी–(१४) आर्ये येन प्रवहणेन सह सुवर्णदशसाहस्रिकोलंकारोनुप्रेषितः । सुवर्णं दशमासिकम् । मोहर इति भाषया प्रसिद्धमिति पूर्वमुक्तम् ।

वस०–(१५) कः पुनः सः ।

चेटी–(१६) एष एव राजश्यालसंस्थानः ।

---

१ उपसृत्य प्रथमा चेटी B (a). २ आत्ता J. ३ अणवेदि H. ४ अवगुठणं B (ad). ५ गेच्छत्ति B D H, गच्छेदि B (a) ६ सुवण्णसद B. ७ साहस्सिउ (which is ओ) A B (c), साहस्सिआओ B (a); साहस्यो G; साहण्णिओ K. ८ अलकारउ (which is ओ) A B (c). ९ °णस्से A B (bc); °णस्सो E. १० °सालसठाणो A B (bc) G; राजसालो सं० B (a) ;राअउलसंठाणो del उल et add marg. सालो B (d), सालसंठालो D, सालओ सठाणो K.

वसन्तसेना । सक्रोधम् । अवेहि मा पुणो एव्वं भणिस्ससि (१७) ।

चेटी । पसीदद[1] पसीददु अज्जआ । संदेसेण म्हि पेसिदा (१८) ।

वसन्तसेना । अहं संदेसस्स ज्जेव कुप्पामि (१९) ।

चेटी । ता किंति[3] अत्तं विण्णविस्सं (२०) ।

वसन्तसेना । एव्वं[4] विण्णविदव्वा[5] जइ[6] मं जीअन्तीं[7] इच्छसि ता एव्वं ण[8] पुणो अहं अत्ताए आणविदव्वा[9] (२१) ।

चेटी । जधा दे रोआदि (२२) ।

इति निष्क्रान्ता ।
प्रविश्य ।

---

वस०–(१७) अपेहि मा पुनरेवं भणिष्यसि । अपेहि गच्छ ।

चेटी–(१८) प्रसीदतु प्रसीदत्वार्या । संदेशेनास्मि प्रेसि(रि or षि)ता । यथा संदेशस्तथा मयोक्तम् । मम नास्त्यत्र दोष इति । किंच न कुप्यन्ति संदेशहारिणे प्रभव इति भावः ।

वस०– (१९) अहं संदेशस्यैव कुप्यामि । संदेसस्सेति षष्ठी चतुर्थ्यर्थे । संदेशायेत्यर्थः ।

चेटी–(२०) तत्किमित्यत्तं मातरम् । विण्णविस्सं विज्ञापयिष्यामि ।

वस०–(२१) एवं विज्ञापयितव्या यदि मां जीवन्तीमिच्छसि तद्दे(दे)वं न पुनरहं मात्राज्ञापि(पयि)तव्या ।

चेटी–(२२) यथा ते तुभ्यम् । रोचते ।

---

१ °ददु . ददु D. २ अत्ताए D ३ किं अत्तअं B B (a), किंत्ति अत्तअं B (d). ४ एवं B (d). ५ विण्णइदव्वा D E. ६ जं A B (c) D. ७ °ती मिच्छसि A B (c) D; जीवन्तीं B (a). ८ पुणो अत्ताएण om. अहं B B (a). ९ आणाविदव्वा A B (d) D; आणाबिदव्वं B; आणाइदव्व B (a), आणाइदव्वा B (b); अणाविदव्वा K.

शर्विलकः ।

दत्त्वा निशाया वचनीयदोषं
निद्रां च जित्वा नृपतेश्च रक्षान् ।
स एष सूर्योदयमन्दरश्मिः
क्षपाक्षयाच्चन्द्र इवास्मि जातः ॥ १ ॥

अपि च ।

यः कश्चित्त्वरितगतिर्निरीक्षते मां
संभ्रान्तं द्रुतमुपसर्पति स्थितं वा ।
तं सर्वं तुलयति दूषितोऽन्तरात्मा
स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः ॥ २ ॥

मया खलु मदनिकायाः कृते साहसमनुष्ठितम् ।

परिजनकथासक्तः कश्चिन्नरः समुपेक्षितः
क्वचिदपि गृहं नारीनाथं निरीक्ष्य विवर्जितम् ।
नरपतिबले पार्श्वायाते स्थितं गृहदारुव-
द्व्यवसितशतैरेवंप्रायैर्निशा दिवसीकृता ॥ ३ ॥

इति परिक्रामति ।

---

शर्वि°–[दत्त्वेति] श्लोकः [उपजातिछन्दसा] ॥ १ ॥ [यः कश्चिदिति ।] प्रहर्षिणीछन्दः । त्वरितगतिर्यः कश्चित्संभ्रान्तं मां निरीक्षते । चौर्यादिना संभ्रान्तं स्थितं वा मां शीघ्रमुपसर्पति समीपमागच्छति च यः कश्चित्तं सर्वं जनं चौर्याद्यकर्मकरणेन दूषितोऽन्तरात्मा तुलयति परीक्षते । अयं जनश्चौरोयमिति मां ज्ञास्यतीति शङ्कितेन्तःकरणमित्यर्थः । अत एवाह स्वैर्दोषैरित्यादि ॥ २ ॥ मया खल्वित्यादि च साहसं चौर्यरूपमिदमेवाभिसंधाय-

---

१ निशायां B (a). २ रक्ष्यान् A B C D F G J. ३ om. B (b) ४ °गतिं नि° D H. ५ °क्ष्यते B (b); निरि° F. ६ °तान्तरात्मा K. ७ नारि om. B (b). ८ वर्तितम् A B (c) ; विवर्तितम् F. ९ पार्श्वा° om. B (d).

**वसन्तसेना ।** हञ्जे इमं[1] दाव चित्तफलअं[2] मम सेअ[3]-थीए ठाविअ[4] तालवेण्टअं[5] गेह्णिअ लहुं[6] आअच्छ (२३) ।

**मदनिका ।** अं[7] । जं अज्जआ आणवेदि(२४) । इति फलकं गृहीत्वा निष्क्रान्ता ।

**शर्विलकः ।** इदं वसन्तसेनाया गृहम् । तद्यावत्प्रविशामि । प्रविश्य । क नु[8] मया मदनिका द्रष्टव्या ।

ततः प्रविशति तालवृन्तहस्ता मदनिका ।

**शर्विलकः ।** दृष्ट्वा[9] । अये इयं मदनिका ।

मदनमपि गुणैर्विशेषयन्ती
रतिरिव मूर्त्तिमती विभाति येयम् ।
मम हृदयमनङ्गवह्नितप्तं
भृशमिव चन्दनशीतलं करोति ॥ ४ ॥

मदनिके[10]

---

निशि कृतं निजं चरितं वर्णयति।[परिजनेति ।] हरिणीवृत्ताच्छन्दः। स्पष्टम् ॥ ३ ॥

वस०—(२३) हञ्जे इदं तावच्चित्रफलकं मम शयनीये स्थापयित्वा तालु(ल)वृन्तकं गृहीत्वा लघ्वागच्छ । लघु शीघ्रम् ।

मद०—आमङ्गीकारे । यदार्याज्ञापयति (२४) ।

शर्वि०—मदनिकेति नामार्थं निर्वक्ति । [मदनमपीति ।] स्पष्टम् । पुष्पिताग्राच्छन्दः ॥ ४ ॥ मदनिके इत्याह्वानम् ।

---

१ om. B B (a). २ °फलहअं B (b) E K. ३ सअपरीए B (a). ४ थाविअ corr ठाविअ B (d). ५ वेण्टं B (a). ६ लहु D H. ७ om. B B (ad) C J. ८ नु मया om. A B (bc) D E F G; नु मयात्र B K. ९ om. B (a). १० मदनिके, मदनिके B B (ad) K.

**मदनिका** । दृष्ट्वा । अम्मो कधं सव्विलओ[1] । सव्विलअ[2] साअदं दे । कहिं[3] तुमं (२५) ।

**शर्विलकः** । कथयिष्यामि । इति सानुरागमन्योन्यं पश्यतः।

**वसन्तसेना** । चिरअदि मदणिआ । ता कहिं णु हु सा। गवाक्षकेण दृष्ट्वा । कधं एसा केनावि[4] पुरिसकेण[5] सह मन्तअन्ती चिट्ठदि । जधा[6] अदिसिणिद्धाए णिच्चलदिट्ठीए[7] आ-पिबन्ती विअ एदं णिज्झाअदि[9] तधा तक्केमि एसो सो जणो[10] एदं इच्छादि अभुजिस्सं कादुं । ता रमदु रमदु[11] मा कस्सावि[12] पीदिच्छेदो[13] भोदु । ण हु सद्दाविस्सं[14] (२६) ।

---

मद०—(२५) आश्चर्यं कथं शर्विलकः। शर्विलक हे स्वागतं ते। कुत्र त्वम् ।

वस०—इदं स्वगतम् । (२६) चिरयति मदनिका । तत्कुत्र नु खलु सा । कथमेषा केनापि पुरुषकेन(ण ?) सह मन्त्रयन्ती तिष्ठति । यथातिस्निग्धया निश्चलदृष्ट्यापिबती(न्ती)वैतं निध्यायति तथा तर्कयाम्येष स जन एतामिच्छत्यभुजिष्यां कर्तुम् । तद्रमतु(तां) रमतु(तां) मा कस्यापि प्रीतिच्छेदो भवतु। न खलु सद्दाविस्सं आकारयिष्यामीत्यर्थः। अतिस्निग्धयातिस्नेहविशिष्टया । निश्चलेति निर्निमेषेत्यर्थः । अभुजिष्यां स्वभिन्नेन केनाप्यभोग्याम् । कलत्रवत्स्वगृहस्थां स्वाधीनामित्यर्थः ।

---

१ सव्विलक (ओ) A B (c), सव्विलो B (a). २ सव्विलआ H ३ कहिं तुमं om. K. ४ केणावि or वि B D E, केणवि G. ५ पुरिसेण B (d) ६ जधा अ B (abd) K. ७ दीट्ठिए A B (c) ; °ट्ठिए G. ८ आपींवन्ति B (d), अपि० H. ९ °ज्जाअदि A B (bc) E F ; णिझ्झा० H. १० जो एदं K ११ रमादु रमादु B (ab) om. D F H. १२ कस्साबि or वि B D K १३ °च्चेदो AB (c) F ; पिदि° H, पींदिच्छंदो B (a), पीदिःदो B (b). १४ सद्दावइस्सं B.

इदो अ उदअन्तसूरसमप्पेहोहि[1] कमलरत्तोप्पलेहिं[2] संझाअदि[3] विअ दीहिआ[4] ।

अवि अ[5] ।

एसो असोअवुच्छो[6] णवणिग्गअकुसुमपल्लवो[7] भादि[8] ।
सुहडो[9] व्व समरमज्झे घणलोहिदपङ्कचच्चिक्को ॥३०॥

भोदि[10] ता कहिं तुम्हाणं[11] अज्जआ (१४) ।

चेटी । अज्ज ओणमेहि[12] दिट्ठिं[13] । पेक्ख अज्जअं (१५) ।

विदूषकः । दृष्ट्वोपसृत्य । सोत्थि भोदीए (१६) ।

वसन्तसेना[14] । अये[15] मैत्रेय[16] । उत्थाय । स्वागतम् । इदमासनम् । अत्रोपविश्यताम् ।

विदूषकः[17] । उवविसदु भोदी (१७) । उभावुपविशतः ।

---

आर्याच्छन्दः । एषोऽशोकवृक्षो नवनिर्गतकुसुमपल्लवो भाति । सुभट इव समरमध्ये घनलोहितपङ्कचर्चिकः । चर्चिका चर्चा ॥ ३० ॥ भवति हे । तत्कुत्र युष्माकमार्या ।

चेटी–(१५) आर्य अवनमय दृष्टिम् । पश्यार्याम् ।

विदू०–(१६) स्वस्ति भवत्यै ।

विदू०–(१७) उपविशतु भवती ।

---

१ समप्पिदेहिं K. २ °रत्तोत्पलेहिं B (a); रत्तोपलेहि D. ३ संजाआदि K. ४ दिहिआ A B (c). ५ अविअ om. B B (a). ६ वच्छो B (d). ७ णिग्गम CDJ. ८ पल्लओ D H. ९ सुभडो D H १० भोदु AB (bc) CDJ. ११ om. B (b) १२ ओण्णामेहि K. १३ दिट्ठिअ AB (bcd) DEFK. १४ The whole speech om. G. १५ (संस्कृतमाश्रित्य) before अये D H. but H. has श्री, अए B (a). १६ मैत्रेय AB bc) F. १७ Whole speech om. G.

वसन्तसेना । अपि कुशलं सार्थवाहपुत्रस्य ।

विदूषकः । भोदि कुसलं (१८) ।

वसन्तसेना । आर्य मैत्रेय अपीदानीम्

गुणप्रवालं विनयप्रशाखं
विश्रम्भमूलं महनीयपुष्पम् ।
तं साधुवृक्षं स्वगुणैः फलाढ्यं
सुहृद्विहङ्गाः सुखमाश्रयन्ति ॥ ३१ ॥

विदूषकः । स्वगतम् । सुट्ठु उवलक्खिदं दुट्ठविलासिणीए । प्रकाशम् । अध इं (१९) ।

वसन्तसेना । अये किमागमनप्रयोजनम् ।

विदूषकः । सुणादु भोदी । तत्तभवं चारुदत्तो सीसे अञ्जलिं कदुअ भोदिं विण्णवेदि (२०) ।

वसन्तसेना । अञ्जलिं बद्ध्वा । किमाज्ञापयति ।

---

विदू०—(१८) हे भवति कुशलम् ।

वस०—गुणप्रवालमिति । पद्यं स्पष्टम् । सावयवरूपकमलंकारः । उपजातिच्छन्दः ॥ ३१ ॥

विदू०—(१९) [सुष्टु] उपलक्षितं दुष्टविलासिन्या । अथ किम् ।

विदू०—(२०) शृणोतु भवती । तत्रभवांश्चारुदत्तः शीर्षेञ्जलिं कृत्वा भवतीं विज्ञापयति ।

---

१ Whole speech om. G २ अयि AB (c) E, अये D. ३ कुशल CDFG; HJ. ४ om. AB (bc) DEK, add marg B (d). ५ वुट्ठ D. उट्ठ H. ६ अए K. ७ किमाकरिमकाग० G. ८ संसिण AB B (acd). ९ भ.दीं D. १० विण्णवदि K.

विदूषकः। मए[1] तं सुवण्णभण्डअं विस्सम्भादो[2] अत्तण-केरकोत्ति[3] कदुअ जूदे हारिदं। सो अ सहिओ[4] राआवच्छआरी[5] ण आणिआदि[6] कहिं गदो त्ति (२१)।

चेटी। अज्जए दिट्ठिआ वड्ढसि[7]। अज्जो जुदिअरो[8] संवुत्तो (२२)।

वसन्तसेना। स्वगतम्। कधं चोरिण अवहदं पि[10] सोण्डी-[11]रदाए जूदे हारिदंत्ति[12] भणादि। अदो ज्जेव्व कामीअदि (२३)।

विदूषकः। ता तस्स कारणादो गेण्हदु भोदी[13] इमं[14] रअ-णावलिं (२४)।

वसन्तसेना। आत्मगतम्। किं दंसेमि तं अलङ्कारअं। विचिन्त्य[15]। अधवा ण दाव (२५)।

---

विदू०—(२१) मया तत्सुवर्णभाण्डं विश्रम्भादात्मनः कृत (?) इति कृत्वा द्यूते हारितम्। स च सभिको राजावश्य(?)कारी न ज्ञायते कुत्र गत इति।

चेटी—(२२) आर्य(र्ये) दिष्ट्या वर्धसे। आर्यो द्यूतकरः संवृत्तः।

वस०—(२३) कथं चौरेणापहृतं शौण्डीरतया द्यूते हारितमिति भणति। अत एव काम्यते।

विदू०—(२४) तत्तस्य कारणाद्गृह्णातु भवतीमां रत्नावलीम्।

वस०—(२५) किं दर्शयामि तमलंकारम्। अथवा न तावत्।

---

१ मये B (a). २ वीसभादो BB (ad); om. E ३ °केरिन्ति B (a). ४ सहीओ B (a). ५ राआव(व)त्थआरी BD; Joined to असहिओ one word K, राअवात्थहारी CJ, राआवच्छआरी del च्छा add marg. न्थ B (d). ६ आ-णीअदि B. ७ वड्ढतिसि B (b) ८ जूदअरो D H. ९ om. E. १० om. AB (bcd) DEGK, बि॰ B (a). ११ Before चोरेण BB (a). १२ °दोत्ति BDK, हारीदोत्ति E. १३ मोदि D. १४ एद AB (bcd). १५ om B B (a).

विदूषकः । किं दाव ण गेण्हदि भोदी ऐदं[१] रअणावलिं (२६) ।

वसन्तसेना । विहस्य[२] सखीमुखं पश्यन्ती । मित्तेअ कधं ण गेण्हिस्सं रअणावलिं । इति गृहीत्वापार्श्वे स्थापयति । स्वगतम् । कधं झीण[३]कुसुमादो[४] वि सहआर[५]पादवादो मअरन्द[६]बिन्दओ[७] णिवडन्ति । प्रकाशम् । अज्ज विण्णवेहि[८] तं जूदिअरं[९] । मम[१०] वअणेण अज्जचारुदत्तं अहं[११] पि पदोसे अज्जं पेक्खिदुं आअच्छामित्ति[१२] (२७) ।

विदूषकः। स्वगतम् । किं अण्णं तोहिं[१३] गदुअ गेण्हिस्सदि[१४] । प्रकाशम् । भोदि[१५] भणामि । स्वगतम् । णिअत्ती[१६]अदु इमादो[१७] गणिआपसङ्गादोत्ति (२८) । इति निष्क्रान्तः ।

---

विदू०–(२६) किं तावन्न गृह्णाति भवत्येतां रत्नावलीम् ।

वस०–(२७) मैत्रेय कथं न ग्रहीष्यामि रत्नावलीम् । कथं हीनकुसुमादपि सहकारपादपान्मकरन्दबिन्दवो निपतन्ति । आर्य विज्ञापयसि तं द्यूतकरम् । मम वचनेनार्यचारुदत्तमहमपि प्रदोष आर्यं प्रेक्षितुमागमिष्यामीति ।

विदू०–(२८) किमन्यत्तत्र गत्वा ग्रहीष्यति । हे भवति भणामि । निवर्ततामस्माद्गणिकाप्रसङ्गादिति ।

---

१ इमं° B. २ om : DH. ३ छिण D H, खीण K. ४ दोवि looks like क्षेवि K. ५ सहिरपाद° B (a); सुहआरत्थाद °? K. ६ मकरद B (d) K. ७ विदवो B (d). ८ विण्णवेसि AB (bcd) DEGK. ९ जूदअरं D. १० मह B (a). ११ वि AB (bcl) १२ आगमिस्सामित्ति AB (cd) DEFG; आगमिस्समिति B (b), °गमिसामिति K १३ तहिँ B (a). १४ गेण्हिसदि D. १५ भो B (a) १६ भिणिअ° B (a), णीअत्ति° AB (c); णिवत्तिअदु D, णिवअत्ति° H. १७ om. CJ.

वसन्तसेना । हञ्जे गेण्ह एदं अलङ्कारअं । चारुदत्तं अहिरमिदुं गच्छम्ह (२९) ।

चेटी । अज्जए पेक्ख पेक्ख । उण्णमदि अकालदुद्दिणं[1] (३०) ।

वसन्तसेना ।

उदयन्तु[2] नाम मेघा भवतु निशा वर्षमविरतं[3] पततु ।
गणयामि नैव सर्वं दयिताभिमुखेन हृदयेन[4] ॥ ३२ ॥

हञ्जे हारं गेण्हिअ लहुं[5] आअच्छ (३१) ।

इति निष्क्रान्ताः[6] सर्वे ।

॥ मदनिकाशर्विलको नाम चतुर्थोऽङ्कः ॥[7]

---

वस०–(२९) हञ्जे गृहाणैतमलंकारम् । चारुदत्तमभिरन्तुं गच्छामः(वः) ।

चेटी–(३०) आर्ये पश्य पश्य । उन्नमत्यकालदुर्दिनम् ।

वस०–[उदयन्तु नामेति] आर्याछन्दः । अत्र चारुदत्तानुरागः परमार्थः । अत्र उन्नमत्यकालदुर्दिनमिति चेटीवचनेन उदयन्तु नाम मेघा इति वसन्तसेनावाक्येन चाव्यवहितमेव पञ्चमाङ्कादौ वर्षर्तुवर्णनावतारः सूच्यते । स चायं वर्षर्तुवर्णनावतारः पूर्वं 'पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः । गौरी भुजलता यत्र विद्युल्लेखेव राजते ॥' इति नान्द्यामेव कृत इति ध्येयम् ॥३२॥

वस०–(३१) हञ्जे हारं गृहीत्वा लघ्वागच्छ ।

इति मृच्छकटिकप्रकरणव्याख्यायां श्रीलल्लादीक्षितसंख्यावता श्रमेण महता निर्मितायां मदनिकाप्रदानं नाम चतुर्थोऽङ्कः ॥ ४ ॥

१ दुद्दणिAB (c) २ संस्कृतमाश्रित्य before उद० D ; संस्कृत° H ; उदयन्ति B (a). ३ वर्णमवि° ? H. ४ हृदयेण H. ५ लहुलहु BK ; लहु B (b) DH ; ६ निःक्रान्ता K. ७ Before मद° B has इति मृच्छकटिकायां, D and H have मृच्छकटिकप्रकरणे चतुर्थोऽङ्क ; EK have मदनिकाशर्विलकश्चतुर्थोऽङ्क, मदनिकाप्रदानं Com.

# पञ्चमोऽङ्कः ।

ततः प्रविशत्यासनस्थः सोत्कण्ठश्चारुदत्तः ।

**चारुदत्तः** । ऊर्ध्वमवलोक्य[1] । उन्नमत्यकालदुर्दिनम् । यदेतत् ।

आलोकितं गृहशिखण्डिभिरुत्कलापै-
हंसैर्वियासुभिर[2]पाकृतमुन्मनस्कैः ।
आकालिकं सपदि दुर्दिनमन्[3]तरिक्ष-
मुत्कण्ठितस्य हृदयं च समं रुणद्धि ॥ १ ॥

इदानीमनुपदमेवास्मिन्नङ्के चतुर्थे विदूषकं प्रति वसन्तसेनाया गछ(च्छ) चारुदत्ताय सार्यं मदागमनं निवेदयेति वाक्येन सूचितः प्रवेशः प्रकरणनायकस्य चारुदत्तस्येति बोध्यम् । तथाचोक्तं दशरूपके—'प्रवेशचूलिका चैव तथा विष्कम्भकोपरः । अङ्कावतारोऽङ्कमुखमर्थोपक्षेपपञ्चकम् ॥' इति । पञ्चानाममीषामर्थोपक्षेपकानां(णां) लक्षणानि सोदाहरणानि तत्रैव स्पष्टानि । प्रवेशयतीति प्रवेशः । पचाद्यच् । अधमपात्रप्रयोज्यः प्रवेशकः । अत्र ण्वुल् । तदुक्तम्—'भृत्यवर्गकथावच्च कर्तव्यस्तु प्रवेशकः । अन्तर्जवनिकासंस्थैस्तथा मागधबन्दिभिः ॥ अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका । विष्कम्भस्तु द्विधा सोयं शुद्धः संकीर्ण एव च । शुद्धो मध्यमपात्रेण संकीर्णो मध्यमाधमैः ॥' इति । [इ]दमुक्तमिह किंचिदुद्देशत इति ज्ञेयम् । अत्राङ्के तावदा समाप्ति वर्षर्तुवर्णनं चारुदत्तेन वसन्तसेनया च विटेन च यथायथं क्रियते । तदिदं वसन्तसेनाचारुदत्तयोरन्योन्यानुरागोद्दीपन-

१ °लाक्य च H. २ °रपाकृत G. ३ मनरिक्ष BB (abd); °रीक्ष J.

अपि च ।

मेघो जलार्द्रमहिषोदरभृङ्गनीलो
विद्युत्प्रभारचितपीतपटोत्तरीयः ।
आभाति संहतबलाकगृहीतशङ्खः
खं केशवोऽपर इवाक्रमितुं प्रवृत्तः ॥ २ ॥

अपि च ।

केशवगात्रश्यामः कुटिलबलाकावलीरचितशङ्खः ।
विद्युद्गुणकौशेयश्चक्रधर इवोन्नतो मेघः ॥ ३ ॥

---

विभावत्वेनावतरतीति ध्येयम् । तत इति । सोत्कण्ठो वसन्तसेनाविषयकोत्कण्ठासहितश्चारुदत्तः । यदेतदिति । एतद्विप(य)ति दृश्यमानं यद्दुर्दिनं मेघाच्छन्नं दिनं तदालोकितमित्यादि श्लोकार्थाभिन्नमिति शाब्दबोधः । [आलोकितमिति ।] वसन्ततिलकाछद:(न्दः) । अपाकृतमपकारमिव मत्वा स्थितमित्यर्थः । अकालेसमये भवमाकालिकम् । दुर्दिनं कर्तृ । गगनं विरहिजनहृदयं च सहैव व्याप्नोतीति सहोक्तिरत्रालंकारः ॥ १ ॥ [मेघ इति ।] निरुक्तं छन्दः । जलार्द्रमहिषस्योदरं भृङ्गश्च तद्वन्नीलः । गजमहिषादीनां स्वतः श्यामत्वेपि जलार्द्रतायामतिश्यामता दृश्यते । तत्राप्युदरदेशेऽधिकतरेति द्रष्टव्यम् । संहताः पुञ्जी(ञ्जी)भूताः । बलाका बकाः । बलाकाशब्दः पुल्लिंगोऽत्राभिमतः । अपरः केशवो वामनावतारः श्रीहरिर्यथा तथा खं गगनमाक्रमितुं प्रवृत्तः सन् रराज इति शेषः । अत्र पूर्णोपमालंकारः ॥ २ ॥ इममेवार्थमार्यावृत्तेन प्राह । [केशवगात्रेति ।] स्फुटा-

---

१ विद्युद्गण K.

एता निषिक्तरजतद्रवसंनिकाशा
धारा जवेन पतिता जलदोदरेभ्यः ।
विद्युत्प्रदीपशिखया क्षणनष्टदृष्टा-
श्छिन्ना इवाम्बरपटस्य दशाः पतन्ति ॥ ४ ॥
संसक्तैरिव चक्रवाकमिथुनैर्हंसैः प्रडीनैरिव
व्याविद्धैरिव मीनचक्रमकरैर्हर्म्यैरिव प्रोच्छ्रितैः ।
तैस्तैराकृतिविस्तरैरनुगतैर्मेघैः समभ्युन्नतैः
पत्रच्छेद्यमिवेह भाति गगनं विश्लेषितैर्वायुना ॥ ५ ॥
एतत्तद्धृतराष्ट्रचक्रसदृशं मेघान्धकारं नभो
हृष्टो गर्जति चातिदर्पितबलो दुर्योधनो वा शिखी ।

र्थम् ॥ ३ ॥ [एता इति ।] शिखया ज्वालया ॥ ४ ॥ [संसक्तैरिवेति ।] इमानि चत्वार्युपमानानि वायुना वियतीतस्ततश्चलितानां जलदानामिति ज्ञेयम् । संसक्तैर्मिलितैः । प्रडीनैरुड्डीनैः । व्याविद्धैः समुद्रक्षोभादितस्तत उत्क्षिप्तैः । प्रोच्छ्रितैरुच्चैरित्यर्थः । मीनानां चक्रं समूहो मकराश्च । तैस्तैस्तत्तद्दिग्भागस्थितैः। आकृतिभिः स्वस्वस्वरूपैः । विस्तृतैर्विस्तारवद्भिः(?) । अनुगतैर्मिलितैः । समभ्युन्नतैश्च । वायुना विश्लेषितैर्वियोजितैरितस्ततो विचलितैरिति यावत् । मेघैरिदं गगनम् । इहैतद्भूतलोर्ध्वदेशावच्छिन्नम् । य(प)त्रच्छेद्यं चित्रमिव भातीत्यन्वयः । चित्रमिव विचित्रं शोभत इत्यर्थः । पत्रच्छेद्यमिति पदमालेख्यापरपर्यायस्य चित्रपदार्थस्य वाचकं रूढम् ॥ ५ ॥ [एतदिति ।] धृतराष्ट्रचक्रं कौरवसैन्यं तेन सदृशं नभः । सादृश्यं चानयोराभू(?)वियन्मण्डलमन्धकारकारित्वेन विनष्टचन्द्रार्कतया च

१ दृष्टा A B (c). २ आकृत B (d). ३ अनुमतै corr. B (d). ४ गगणं A BB (c) C F. ५ विश्लेषितं वा० BB (a). ६ ववल° G K.

अक्षद्यूतजितो युधिष्ठिर इवाध्वानं[1] गतः कोकिलो
हंसाः संप्रति पाण्डवा इव वनादज्ञातचर्यां[2] गताः॥६॥

विचिन्त्य । चिरः खलु कालो मैत्रेयस्य वसन्तसेनायाः सकाशं गतस्य । नाद्याप्यागच्छति ।

प्रविश्य

**विदूषकः** । अहो[3] गणिआए लोभो[4] अदक्खिणदा अ । जंदो[5] णं[6] कधा[7] वि कदा[8] अण्णा[9] । अणाअरेण[10] ज्जेव्व अभणिअ किं[11] पि एअंमेअ[12] गहिदो[13] रअणावली । एत्तिआए रिद्धीए[14] णं[15] तए[16]

---

बोध्यम् । वा शब्द इवार्थे । दुर्योधन इवेत्यर्थः । शिखी मयूरः। न ध्वानः शब्दः अध्वानः शब्दाभावस्तं मौनं गतः कोकिलः । युधिष्ठिरोपि अध्वानं पन्थान[म्] । वनादिति ल्यब्लोपे कर्मणि पञ्चमी । वनं प्राप्येत्यर्थः । अज्ञातचर्याम् । पाण्डवपक्षे महाभारते विराटपर्वणि पाण्डवानामज्ञातचर्या स्फुटैव । हंसपक्षे हंसानां वर्षर्तावत्रभावादज्ञातचर्या ज्ञातव्या ॥ ६ ॥

विदू०—(१) अहो गणिकाया लोभोदक्षिणता चानुदारता । यतो न कथा कृतान्या । अनादरेणैवाभणित्वा किमप्येवमेव गृहीता रत्नावली । कथा कथं हारितं हेमभाण्डमित्यादिका नैव कृतेत्यर्थः । एतावत्या ऋध्या न तयाहं भणितः । आर्य मैत्रेय विश्राम्यतु गल्लकेन

---

१ °वारण्यं A B (c) D F. २ °चर्यं A B (c) D F. ३ आहो H. ४ लोभो अ दक्खि° B ५ °जवो F; जदोच K. ६ न A B (c) F, om· D; अण्णा कधा वि ण कदा B B (a). ७ कधा बि or वि C also B. ८ किदा D H. ९ अण्णा-अणाअरेण (= अन्यायनागरेण &c) H ? K. १० अणादरेण B B (ad). ११ किञ्चि B B (a), किं बि or वि D E F G K. १२ एवमेव B (a) D H. १३ °गाहिदा B (a). १४ रिद्धीए B also H which has रिध्दिए. १५ om? B B (a). १६ ताए B (d).

अहं[1] भणिदो । अज्ज[2] मित्तेअ वीसमीअदु[3] गल्लक्केण[4] पाणीअं[5] पिबिअ[6] गच्छीअदु[7] त्ति । ता मा दाव दासीए[8] धीआए गणिआए मुहं[9] पि पेक्खिस्सं । सनिर्वेदम् । सुट्ठु[10] क्खु वुच्चदि[11] । अकन्दसमुत्थिदा पउमिणी[12], अवंचओ वाणिओ, अचोरो सुवण्णआरो[13], अकलहो[14] गामसमागमो[15], अलुद्धा गणिआ[16] त्ति । दुक्करं एदे[17] संभावीअन्ति[18] । ता पिअवअस्सं गदुअ इमादो गणिआपसंगादो णिवत्तावेमि[19] । परिक्रम्य दृष्ट्वा । कधं पिअव[20]-अस्सो रुक्खवाडिआए उवविट्ठो चिट्ठदि । ता जाव उवसप्पामि । उपसृत्य । सोत्थि भो[21] ते । वड्ढदु भवं (१) ।

---

पानीयं पीत्वा गम्यतामिति । तन्मा तावद्दास्याः पुत्र्या गणिकाया [मुखमपि द्रक्ष्यामि] । ऋद्धिरेतावत्युचितेति कटाक्ष इति भावः । सुष्ठु खलूच्यते । अकन्दसमुत्थिता पद्मिनी, अवञ्चको वणिक्, अचौरः सुवर्णकारः, अकलहो ग्रामसमागमः, अलुब्धा गणिकेति । दुष्करमेते संभाव्यन्ते । एते पद्मिन्यादयः पदार्था अकन्दोत्थिताः संभाव्यन्ते । परंत्वलुब्धा गणिकेत्यसंभाव्यमेवेति भावः । तत्प्रियवयस्यं गत्वास्माद्गणिकाप्रसंगान्निर्व(व)र्तयामि । कथं प्रियवयस्यो वृक्षवाटिकायामुपविष्टस्तिष्ठति । तद्यावदुपसर्पामि । स्वस्ति भो ते । वर्धतां भवान् ।

---

१ एव्वं वि for अहं B, एव्व बि B (a), om· B (b). २ जं अज्ज B. ३ विसमीअदु B (d). ४ गल्लक्केण B, गलक्केण B (a), गल्लक्केण Corr. मल्लक्केण B (d) ; मल्लिक्केण D H. ५ पाणिअं BB (a) EH. ६ marg. add before पिबिअ पि पिबिअ J. B (d). ७ पिबीअदुत्ति B ; पिबिअ गच्छी० pr m. del गच्छी B (d). ८ दासीएधीआए om : G. ९ 'मुहं.. . सनिर्वेदम्' om · AB (bcd) DEFK ; मुहं बि B (a) ; मुहं पेक्खिस्स सनिर्वेदं marg. B (d). १० सट्ठु F. ११ उच्चादि H ; उच्चदि K. १२ पदुमिणी AB (bcd) DEK. १३ सुवण्णकारो B (d), सुणवआरो E. १४ अकलही K. १५ °समागमे K. १६ गणिअ B F ; गणीअ B (d). १७ दे K. १८ संभावणीअंति B (d) ; भाविअन्ति E , संभावीअति K. १९ णिवत्तामि K. २० पिअस्सो B (a) ; पिअवस्सो B (d). २१ भोदे AB (bc) DF, भवदे J.

चारुदत्तः । विलोक्य । [१]अये सुहृन्[२]मे मैत्रेयः प्राप्तः । वयस्य स्वागतम् । आस्यताम् ।

विदूषकः । उववि[४]ट्ठम्हि ( २ ) ।

चारुदत्तः । वयस्य कथ[५]य तत्कार्यम् ।

विदूषकः । तं क्खु कज्जं विणट्ठं ( ३ ) ।

चारुदत्तः । किं त[६]या न गृहीता रत्नावली ।

विदूषकः । कुदो अम्हाणं एत्ति[७]अं भा[८]अधेअं । णव[९]णलिणकोमलं अञ्जलिं मत्थए कदुअ पडि[१०]च्छिआ (४)।

चारुदत्तः । तत्किं ब्रवीषि विन[११]ष्टमिति ।

विदूषकः। भो कधं [१२]णं विणट्ठं । जं अ[१३]भुत्तस्स अपीदस्स

---

विदू०-(२) उपविष्टोस्मि ।

विदू०-(३) तत्खलु कार्यं विनष्टम् ।

विदू०-(४) कुतोस्माकमेतावद्भागधेयम् । यत्सा न ग्रहीष्यतीति भावः । नवनलिनकोमलमञ्जलिं मस्तके कृत्वा प्रतिगृहीता ।

विदू०-(५) भो कथं न विनष्टम् । यदभुक्तस्यापीतस्य चौरैरप-

---

१ अये कथं BB (a) , अए K. २ मे om ; B B (abd). ३ om; BB (ad) EGK. ४ °विट्ठोह्मि BDH ; उप० B (d), उपविसह्मि K. ५ कथयत कार्यम् AB (c). ६ तया न om : B (b). ७ एत्तिका B (a) EK , एत्तिआ B (d) G. ८ भाअधेआ B (ad) G , °धेयं D. भागधेआ FK. ९ हत्थ BB (a). १० पडिच्छिया(?) pr. m. corr. च्छिदा B (d). ११ नष्टमिति BB (a) EFGK. १२ om. BB (a). १३ अभुत्तपीदस्स AB (bcd) DEK , अभूतापिद० H.

चोरेहिं[१] अवहृदस्स अप्पमुल्लस्स[२] सुवण्णभण्डअस्स[३] कारणादो चदुस्समुद्दसारभूदा[४] रअणमाला[५] हारिदा (९)।

चारुदत्तः। वयस्य। मा मैवम्[६]।

यं समालम्ब्य विश्वासं न्यासोस्मासु[७] त्वया कृतः।
तस्यैतन्महतो मूल्यं[८] प्रत्ययस्यैव दीयते ॥ ७ ॥

विदूषकः। भो वअस्स एदं पि[९] मे दुदिअं[१०] संतोव-[११]कारणं जं सहीअणदिण्णसंणाए पडन्तोवारिदं[१२] मुहं[१३] कदुअ अहं उवहसिदो[१४]। ता अहं बह्मणो भविअ दाणिं भवन्तं सीसेण पाडिअ विण्णवेमि। णिवत्तीअदु अप्पा इमादो बहुपच्चवाआदो[१५]

हृतस्याप्र(ल्प)मूल्यस्य सुवर्णभाण्डस्य कारणाच्चतुःसमुद्रसारभूता रत्नमाला हारिता।

चारु०—[अयं श्लोकः पूर्वं तृतीयाङ्के १६७ पृष्ठे व्याख्यात एव]॥७॥

विदू०—(९) भो वयस्य एतदपि मे द्वितीयं संतापकारणं यत्सखीजनदत्तसंज्ञया पटान्तापवारितं मुखं कृत्वाहमुपहसितः। तदहं ब्राह्मणो भूत्वेदानीं भवन्तं शीर्षेण पतित्वा विज्ञापयामि। ब्राह्मणो महत्कार्यं विना न कमपि साष्टाङ्गं प्रणमतीति भावः। निवर्तताम् अप्याः(प्पा) आत्मा ममेत्यर्थः ?। अस्माद्बहुप्रत्यवायाद्गणिकाप्रसंगात्। गणिका नाम पादुकान्तरप्रविष्टेव लेष्टुआ लोष्टिका शर्करेत्यर्थौ वा। दुःखेन पुनर्निराक्रियते। अपि च। भो वयस्य गणिका,

१ चोरेहिं अवहृदस्स om: B (d). २ अप० B (d). ३ °भंडस्स D H. ४ चतुस्स° B (ab); चउस्स° H. ५ °णावली BB (a); °मालिआ D H. ६ Followed by पश्य BB (a). ७ न्यासे A B (c). ८ मौल्यं B (a). ९ बि B (a). १० दुदिअसं E. ११ संदाव D; संताव E. १२ पडंतावबवारिदं A B (c) D F; पडन्तोबवारिदं B (b). १३ मुदं हं? B (d). १४ °दोह्मि D H. १५ पच्चवाआ om: दो A B (c) F, पच्चवाअंदो H.

गणिआपसंगादो । गणिआ णाम पादुअन्तरप्पविट्ठा[1] विअ[2] लेट्टुआ[3] दुक्खेण उण[4] णिराकरीअदि[5] । अवि अ । भो वअस्स गणिआ हत्थी काअत्थओ[6] भिक्खु[7] चाटो[8] रासहो अ[9] जहिं एदे णिवसन्ति तहिं[10] दुट्ठा[11] वि ण जाअन्ति (६) ।

चारुदत्तः । वयस्य अलमिदानीं सर्वं[12] परिवादमुक्त्वा । अवस्थयैवास्मि निवारितः। पश्य ।

वेगं करोति तुरगस्त्वरितं प्रयातुं
प्राणव्ययान्न चरणास्तु तथा वहन्ति[13] ।
सर्वत्र यान्ति पुरुषस्य चलाः[14] स्वभावाः
खिन्नास्ततो[15] हृदयमेव पुनर्विशन्ति[16] ॥ ८ ॥

---

हस्ती, कायस्थो, भिक्षुः, चाटः, क्षुद्रविषयभोक्ता, रासभश्च यत्रैते निवसन्ति तत्र दुष्टा अपि न जायन्ते । दुष्टा इति भावे क्तः । दोषा इत्यर्थः । न जायन्तेपि तु जायन्त एवेत्यर्थः । तत्र तत्र धर्मिपरस्य धर्मपरत्वं धर्मपरस्य धर्मिपरता च वक्तुर्विदूषकत्वादेव संगच्छत इति ध्येयम् ।

चारु०—परिवादं निन्दाम् ।अवस्थया दारिद्र्यरूपया । 'उत्पद्यन्ते विलीयन्ते दरिद्राणां मनोरथाः' इति समानार्थं पद्यं पठति । [वेगं करोतीति ।] प्राणस्य बलस्य व्यय(या)धा(ध्द्रा)सादित्यर्थः । स्पष्टमवशिष्टम् ॥ ८ ॥

---

१ पविट्ठा B (ad). २ लेट्टुआ विअ BB (ad). ३ लोहआ K. ४ om॰ B B (ad). ५ णिराकरीदि B (a). ६ काअट्ठओ A B (c) D F. ७ भिक्खू BB (abd). ८ आडो D, चाढो G; वाअडो H. ९ om BB (a) १० ताहिं ताहिं B (a). ११ दुश्चा B (ad), दुव्वा E K. १२ सर्वं° B (d). १३ विहन्ति H. १४ चला स्वभावाः H. १५ स्ततदा or दो H. १६ णदंति ? H.

अपि च। वयस्य[1]

यस्यार्थास्तस्य सा कान्ता धनहार्यो ह्यसौ जनः।
स्वगतम्। न। गुणहार्यो ह्यसौ जनः। प्रकाशम्।
वयमर्थैः परित्यक्ता ननु त्यक्तैव सा मया॥ ९॥

**विदूषकः।** अधोवलोक्य स्वगतम्। जधा एसो उद्धं पेक्खिअ दीहं[2] णिससदि तधा तक्केमि मए[3] विणिवारिअन्तस्स[4] अधिअदरं वड्ढिदा से उक्कण्ठा। ता सुट्ठु क्खु एव्वं वुच्चदि वामो[5] कामो त्ति। प्रकाशम्। भो वअस्स भणिदं[6] अ[7] ताए भणेहि चारुदत्तं अज्ज पओसे[8] मए एत्थ आअन्तव्वं[9] त्ति। ता तक्केमि रअणावलीए अपरितुट्ठा[10] अवरं[11] मग्गिदुं[12] आअमिस्सदि[13] त्ति (७)।

**चारुदत्तः।** वयस्य आगच्छतु। परितुष्टा यास्यति।

---

[यस्यार्था इति।] अनुष्टुप् छन्दः॥ ९॥

विदू०–(७) यथैष ऊर्ध्वं प्रेक्ष्य दीर्घं निःश्वसिति तथा तर्कयामि मया विनिवार्यमाणस्याधिकतरं वृद्धास्योत्कण्ठा। तत्सुष्ठु खल्वेवमुच्यते वामः काम इति। वामो दुर्निवारतयातिकुटिल इत्यर्थः। भो वयस्य भणितं च तया भण चारुदत्तमद्य प्रदोषे मयात्रागन्तव्यमिति। तत्तर्कयामि रत्नावल्यापरितुष्टापरं याचितुमागमिष्यतीति।

---

१ om: D G. २ णीस° BB (a); णिस्स° D. ३ मए बिणिवा BB (ab). ४ णिवारिअं तस्स B (d) which has मए बि as before. ५ वामोत्थे कामो° F, कामो वामो° J. ६ भणितं B B (ab) G, भणिअं B (d). ७ च BB (ab) DGK. ८ पदोसे D. ९ आगन्त° BDG; °न्तव्वति K. १० तुट्ठा B (d). ११ अपरं BB (a). १२ अमग्गिदुं B (a). १३ °च्छदि B; आअण्णादि B (b), आगमिस्सदि° B (d).

चेटः । प्रविश्य[1] । अवेध माणहे[2] । (८)

जधा जधा वश्शदि[3] अब्भखण्डे
तधा तधा तिम्मदि पुट्ठिचम्मे[4] ।
जधा जधा लग्गदि शीदवादे
तधा तधा वेवदि मे हल्के[5] ॥१०॥

प्रहस्य ।

वंशं[6] वाए शत्तच्छिद्दं[7][8] शुशद्दं[9]
वीणं वाएं[10] शत्ततन्तिं[11] णदन्तिं[12] ।

---

चेटः । अयं वसन्तसेनाभृत्यः कुम्भीलकः । वसन्तसेना च विटेन सह वर्षर्तुं वर्णयन्ती चारुदत्तभवनमागता संध्यानिशि तमसि गर्जति वर्षति च वारिदे इति ज्ञेयम् ।

चेटः–(८)अवेध अवेत । अवगच्छतेत्यर्थः । माणहे मानवाः इ० (त्यर्थः) । [जधा जधेति] उपेन्द्रवज्रा छन्दः । यथा यथा वर्षत्यभ्रखण्डं तथा तथा तिम्मदि आर्द्री(र्द्री)भवति पृष्ठचर्म । यथा यथा लगति शीतवातस्तथा तथा वेपते मे हृदयम् ॥ १० ॥

[वंशमिति] शालिनीछन्दः । उपजातिविशेषः । पादत्रयं जगतीजात्या । चतुर्थः शालिन्येति प्राञ्चः । तदयं गौडप्राणायामः ।

(९) वंशं वादयामि सप्तच्छिद्रं सुशब्दं वीणां वादयामि सप्ततन्त्री(न्त्रीं) व(न)दन्ती(म्) । गीतं गायामि गर्दभस्यानुरूपं को मे गाने तुम्बुरुर्नारदो वा ॥ ११ ॥

---

१ प्रविश्य चेट. B. २ माणवेहे B (a); अवेध माणहे२ G; हीमाणहे (=मानवा·) K. ३ वस्सदि A B (c) D. ४ पुश्टि B. ५ हडक्के B, B (a). ६ वंसं B (a). ७ सत्त A B (abc) DFG. ८ छिद्दं A B (bc) D. ९ सुसद्दं A B (abc) D F. G, सशद्दं B (d). १० वाद्दे B G K; om. B (a). ११ सत्त A B. (abc) D G K. १२ णदं et marg. तीं B (d).

गीअं[१] गाए[२] गद्दहश्शाणुलूअं[३]

कं[४] मे गाणे तुम्बुलू[५] णालदे[६] वा ॥ ११ ॥ (९)

आणत्तम्हि[७] अज्जआए वशन्तशेणाए[८] । कुम्भीलआ[९] गच्छ तुमं, ममं[१०] आगमणं अज्जचालुदत्तश्श[११] णिवेदेहि त्ति । ता जाव अज्जचालुदत्तश्श[१२][१३] गेहं गच्छामि । परिक्रम्य प्रविष्टकेन दृष्ट्वा । [१४]— चालुदत्ते[१५] लुक्खवाडिआए[१६][१७] चिट्ठदि[१८] । एशे[१९] वि शे[२०] दुट्ट[२१]- । ता जाव उवशप्पेमि । कधं[२३] ढक्किदे दुवाले[२४] लुक्खवाडि[२५]-आए । भोदु एदश्श[२६] दुट्ठ[२७]बडुकश्श[२८] शण्णं देमि (१०) । इति[२९] लोष्टगुटिकाः[३०] क्षिपति ।

---

(१०) आज्ञप्तोस्म्यार्यया वसन्तसेनया । कुम्भीलक गच्छ त्वम्, ममागमनमार्यचारुदत्तस्य निवेदयेति । तद्यावदार्यचारुदत्तस्य गेहं गच्छामि । एष चारुदत्तो वृक्षवाटिकायां तिष्ठति । एषोपि स दुष्टबटुकः । तद्यावदुपसर्पामि । कथमाच्छादितं द्वारं वृक्षवाटिकायाः । भवतु एतस्य दुष्टबटुकस्य संज्ञां ददामि ।

---

१ om. B (b); गीथं B (b). २ गाये B (d). ३ गद्दहस्साणुरूवं A B (c) D G; गद्दहस्साणुरूअं B (a) H K; गद्दहशाणुरूवं B (b); गद्दश्शाणुरूवं B (d). ४ को A B (bcd) D ५ तुम्बरू A B (bcd) D F; तुंबलू B; तुम्बुरु ना G; तुंबरु K; ६ णारदे A B (c) D F. ७ अणत्ताह्मि A B (c). ८ वसन्तसे° A B (abcd); वसंत D. ९ जं कुम्भी° BB (a). १० ममागमणं B D. ११ चालु B. १२ चालु B. १३ °दत्तस्स A B (abd); °दत्तस्य B (b). १४ एसे A B (abc) K; एसो G. १५ चारुदत्ते B (a), °रुदत्तो G. १६ लुक्ख A BB (bcd) C D G. १७ °वा-डिए D; वाडियाए K. १८ चिश्टदि B; चिष्ठदि B (d). १९ एसे वि से A B (c) से-से H. २० om. B (d). २१ दुश्ट B, दुष्ट B (a). २२ बटुके B (a); बटुव्वक B (b); वडव्वके pr. m. corr. वडुके B (d). २३ कथं B (d). २४ दुआलए B, दुआरए B (a); दुआले. B (b). २५ लुक्ख BCDG. २६ एदस्स A B (abcd) F K. २७ दुश्ट B. २८ वडुकस्स A B (c) F; वडुअश्श B D; वडुअस्स B (a); वडुव्वकस्स B (b); pr. m. corr. वडुअस्स B (d). २९ इति लोष्ट° om. DFH. ३० °गुटिका BGK; गुडिका B (d).

विदूषकः । अए[1] को दाणिं एसो पाआरवेट्टिदं[2] विअ कइत्थं मं लोट्ठकेहिं ताडेदि[3] (११) ।

चारुदत्तः । आरामप्रासादवेदिकायां क्रीडद्भिः पारावतैः पातितं[4] भवेत् ।

विदूषकः । दासीए[5] उत्त[6] दुट्ठपारावअ[7] चिट्ठ चिट्ठ । जाव एदिणा दण्डकट्ठेण[8] सुपक्कं विअ चूअफलं इमादो पासादादो भूमीए पाडइस्सं (१२) । इति दण्डकाष्ठमुद्यम्य धावति ।

चारुदत्तः । यज्ञोपवीतं[9] आकृष्य । वयस्य उपविश[10] । किमनेन । तिष्ठतु दयितासहितस्तपस्वी पारावतः ।

चेटः । कधं पारावदं पेक्खदि[11] मं[12] ण पेक्खदि । भोदु अवराए[13] लोट्ठ[14]गुडिआए[15] पुणो[16] वि ताडइस्सं[17] (१३) । तथा करोति ।

---

विदू०—(११) अये क इदानीमेष प्राकारवेष्टितमिव कपित्थं मां लोष्टकैस्ताडयति ।

विदू०—(१२) दास्याः पुत्र दुष्टपारावत तिष्ठ तिष्ठ । यावदेतेन दण्डकाष्ठेन सुपक्वमिव चूतफलमस्मात्प्रासादाद्भूमौ पातयिष्यामि ।

चेटः—(१३) कथं पारावतं पश्यति मां न प्रेक्षते । भवत्वपरया लोष्ठगुटिकया पुनरपि ताडयिष्यामि ।

---

१ अये D. २ चेढिदं B (a); वेढिदे ? B (b) ; वेढिदं corr वढिदं B (d), वेढिदं GK. ३ सीसे ताडेदि G. ४ पातित्यं चेत् ? B (a). ५ आ दासी° B, आ B(a). ६ पुत्त B (d) D ; उत्ता GK. ७ पारावआ K. ८ °अट्ठेण AB (bed) FK. ९ °तेनाकृष्य B (d) G. १० उपविश्य ? H. ११ पश्शादि BD; पस्सादि H. १२ णमं B B (ad). १३ अबलाए B. १४. लोश्ट B. १५ गुडियाए K. १६ पुणोवि om. B (d). १७ °यिश्शं BD.

विदूषकः । दिशोवलोक्य[1] । कधं कुम्भीलओ[2] । ता जाव उवसप्पामि[3] । उपसृत्य द्वारमुद्घाट्य । अरे[4] कुम्भीलअ[5] पविस । साअदं दे (१४) ।

चेटः । प्रविश्य । अज्ज वन्दामि (१५) ।

विदूषकः । अरे[6] कहिं तुमं ईदिसे दुद्दिणे अन्धआरे[7] आअदो (१६) ।

चेटः । अले एशा शा (१७) ।

विदूषकः । का एसा[8] का[9] (१८) ।

चेटः । एशा शा (१९) ।

विदूषकः । किं दाणिं दासीए उत्ता[10] दुब्भिक्खकाले[11][12] बुड्डरङ्को[13] विअ उद्धकं सासाअसि[14] एसा[15] सा सेत्ति (२०) ।

---

विदू०—(१४) कथं कुम्भीलकः । तद्यावदुपसर्पामि । अरे कुम्भीलक प्रविश । स्वागतं ते ।

चेटः—(१५) आर्य वन्दे ।

विदू०—(१६) अरे कुत्र त्वमीदृशे दुर्दिनेन्धकार आगतः ।

चेटः—(१७) अरे एषा सा ।

विदू०—(१८) का एषा का ।

चेटः—(१९) एषा सा ।

विदू०—(२०) किमिदानीं दास्याः पुत्र दुर्भिक्षकाले वृद्धरङ्क इवोर्ध्वकं श्वासायसे निःश्वसिसी(षी)त्यर्थः । एषा सा सेति ।

---

१ विलोक्य H. २ कुम्भिलओ B (d) ३ उप० B (ab) D. ४ अले DH. ५ कुम्भीलआ BDGH. ६ अये B (a). ७ अंधआले B (a). ८ एशा DH. ९ om. E १० वुत्ता D. ११ दुभिक्ख° B (d) ; दुब्भिक्क° F १२ काल AB (c) F. १३ घुड्ड°K. १४ सायाअसि E. १५ सा om. B (b) ; एशा शा शेति AB (c) , एषा शा शेति E del षा B (d) ; एशा शा शात्ति D; एशा सा शत्ति E.

चेटः। अले तुमं पि दाणिं इन्दमहकामुको व्विअ सुट्ठु[1] किं काको[2]असि काकेत्ति (२१)।

विदूषकः। ता कहेहि[3] (२२)।

चेटः। स्वगतम्। भोदु। एव्वं[4] भणिश्शं[5]। प्रकाशम्। अले पण्हं दे दइश्शं (२३)।

विदूषकः। अहं दे[6] मुण्डे गोडं[7] दइस्सं[8] (२४)।

चेटः। अले जाणाहि[9]। तेण हि कर्स्सिं[10] काले चूआ मौलेन्ति[11] (२५)।

---

चेटः–(२१) अरे त्वमपीदानीमिन्द्रमहकामुक इव सुष्ठु किं काकायसे काकेति।

विदू०–(२२) तत्कथय।

चेटः–(२३) भवतु। एवं भणिष्यामि। अरे प्रश्नं ते दास्यामि।

विदू०–(२४) अहं ते मस्तके पादं दास्यामि।

चेटः–(२५) अरे जानीहि तावत्। तेन हि कस्मिन्काले चूता मौलेन्ति उन्निर्गतमुकुला भवन्तीत्यर्थः।

---

१ सुट्ठु किं om B, कि del. B (d). २ °अशि A B. B (c); काअसि E. ३ कहेहि २ B. ४ एवं D. ५ भणिस्सं A B (c) E. ६ ते D. ७ गोतुं B (a); गोदुं B (b), गोडु or गोडुं com. ८ दइश्शं B C. ९ °णाहि दाव B C D F J. १० कस्सिं A B (abcd) D E. ११ मउलेन्ति B, मौलंति B (d) E K.

विदूषकः । अरे[१] दासीए[२] उत्ता गिम्हे (२६) ।

चेटः । सहासम् । अले णहि णहि (२७) ।

विदूषकः । स्वगतम् । किं दाणिं एत्थ कहिस्सं । विचिन्त्य । भोदु । चारुदत्तं गदुअ पुच्छिस्सं । प्रकाशम् । अरे मुहुत्तअं चिट्ठ । चारुदत्तमुपसृत्य । भो वअस्स पुच्छिस्सं दाव कस्सिं[४] काले चूआ मौलेन्ति[५] (२८) ।

चारुदत्तः । मूर्ख वसन्ते ।

विदूषकः । चेटमुपगम्य[६] । मुक्ख वसन्ते[७] (२९) ।

चेटः । दुदिअं[८] दे[९] पण्हं[१०] दइश्शं[११] । शुशमिद्धाणं[१२] गामाणं को[१३] लक्खअं[१४] कलेदि[१५] (३०) ।

---

विदू०—(२६) अरे दास्याः पुत्र ग्रीष्मे ।

चेटः—(२७) अरे नहि नहि ।

विदू०—(२८) किमिदानीमत्र कथयिष्यामि । भवतु । चारुदत्तं गत्वा प्रक्ष्यामि । अरे मुहूर्तं तिष्ठ । भो वयस्य प्रक्ष्यामि तावत्कस्मिन्काले चूता उन्मुकुलीभवन्ति ।

विदू०—(२९) मूर्ख वसन्ते ।

चेटः—(३०) द्वितीयं ते प्रश्नं दास्यामि । सुसमृद्धानां ग्रामानां-(णां) का रक्षां करोति ।

---

१ अले D. २ दासीयउत्ता E. ३ om. E. ४ काहिं D. ५ मउलेन्ति B; मौलंति B (d) K. ६ °पागम्य E. ७ °सन्दे D H. ८ विदिअं E K. ९ ते B (d) K. १० °एअं ते पण्हं K. ११ दइस्सं A B (abcd) K. १२ सुस० A B (abcd) D E; का शुश° &c B B (a). १३ को A B (c) १४ रक्खअं A B (abcd) DEFGK. रक्खणं H. १५ करेदि A B (abcd) DEFGK.

विदूषकः । अरे[१] रच्छा (३१) ।

चेटः । सहासम् । अले णहि णहि (३२) ।

विदूषकः । भोदु । संसए[२] पडिदेम्हि[३] । विचिन्त्य । भोदु । चारुदत्तं पुणो वि पुच्छिस्सं (३३) । पुनर्निवृत्य चारुदत्तं तथैवोदाहरति ।

चारुदत्तः । वयस्य सेना ।

विदूषकः । चेटमुपगम्य[४][५] । अरे दासिए[६] उत्ता[७] सेणा (३४) ।

चेटः । अले[८] दुवे वि एक्कस्सिं[९] कदुअ शिग्घं भणाहि (३५) ।

विदूषकः । सेणावसन्ते[१०] (३६) ।

चेटः । णं पलिवत्तिअ[११] भणाहि (३७) ।

---

विदू०–(३१) अरे रक्षा ।

चेटः–(३२) अरे नहि नहि ।

विदू०–(३३) भवतु । संशये पतितोऽस्मि । भवतु । चारुदत्तं पुनरपि प्रक्ष्यामि ।

विदू०–(३४) अरे दास्याः पुत्र सेना ।

चेटः–(३५) द्वे अपि एकस्मिन्कृत्वा शीघ्रं भण ।

विदू०–(३६) सेनावसन्ते ।

चेटः–(३७) ननु परिवृत्य भण ।

---

१ अरे A B (bc) D F. २ संदेहे B (d); संसये D H. ३ °दोह्मि D. ४ om. B (a) ५ चेटमुपगम्य om. B (a). ६ दासीए B D E F G K. ७ पुत्ता A B (bcd) DEFGK. ८ om. BD. ९ एकाश्शि AB (c); एक्कस्सि B (d), एकस्शि D H. १० सेनां A B (abcd) EFGH नां H. ११ पाडिअत्तिअ A B (bc) F K; पडिव० B (a) G; पलिअ° D.

विदूषकः । क्रायेन परिवृत्य । सेणा[1]वसन्ते (३८) ।

चेटः । अले मुक्ख बडुव्वका[2] पदाइं[3] पलिवत्तावेहि[4] (३९) ।

विदूषकः । पादौ परिवर्त्य[5] । सेणा[6]वसन्ते (४०) ।

चेटः[7] । अले मुक्ख[8] अक्खल[9]पदाइं[10] पलिवत्तावेहि[11] (४१) ।

155 विदूषकः । विचिन्त्य । वसन्तसेणा (४२) ।

चेटः । एशा शा आअदा (४३) ।

विदूषकः । ता जाव चारुदत्तस्स[12] णिवेदेमि । उपसृत्य । भो चारुदत्त धणिओ दे आअदो (४४) ।

चारुदत्तः । कुतोऽस्मत्कुले धनिकः ।

---

विदू०—(३८) सेनावसन्ते ।

चेटः—(३९) अरे मूर्ख बटुवक पदे परिवर्तय ।

विदू०—(४०) सेनावसन्ते ।

चेटः—(४१) अरे अक्षरपदे परिवत्त(र्त)य ।

विदू०—(४२) वसन्तसेना ।

चेटः—(४३) एषा सागता ।

विदू०—(४४) तद्यावच्चारुदत्तस्य निवेदयामि । भो चारुदत्त धनिकस्ते आगतः ।

---

१ सेना B (d) २ वडुट्टका A B (abc) C J; वडुआ D; वडुका K. ३ पादाइं B (d). ४ पडिव० A B (acd) DEFK; परि° B (b). ५ परावृत्य B (a); परिवृत्य D E. ६ सेना A B (cd) F. ७ विट. A B (c) C F J. ८ om. A B (bcd) D E F K. ९ अक्खर A B (abcd) D K. १० °पादाइं B (d). ११ परि° A B (bcd) F K, पडि° B (a) D, परिवत्तावेह E. १२ °दत्तं B(a).

**विदूषकः** । जइ कुले णत्थि ता[1] दुवोरे[2] अत्थि । एसा वसन्तसेणा आअदा (४५) ।

**चारुदत्तः** । वयस्य किं मां प्रतारयेसि[3] ।

**विदूषकः** । जइ मे[4] वअणे ण पत्तिआसि[5] ता[6] एदं कुम्भीलअं पुच्छ । अरे[7] दासीए[8] उत्ता[9] कुम्भीलआ[10] उवसप्प[11](४६)।

**चेटः** । उपसृत्य । अज्जे[12] वन्दामि (४७) ।

**चारुदत्तः** । भद्र स्वागतम् । कथय[13] सत्यम् । प्राप्ता वसन्तसेना ।

**चेटः** । एशा[14] शा[15] आअदा वशन्तशेणा[16] (४८) ।

**चारुदत्तः** । सहर्षम्[17] । भद्र न कदाचित्[18] प्रियवचनं निष्फली[19]कृतं मया । तद्गृह्यतां पारितोषिकम्[20] । इत्युत्तरीयं प्रयच्छति ।

---

विदू०–(४५) यदि कुले नास्ति तद्वारेस्ति । एषा वसन्तसेनागता ।

विदू०–(४६) यदि मम वचने न प्रत्ययसे न विश्वसिसी(षी)त्यर्थः । तदेतं कुम्भीलकं पृच्छ । अरे दास्याः पुत्र कुम्भीलक उपसर्प ।

चेटः–(४७) आर्य वन्दे ।

चेटः–(४८) एषा सागता वसन्तसेना ।

---

१ तो B (b). २ दुआरे B, B (ab). ३ °यति C. ४ मम B, B (ad); जइ मे डा ? B (a). ५ पत्तिआसि B (d). ६ तो B (b) ७ अले D. ८ दासिए E. ९ पुत्ता A B (bcd) EFK, पत्ता D; पुत्त H. १० कुम्भोलअ A B (c) CDJ. ११ उप० D H. १२ अज्जं K १३ कथं B (a). १४ एसा A B (bc) DEFB (a). १५ सा AB (bc) DEF. १६ °सन्तसे° A B (abcd) DFH. १७ om. B, B (c). १८ °चिदपि B (a). १९ नि फली B. २० °तोषकम् D.

**चेटः** । गृहीत्वा प्रणम्य सपरितोषम् । जाव अज्जआए णिवेदेमि[१] (४९) ।

इति निष्क्रान्तः[२] ।

**विदूषकः** । भो अवि जाणासि किंणिमित्तं[३] ईदिसे दुद्दिणे आअदेत्ति[४] (५०) ।

**चारुदत्तः** । वयस्य न सम्यगवधारयामि ।

**विदूषकः** । मए जाणिदम् । अप्पमुल्ला रअणावली बहुमुल्लं सुवण्णभण्डअंत्ति ण परितुट्ठा अवरं मग्गिदुं आअदा (५१) ।

**चारुदत्तः** । स्वगतम्[५] । परितुष्टा यास्यति ।

ततः प्रविशत्युज्ज्वलाभिसारिकावेशेन[६] वसन्तसेना सोत्कण्ठा छत्रधारिणी विटश्च ।

---

चेटः–(४९) यावदार्याया निवेदयामि ।

विदू०–(५०) भो अपि जानासि किंनिमित्तं इ(ई)दृशे दुर्दिन आगतेति ।

चारु०–अवधारयामि निश्चिनोमीत्यर्थः ।

विदू०–(५१) मया ज्ञातम् । अप(ल्प)मूल्या रत्नावली बहुमूल्यं सुवर्णभाण्डमिति न परितुष्टापरं याचितुमागता ।

---

१ °देम्हि D H. २ नि क्रान्तः H. ३ किं णिमित्तं C J. ४ आअदत्ति ADF; आआदत्ति ? B (c). ५ स्वागतम् evidently a mistake C F J. ६ वेषेण B (b) D, वेशेण B (d); वेह्रेन K.

विटः । वसन्तसेनामुद्दिश्य ।

अपद्मा श्रीरेषा प्रहरणमनङ्गस्य ललितं
कुलस्त्रीणां शोको मदनवरवृक्षस्य कुसुमम् ।
सलीलं गच्छन्ती रतिसमयलज्जा प्रणयिनी
रतिक्षेत्रे रङ्गे प्रियपथिकसार्थैरनुगता ॥ १२ ॥

वसन्तसेने पश्य पश्य ।

गर्जन्ति शैलशिखरेषु विलम्बिबिम्बा
मेघा वियुक्तवनिताहृदयानुकाराः ।
येषां रवेण सहसोत्पतितैर्मयूरैः
खं वीज्यते मणिमयैरिव तालवृन्तैः ॥ १३ ॥

अपि च ।

पङ्कक्लिन्नमुखाः पिबन्ति सलिलं धाराहता दर्दुराः
कण्ठं मुञ्चति बर्हिणः समदनो नीपः प्रदीपायते ।
संन्यासः कुलदूषणैरिव जनैर्मेघैर्वृतश्चन्द्रमा
विद्युन्नीचकुलोद्गतेव युवतिर्नैकत्र संतिष्ठते ॥ १४ ॥

विटः— [अपद्मा श्रीरेषेति ।] शिखरिणी छन्दः । स्पष्टम् । वर्णनीयाङ्गनालम्बनको विटहृदयगतः शृङ्गारोऽत्र प्रतीयते ॥ १२ ।

[गर्जन्तीति ।] विरहिणीहृदयस्य विरहानलधूममलिनतया मेघोपमानतेति बोध्यम् । येषां मेघानाम् । वसन्ततिलकाछन्दः ॥ १३ ॥

[पङ्कक्लिन्नेति ।] दर्दुरा मडू(ण्डू)काः । कण्ठं केकाम् । 'कण्ठो गले गलध्वाने' इति कोशः । बर्हिणो ॥ मयूरः अयमकारान्तो बर्हिणशब्दः । मदनो वृक्षः । तत्सहितो नीपः कदम्बः । समन्तादुत्फुल्लः । प्रदीपवद्दृश्यत इत्यर्थः । शिष्टं स्पष्टम् । [शार्दूलविक्रीडितं छन्दः ] ॥ १४ ॥

१ °यनी B (a), °यनि ? B (d). २ om. B (d) E. ३ वरेण ? H. ४ °का° B (b). ५ संन्यासं A B (c), स न्यासः B (ad); सन्यासः H, स न्यासं F. ६ °द्गत° B (abd) E K. ७ विश्राम्यति B B (a).

वसन्तसेना । भाव[1] सुट्ठु दे भणिदं[2] । एषा हि

मूढे निरन्तरपयोधरया मयैव
कान्तः सहाभिरमते यदि किं तवात्र ।
मां गर्जितैरिति मुहुर्विनिवारयन्ती
मार्गं रुणद्धि कुपितेव निशासपत्नी[3] ॥ १९ ॥

विटः । भवत्वेवं तावत् । उपालभ्यतां[4] तावदियम् ।

वसन्तसेना । भाव किमनया स्त्रीस्वभावदुर्विदग्धयोपा[5]लब्धया । पश्यतु भावः ।

मेघा वर्षन्तु[6] गर्जन्तु मुञ्चन्त्वशनिमेव वा[7] ।
गणयन्ति न शीतोष्णं रमणाभिमुखाः[8] स्त्रियः ॥ १६ ॥

---

वस०— हे भाव सुष्ठु ते भणितम् । काव्यमित्यर्थः । शृणु ममापीत्यभिसंधायोत्तमं काव्यमाह । [मूढे इति ।] इदं वसन्तसेनायाः साक्षेपं संबोधनं निशाकृतम् । सपत्नीव निशेत्यन्वयः। पयोधरौ मेघः स्तनौ च । श्लोकार्थस्तु व्युत्पन्नावलोकनमात्रगम्यः। अत्र शब्दशक्तिमूलो ध्वनिः । [वसन्ततिलकं वृत्तम्] ॥ १९ ॥

विटः—भवत्वित्यन्तरसंवाद इत्युक्तम् । उप(पा)लभ्यतामुपालम्भविषयः क्रियताम् । इयं निशा सपत्नीरूपेत्यर्थः ।

वस०—[मेघा इति] श्लोक उत्तररूपः। सुगमः ॥ १६ ॥

---

१ भाव सुट्ठु दे om. E. २ संस्कृतमाश्रित्य एषा D H. ३ निशासपत्न्यौ C J. ४ उपलभ्यता A B (bcd) D. ५ दग्धोपल० B (d). ६ गर्जन्तु वर्षन्तु B (a). ७ च E. ८ दयिताभि° B B (ad).

विटः । वसन्तसेने पश्य पश्य[1] । अयमपरः ।

पवनचपलवेगः स्थूलधाराशरौघः
वैद्युत्पक्षैर्नादः[2] स्पष्टविद्युत्पताकः[3] ।
इयं गन्धोद्दामा नवःखे शशाङ्कस्य मेघो
धरा धारापातैर्मण्यिये मन्दवीर्यस्य शत्रोः ॥ १७ ॥

वसन्तसेना । भाव एसोम् । तं[4] कधं एसो अवरो(९२)[5] ।

एतैरेव यदा गजेन्द्रमलिनैराध्मातलम्बोदरै-
र्गर्जद्भिः सतडिद्बलाक[6]शबलैर्मेघैः सशल्यं मनः ।
तत्किं प्रोषितभर्तृवध्य[7]पटहो हाहा हताशो बकः
प्रावृट्प्रावृडिति ब्रवीति शठधीः क्षारं क्षते[8] प्रक्षिपन् ॥ १८ ॥

विटः—[पवनेति ।] मालिनीच्छन्दः । स्तनितं मेघगर्जितम् । पटहो नगारा इति प्रसिद्धः । करः किरणो राजग्राह्यभागश्च । पूर्णोपमालंकारः ॥ १७ ॥

वस०—(९२) एवं नेदम् । तत्कथमेषोपरः । [एतैरेवेति ।] आध्माताः शब्दायमानाः । लम्बोदराः स्वरूपविस्तारवन्तस्ते च ते इति कर्मधारयः । सतडितः तडिद्भिः सहिताः । बलाकैर्बकैः शबला मिश्रास्तैर्मेघैर्मनः सशल्यं रमणविरहोत्कण्ठारूपशल्यसहितमित्यर्थः । तत्तदा । प्रोषितभर्तृकशब्दो न नित्यः समासान्त इति न समासान्तः । प्रोषितभर्त्रीणां विरहिणीनां वधार्थं योग्यो यः पटहस्तद्रूपो बक इत्यर्थः । [शार्दूलविक्रीडितं छन्दः] ॥ १८ ॥

१ om. A B (bcd) DEGK. २ स्वनित B (ab). ३ °त्प्रताक ? D. ४ ताक° om. B (a). ५ Add after अवरो (संस्कृतमाश्रित्य) D H. ६ °डित्पताक B; °पताक B (a). ७ °बध्यपटहो H. ८ क्षुते B (a).

विटः । वसन्तसेने एवमेतत् । इदमपरं पश्य ।

बलाकापाण्डुरोष्णीषं विद्युदुत्क्षिप्तचामरम् ।
मत्तवारणसारूप्यं क[१]र्तुकाम[illegible]दि किं तवा[illegible] ॥ १९ ॥

वसन्तसेना । भा[२]व पेक्ख पे[illegible]रयन्ती
एतैरार्द्रतमालपत्रमलिनैरापीत निशा[३]सपत्नी ॥ १८ ॥
वल्मीकाः शरताडिता इव [illegible] उपाल[४][illegible] [illegible]राहताः ।
विद्युत्काञ्चनदीपिकेव रचिता प्रासादसञ्चारिणी
ज्योत्स्ना दुर्बलभर्तृकेव वनिता प्रोत्सार्य मेघैर्हृ[५]ता ॥ २० ॥

विटः । वसन्तसेने पश्य पश्य ।

एते हि विद्युद्गुणबद्धकक्षा
गजा इवान्योन्यम[६]भिद्रवन्तः ।
शक्राज्ञया वारिधराः सधा[७]रा
गां रू[८]प्यरज्ज्वेव समुद्धरन्ति ॥ २१ ॥

---

विटः—[बलाकेति।] 'बलाका बकपङ्क्तिः स्यात्' । वारणस्यापे(पि) कर्णयोश्चामरे शिरसि विचित्रं वस्त्रं च भवति । द्राघिमा नीलिमा चेति गजगगनयोरुपमेति स्पष्टम् ॥ १९ ॥

वस०—(९३) भाव पश्य पश्य । [एतैरिति] एतैर्मेघैरित्यन्वयः। आर्द्रस्याधिकनीलत्वादार्द्रेत्युपमात्रयं चरणत्रये इति । [शार्दूलविक्रीडितं छन्दः] ॥ २० ॥

विटः—[एते हीति।] विद्युल्लतां गुणत्वं लम्बमानतया बोध्यम् । गुणो रज्जुः । 'कक्षा स्यान्मध्यबन्धनम्। गां भूमिम् । [उपजातिच्छन्दसा श्लोकः] ॥ २१॥

---

१ कर्त ? B (b). २ om B (a). ३ Add संस्कृतमाश्रित्य after पेक्ख D H. ४ गजा D H. ५ हुता A B (c) D, हता K. ६ °तिद्रवन्त K. ७ सरागा B, B (a). ८ रूप° H.

अपि च पश्य[1] ।

महावातोध्मातैर्[2]महिषकुलनीलैर्जलधरै-
श्चलैर्विद्युत्पक्षैर्जलधिभिरिवान्तःप्रचलितैः ।
इयं गन्धोद्दामा नवहरितशष्पाङ्कुरवती[3]
धरा धारापातैर्मणिमयशरैर्भिद्यत इव ॥ २२ ॥

वसन्तसेना । भाव एसो अवरो[4] (९४) ।

एह्येहीति शिखण्डिनां पटुतरं[5] केकाभिराक्रन्दितः
प्रोड्डीयेव[6] बलाकया सरभसं सोत्कण्ठमालिङ्गितः[7] ।
हंसैरुज्झितपङ्कजैरतितरां सोद्वेगमुद्वीक्षितः[8]
कुर्वन्नञ्जनमेचका इव दिशो मेघः समुत्तिष्ठते[9] ॥ २३ ॥

विटः । एवमेतत् । तथाहि पश्य[10] ।

[महावातेति ।] शष्पं बालतृणम् । तदङ्कुरा धारारूपसंलग्नहीरकसदृशा इति बोध्यम् । [शिखरिणी वृत्तमिदम्] ॥ २२ ॥

वस०—(९४) भाव एषोपरः । [एह्येहीतीति ।] शिखण्डिनां मयूराणाम् । केकाभिर्वाणीभिःपटुतरं यथा स्या(त्तथा) । एहि एहि इति आक्रन्दित ...दरे वीप्सा । सरभसं सावेगम् । उत्कण्ठावेगयोरन्यो ...नकभाव इति भेदः । प्रावृषि न स्थितिर्हंसानामिति सोद्वेगमित्युक्तम् । अञ्जनवन्मेचकाः श्यामाः । दिशः कुर्वन्नेषोप-

१ पश्य पश्य B (a), om. B (d). २ वातोध्मातै° G. ३ शस्या A B (bc); सस्या D F. ४ Add संस्कृतमाश्रित्य ° marg. H also D. ५ पटुतरैः B (a). ६ प्रोत्थायेव B, •B (ab) G K; प्रोच्छायेव B (d); Com प्रोत्था°. ७ सोत्प्राढं B (a). ८ मुद्वेक्षित G. ९ समुज्जृम्भते B, B (a). १० पश्य पश्य B, B (a).

निष्पन्दीकृतपद्मषण्डनयनं नष्टक्षपावासरं
विद्युद्भिः क्षणनष्टदृष्टतिमिरं प्रच्छादिताशामुखम् ।
निश्चेष्टं स्वपितीव संप्रति पयोधारागृहान्तर्गतं
स्फीताम्भोधरधामनैकजलदच्छन्नापिधानं जगत् ॥ २४ ॥

वसन्तसेना । भाव एव्वं ण्णेदं । ता पेक्ख पेक्ख (५९)।

गता नाशं तारा उपकृतमसाधाविव जने
वियुक्ताः कान्तेन स्त्रिय इव न राजन्ति ककुभः ।
प्रकामान्तस्तप्तं त्रिदशपतिशस्त्रस्य शिखिना
द्रवीभूतं मन्ये पतति जलरूपेण गगनम् ॥ २५ ॥

---

रो मेघः समुत्तिष्ठते इत्यन्वयः। [शार्दूलविक्रीडितं वृत्तम्] ॥ २३ ॥

विटः— [निष्पन्दीकृतेति] निश्चलीकृतेत्यर्थः । जगत्कर्तृ । स्वपितीवेत्युत्प्रेक्षा । अत एव निश्चेष्टं पयोधारास्वरूपं यद्गृहं तस्यान्तर्गतम्। पुनः कीदृशम् । स्फीतेतिविस्तारवत्यम्भोधराणां धामन्यधिकरणे गगने ये नैकेनेके जलदास्त एव छत्रं तदात्मकमपिधानमाच्छादनं यस्य तदीदृशं जगदी(दि)त्यर्थः । 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः ।[पूर्वोक्तमेव छन्दः] ॥ २४ ॥

वस०—(५९) भाव एवं नेदम्। तत्पश्य पश्य। [शार्दूल° ।]

उपमाद्वयं पूर्वार्धे दिशां पक्षे कान्तेन लक्षणया सूर्येणेत्य... शपतिशस्त्रस्येन्द्रवज्रस्य शिखिना वह्निना । इन्द्रवज्राग्निनेत्यर्थः । प्रकाममति । अन्तस्तप्तमत एव द्रवीभूतं गगनं जलरूपेण पततीति मन्ये

---

१ खण्ड B F G. २ नष्ट B (ab). ३ दृष्टसृष्ठ A B (c) D F; दृष्टनष्ट B (b); दृष्टनष्ट B, B (d) G. ४ स्फीतंभोवर K. ५ धाम नैक B. ६ om. K; संस्कृतमाश्रित्य after पेक्ख D H. ७ कुकुभ· D.

अपि च पश्य ।

उन्नमति नमति वर्षति गर्जति मेघः करोति तिमिरौघम् ।
प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि ॥ २६ ॥

विटः । एवमेतत् ।

विद्युद्भिर्ज्वलतीव संविहसतीवोच्चैर्[1]बलाकाशतै- 255
माहेन्द्रेण विवल्गतीव धनुषा धाराशरोद्गारिणा[2] ।
विस्पष्टाशनि[3]निस्वनेन[4] रसतीवाघूर्णतीवानिलै-[5][6]
र्नीलैः[7] सान्द्रमिवाहिभिर्जलधरैर्धूपायतीवाम्बरम् ॥ २७ ॥

---

इत्युत्प्रेक्षालंकारः ॥२५॥

[उन्नमतीति ] आर्याछन्दः । पूर्णोपमाल(लं)कारः ॥२६॥

[विटः—] [विद्युद्भिरिति । ] स्पष्टम् । धारा एव शरास्तानुद्गिरतीति तथा तेन । इद्र(न्द्र)धनुषा । विवल्गति अलंकृतं भवति । विस्पष्टः कर्णारुंतुदं श्रूयमाणो योऽशनिनिस्वनो वज्रनिर्घोषस्तेन रसतीव शब्दं करोतीव । अनिलैराघूर्णतीवेति झञ्झावातवर्णनम् । नीलैरहिभिः कृष्णसर्पैः सान्द्रमिव व्याप्तमिवेति मेघव्यापनस्योत्प्रेक्षा । जलधरै-र्धूपायतीवात्मानं धूपितं करोतीवेत्यर्थः । अम्बरं गगनम् । कर्तृ । (?) अत्र सप्त (?) क्रियोत्प्रेक्षाः । अलंकारः (?) । [शार्दूलविक्रीडितं छन्दः] ॥ २७ ॥

---

१ खं विह° B (ad) EGK २ °शतो° A B (bc) F. ३ विष्पिष्टा D; निष्पिष्टा° H, क्लिस्पष्टा° J. ४ नि स्व° B (d). ५ रवती° K. ६ धूर्ण• A B (c); घूर्णितो वा H. ७ नीलै नीलै सोद्रमिर्ज° B (b).

वसन्तसेना ।

जलधर निर्लज्जस्त्वं यन्मां दयितस्य वेश्म गच्छन्तीम्[1] ।
स्तनितेन भीषयित्वा धाराहस्तैः परामृशसि ॥२८ ॥

भोः शक्र ।

किं ते ह्यहं पूर्वरतिप्रसक्ता
यस्त्वं नदस्यम्बुदसिंहनादैः ।
न युक्तमेतत्प्रियकाङ्क्षिताया
मार्गं निरोद्धुं मम वर्षपातैः ॥२९ ॥

अपि[2] च[3] ।

यद्वदहल्याहेतोर्मृषा वदसि शक्र गौतमोस्मीति[4] ।
तद्वन्ममापि दुःखं निरवेक्ष्य[5] निवार्यतां जलदः ॥३०॥

---

[जलधरेति । ] आर्याछन्दः । धारा एव हस्तास्तैः । 'स्तनित(तं) मेघगर्जितम्' इत्यमरसिंहः । इहोपालम्भोन्यवनिताया मनोनुरागमन्तरान्येन करपरामर्शस्यानुचितत्वादिति भावः ॥ २८ ॥

[किं ते इति । ] पूर्वं पुरा काले कदाचिदपि रतौ संभोगे प्रसक्ता आसमिति शेषः । यद्यस्मात्त्वम् । अम्बुदनादा एव सिंहनादास्तैर्नदसि । प्रियश्चारुदत्तः काङ्क्षितो यस्याः । प्रियेण काङ्क्षिताया इत्यपि [उपजातिछन्दसायं श्लोकः] ॥२९॥

[यद्वदहल्येति । ] आर्याच्छन्दः । स्नानाय प्रयाते गौतमे स्वयं मिथ्यागौतमस्वरूपं धृत्वा गत्वा तद्गृहं स्नानाय गतस्तदानीमेव परावृत्तः कान्तः कथं सुरताकाङ्क्षीति संदिग्धायामहल्यायां गौतमोस्मीति यद्वद्यथा वदसि कामपीडितस्तथा मया(मा)पीत्यादि स्पष्टम् ॥ ३० ॥

---

१ गच्छन्ती A B (c). २ om: B (a). ३ om: B (d). ४ गौतमो° AB (c) D F. ५ निरपेक्ष G.

अपि च ।

गर्ज वा वर्ष वा शक्र मुञ्च वा शतशोऽशनिम् ।
न शक्या हि स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति ॥ ३१ ॥

यदि गर्जति वारिधरो गर्जतु तन्नाम निष्ठुराः पुरुषाः ।
अयि विद्युत्प्रमदानां त्वमपि च दुःखं न जानासि ॥ ३२ ॥

विटः । भवति अलमलमुपालम्भेन । उपकारिणी तवेयम् ।

ऐरावतोरसि चलेव सुवर्णरज्जुः
शैलस्य मूर्ध्नि निहितेव सिता पताका ।
आखण्डलस्य भवनोदरदीपिकेय-
माख्याति ते प्रियतमस्य हि संनिवेशम् ॥ ३३ ॥

वसन्तसेना । भाव एव्वं । तं ज्जेव्व एदं गेहं (५७) ।

विटः । सकलकलाभिज्ञाया न किंचिदिह तवोपदेष्टव्यमस्ति । तथापि स्नेहः प्रलापयति । अत्र प्रविश्य कोपोऽत्यन्तं न कर्त्तव्यः ।

---

राद्धान्तमाह । [गर्ज वेति । ] स्पष्टम् ॥३१॥

योषितां दुःखं योषिदेव जानातीत्याशयेन प्राह । [यदीति । ] निगदेनैव सुगमम् ॥३२॥

विटः—[ऐरावतोरसीति ।] दीपिका प्रसिद्धा । मशाल इति भाषया । संनिवेशं गृहम् । शेषं सुगमम् । [वसन्ततिलकं वृत्तम्]॥३३॥

वस०—(५७) एवम् । तदेवैतद्गेहम् ।

---

१ मुञ्च G. २ यदि व्रा B (d). ३ अपि B (d) K. ४ अलं once B. ५ उप° ...यम् om. B (d). ६ भुवनो° B (a); भवतोदर D. ७ om: B, B (b). ८ तवादे° G.

यदि कुप्य[1]सि नास्ति रतिः कोपेन विनाथवा कुतः कामः ।
कुप्य च कोपय[2] च त्वं प्रसीद च[3] त्वं प्रसादय च[4] कान्तम् ॥ ३४ ॥

भवत्वेवं तावत् । भो भो निवेद्यतामार्यचारुदत्ताय ।

एषा फुल्लकदम्बनीपसुरभौ काले घनोद्भासिते
कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका ।
विद्युद्वारिदगर्जितैः सचकिता त्वद्दर्शनाकाङ्क्षिणी
पादौ नुपूरलग्नकर्दमधरौ[5] प्रक्षालयन्ती स्थिता ॥ ३५ ॥

**चारुदत्तः** । आकर्ण्य । वयस्य ज्ञायतां किमेतदिति ।

**विदूषकः** । जं भ[6]वं आ[7]णवेदि । वसन्तसेनामुपगम्य । सादरम् । सोत्थि भो[8]दीए (५८) ।

---

[यदि कुप्यसीति ।] आर्याछन्दः । क(कु)प्यसि कोपमेव करिष्यसीत्यर्थः । कामोत्तेजनाय किंचित्कोपस्तु कर्तव्य एवेत्याशयवानाह । कोपेन विनेत्यादि । तथा च कृते किंचित्कोपे तदानीमभिलाषापूर्तौ सत्यां सुगमावतारैव कामोत्तेजनेति भावः । एतदर्थसमर्थकमुत्तरार्धमाह । कुप्य चेत्यादि ॥ ३४ ॥ [एषेति ।] नीपाः कदम्बविशेषा माद्याः । कान्तस्य चारुदत्तस्य । समदना सकामा जलार्द्रकेशा हृष्टा गर्जितैः सचकितापि त्वद्दर्शनेच्छुरेषा त्वसन्तसेना पादौ (प्र)क्षालयन्ती स्थितेति निवेद्यताम् । चारुदत्तायेत्यन्वयः । [शार्दूलविक्रीडितं छन्द इदम्] ॥ ३५ ॥

विदू०—(५८)यद्भवानाज्ञापयति । स्वस्ति भवत्यै ।

---

१कुप्यासि A. २ कोपयवच्च ? K. ३ त्वं च B (d). ४ om: A B (c) D F; वा E. ५ °भरौ G. ६ भअवं B (a). ७ आनवेदि C. ८ भवदी० B (d).

**वसन्तसेना** । अज्ज वन्दामि । साअदं अज्जस्स । भावे[1] एसा छ[2]त्तधारिआ भावस्स ज्जेव्व भोदु[3] (९९) ।

**विटः** । स्वगतम् । अनेनोपायेन निपुणं प्रेषितोस्मि । प्रका[4]शम् । एवं भवतु । भवति वसन्तसेने ।

साटोपकूटकपटानृतजन्मभूमेः
शाठ्यात्मकस्य रतिकेलिकृतालयस्य ।
वेश्यापण[5]स्य सुरतोत्सवसंग्रहस्य
दाक्षिण्यप[6]ण्यसुखनि[7]ष्क्रयसिद्धिरस्तु ॥ ३६ ॥

इति निष्क्रान्तः ।

---

वस०–(९९) आर्य वन्दे । स्वागतमार्यस्य । विदूषकं प्रतीयमुक्तिः । विटं प्रत्याह । भाव एषा छत्रधारिका भावस्यैव भवतु ।

[विटः–] [साटोपेति । ] आटोपो दम्भः । कूटं माया । कपटं छद्म । अनृतं मृषाभाषणम् । एतेषां जन्मभूमेः । शाट्य(ठ्यं) धौर्त्यम् । तत्स्वरूपस्य रतिकेलिभिः कृतमालयं गृहं यत्र तादृशस्येत्यर्थः । यत्र रा(र)तिकेलयो नियतं निवसन्तीति भावः । सुरतोत्सवस्य संग्रहो यत्र तादृशस्य । सुरतोत्सवप्रधानस्येत्यर्थः । एवमादिविधस्य वेश्यापणस्य वेश्याव्यवहारस्य दाक्षिण्यपण्यसुखनिष्क्रयसिद्धिरस्तु । दाक्षिण्येन कामतन्त्रनैपुण्येन यत्पु(त्प)ण्यसुखं पण्यं क्रयक्रीतं सुखं वेश्यासंभोगादिसुखं पण्यसुखं भण्यते । तद्रूपा । निष्क्रयस्य सिद्धिरस्तु । दक्षिणनायकचारुदत्तस्याकिंचनतया दाक्षिण्यान्यलभ्यनिष्क्रयविरहेण दाक्षिण्यसहितसंभोगसुखसिद्धेरेव निष्क्रयसि-

---

१ दाव E. २ चत्त° A B (c); वत्त° B (b); वत्त° F; छत्रचारिआ K. ३ भवदि B (a); होदु D. ४ °प्रका° ......तु om: B (d). ५ °जणस्य B (a). ६ °पुण्य B (d) E. ७ °नि.क्रय K.

वसन्तसेना । अज्ज मित्तेअ कहिं तुम्हाणं जू[1]दिअरो (६०)।

विदूषकः । स्वगतम्[2] । ही ही भो[3] जूदि[4]अरो त्ति भणन्तीए अलङ्किदो पिअवअस्सो । प्रकाशम् । भोदि एसो क्खु[5] रु[6]क्खवाडिआए (६१) ।

वसन्तसेना । अज्ज का तु[7]म्हाणं सु[8]क्खरुक्खवाडिआ बु[9]च्चदि (६२) ।

द्विरूपत्वादिति परमाशयः । यद्वा दाक्षिण्यं दक्षिणनायकसंगजन्यं कामतन्त्रनैपुण्यं पण्यसुखं च एतदुभयरूपा निष्क्रयसिद्धिरित्यर्थः । अथवा दाक्षिण्यपण्यसुखनिष्क्रयाणां सिद्धिरित्यर्थः । द्वन्द्वान्तश्रुतेः प्रत्येकं संबन्धात् । निष्क्रयो मूल्यम् । पण व्यवहारे स्तुतौ चेति धातुः । उपर्यवभासायार्थचरम एवोपन्यस्तः । व्यङ्ग्यौ तु मध्यमप्रथमावर्थौ । तत्रापि परमव्यङ्ग्यः परमाशयार्थ इति ध्येयम् । अन्यथा मन्मित्रमयं वदति दरिद्रमिति कुप्येतापि वसन्तसेना वसन्तसेनोपरि विटस्यायं सर्वः कटाक्ष एवेति । वसन्तसेनाचारुदत्तयोः सुरतोत्सवोप्यत्राङ्कसमाप्ति व्यङ्ग्य इति च ध्येयं नाट्यरसतरंगिणीधीवरैः । [ वसन्ततिलकं वृत्तम् ] ॥ ३६ ॥

वस०—(६०) आर्य मैत्रेय कुत्र युष्माकं द्यूतकरः ।

विदू०—(६१) आश्चर्यम् । द्यूतकर इति भणन्त्यालंकृतः प्रियवयस्यः । हे भवति । एष खलु वृक्षवाटिकायाम् ।

वस०—(६२) आर्य का युष्माकं शुष्कवृक्षवाटिकोच्यते ।

---

१ जूदिअरे B (a); जूदअरो D; जदिआ० H. २ om : H. ३ भो. D. ४ जूदअरो D; जूदआरो H. ५ ख़ु A. om : E. ६ सुक्खरुक्ख° CDJ; सुखरु K. ७ तुह्मक्ख रुक्ख B (b). ८ om : सुक्ख B; सुक्खु E. ९ उच्चदि G.

विदूषकः । भोदि जहिं ण खाईअदि ण[1] पीईअदि (६३) ।

वसन्तसेना । स्मितं करोति ।

विदूषकः । ता पविसदु भोदी (६४) ।

वसन्तसेना । जनान्तिकम् । एत्थ पविसिअ किं मए भणिदव्वं (६५) ।

चेटी । जूदिअर[4] अवि[5] सुहो दे पदोसो त्ति (६६) ।

वसन्तसेना । अवि पारइस्सं (६७) ।

चेटी । अवसरो ज्जेव्व दे[6] पारइस्सदि (६८) ।

विदूषकः । पविसदु भोदी (६९) ।

---

विदू०–(६३) हे भवति यत्र न खाद्यते न पीयते ।

विदू०–(६४) तत्प्रविशतु भवती ।

वस०–(६५) अत्र्य(त्र) प्रविश्य किं मया भणितव्यम् ।

चेटी–(६६) द्यूतकर अपि शुभः सुखः इत्यप्यर्थः । ते प्रदोष इति।

वस०–(६७) अपि पारयिष्यामि समर्था भविष्यामीत्यर्थः। अपि(पिः) प्रश्ने ।

चेटी–(६८) अवसर एव त्वां पारयिष्यति । समर्थं करिष्यतीत्यर्थः । तीर पार कर्मसमाप्तौ धातुः ।

विदू०–(६९) प्रविशतु भवती ।

---

१ खाइ० D; खादी० G. २ जाहिं ण B (a). ३ पीइ० D; पीडि० G. ४ om. B (a); जूदअर DH. ५ अपि B (d). ६ दे=त्वा D, देप्पारयि० E H; ज्जेव पार० J.

वसन्तसेना । प्रविश्योपसृत्य च । पुष्पैस्ताडयन्ती । अइ[1] जू[2]दिअर अवि[3] सुहो दे पदोसो (७०) ।

चारुदत्तः । अवलोक्य । अये वसन्तसेना प्राप्ता । सहर्षमुत्थाय । अयि[4] प्रिये ।

सदा प्रदोषो मम याति जाग्रतः
सदा च मे निःश्वसतो[5] गता निशा ।
त्वया समेतस्य विशाललोचने
ममाद्य शोकान्तकरः प्रदोषकः[6] ॥ ३७ ॥

तत्स्वागतं भवत्यै । इदमासनम् । अत्रोपविश्यताम् ।

विदूषकः । इदं[7] आसणं । उव[8]विसदु भोदी (७१) ।

वसन्तसेना नाट्येन[9]आसीना[10] । सर्वे उपविशन्ति ।

चारुदत्तः । वयस्य पश्य पश्य ।

वर्षोदकमुद्गिरता श्रवणान्तविलम्बिना कदम्बेन ।
ऐकः[11] स्तनोभिषिक्तो नृपसुत इव यौवराज्यस्थः ॥ ३८ ॥

तद्वयस्य क्लिन्ने वाससी वसन्तसेनायाः । अन्ये प्रधानवाससी समु[12]पनीयेतामिति ।

---

वस०—(७०)अयि द्यूतकर अयि शुभस्ते प्रदोषः ।

चारु०—[सदेति] श्लोकः स्पष्टतरः । वसन्तसेनाकृतप्रश्नस्यायमुत्तररूप इति बोध्यम् । [वंशस्थं वृत्तम्] ॥ ३७ ॥

विदू०—(७१) इदमासनम् । उपविशतु भवती ।

चारु०—[वर्षोदकमिति] आर्याछन्दः ॥ ३८ ॥ क्लिन्ने आर्द्रे ।

---

१ अवि B (a) ; अयि D. २ जूदअर D H. ३ अइ B (a), अवि J. ४ अइ B (a) ; अपि G. ५ निश्वसिता G. ६ प्रदोष BDEFG. ७ इदमा° D. ८ उप B (d), °डबवि J. ९ om: A B (c) D. १० °सीना A B (c) F; नाट्येन सर्वे D H. ११ एकस्तनो D. १२ °यता G, °पानी° H.

विदूषकः । जं भवं ओ[1]णवेदि (७२) ।

चेटी । अज्ज मित्तेअ चिट्ठ तुमं । अहं ज्जेव्व अज्जअं सुस्सूसइस्सं (७३) । तथा करोति ।

विदूषकः । अपवारितकेन । भो वअस्स पुच्छामि दाव तत्थभो[2]दिं किं पि[3] (७४) ।

चारुदत्तः । एवं क्रियताम् ।

कः । प्रकाशम् । अध किंणिमित्तं उण ईदिसे पणट्ठ-च[4]न्दालोए दुद्दिणं[5] अन्धआ[6]रे आअदा भोदी (७५) ।

चेटी । अज्जए उज्ज[7]ओ बम्हणो (७६) ।

वसन्तसेना । णं णिउणो[8]त्ति भणा[9]हि (७७) ।

---

विदू०–(७२) यद्भवानाज्ञापयति ।

चेटी– (७३) आर्य मैत्रेय तिष्ठ त्वम् । अहमेवार्यां शुश्रूषयिष्यामि । वस्त्रादिकमानयामीत्यर्थः ।

विदू०–(७४) भो वयस्य पृच्छामि तावत्तत्रभवतीं किमपि । तत्रभवतीं पूज्याम् । वसन्तसेनामित्यर्थः ।

विदू०–(७५) अथ किंनिमित्तं पुनरीदृशे प्रनष्टचन्द्रालोके नान्धकार आगता भवती

चेटी–(७६) आर्ये उज्ज्वलो ब्राह्मणः ।

वस०–(७७) ननु निपुण इति भण ।

---

१ अणवेदि H. २ भोदी B (d). ३ किंचि (=किंचित्) B B (a); किंवि DG. ४ चंद्रा° A B (c) D, .चंद° B (d). ५ दुद्दिणअन्ध° B. ६ अन्धारे. B (d). ७ उज्जओ (=उज्ज्वलो) A B (c) D F; उज्जुओ B (abd), उज्जुओ J. ८ °णेत्ति B (ad). ९ भण B B (ad) EG K.

चेटी । एसा क्खु[१] अज्जआ एव्वं पुच्छिदुं आअदा । के[२]-त्तिअं ताए रअणावलीए मुल्लं त्ति (७८) ।

विदूषकः । जनान्तिकम् । भो भणिदं मए जधा अप्पमुल्ला रअणावली बहुमुल्लं सुवण्णभण्डअं । ण परितुट्ठा अवरं मग्गिदुं आअदा (७९)।

चेटी । सा क्खु[३] अज्जआए अत्तणकेरकेत्ति भणिअ जूदे हारिदा । सो अ[४] सहिओ[५] राआवच्छहारी[६] ण आणीअदि[७] कहिं गदोत्ति (८०) ।

विदूषकः । भोदि मन्तिदं[८] ज्जेव्व मन्तीअदि (८१) ।

चेटी । जाव सो अण्णेसीअदि ताव एदं ज्जेव्व गेण्ह सुवण्णभण्डअं (८२) । इति दर्शयति ।

---

चेटी–(७८) एषा खल्वार्या एवं प्रष्टुमागता कियत्तस्या रत्नावल्या मूल्यमिति ।

विदू०–(७९) भो भणितं मया यथाप्र(ल्प)मूल्या रत्नावली बहुमूल्यं सुवर्णभाण्डम् । न परितुष्टापरं याचितुमागता ।

चेटी–(८०) सा खल्वार्या(र्य)या आत्मनः कृते इति भणित्वा द्यूते हारिता । स च सभिको राजावश्यकारी न ज्ञायते कुत्र गत इति ।

विदू०–(८१) हे भवति मन्त्रितमेव मन्त्र्यते ।

चेटी–(८२) यावत्सोन्वे(न्वि)ष्यते तावदेतदेव गृहाण सुवर्णभाण्डम् ।

---

१ खु B. २ कित्तिअं B (d); किंतिअं E. ३ खु B. ४ om: B (d). ५ माहिओ? A B (c). ६ राआब(व)त्थआरी B D F K; राअबात्थ(वात्थ) हारी CJ. ७ °आदि D. ८ °न्तितं B (d): मन्ध्रिदं D.

विदूषकः । विचारयति ।

चेटी । अदिमेत्तं अज्जो णिं[1]ज्झाअदि । ता किं दिट्ठपुरु[2]व्वो दे (८३) ।

विदूषकः । भोदि सिं[3]प्पकुसलदाए ओबन्धेदि दिट्ठिं[4] (८४) ।

चेटी । अं[5]ज्ज वञ्चिदोसि दिट्ठीए[6] । तं ज्जेव्व एदं सुवण्णभण्डअं (८५) ।

विदूषकः । सहर्षम्[7] । भो वअस्स तं ज्जेव्व एदं सुवण्णभण्डअं जं अम्हाणं गेहे[8] चोरेहिं अवहृदं (८६) ।

चारुदत्तः । वयस्य ।

योस्माभिश्चिन्तितो व्याजः कर्त्तुं न्यासप्रतिक्रियाम् ।
स एव प्रस्तुतो[9]स्माकं किंतु सं[10]त्यं विडम्बना ॥ ३९ ॥

---

चेटी–(८३) अतिमात्रमार्यो निध्यायति । नितरां चिन्तयतीत्यर्थः । तत्किं दृष्टपूर्वस्ते । अलंकार इति प्रक्रान्तमेव ।

विदू०–(८४) भवति हे । शिल्पकुशलतयावबध्नाति दृष्टिम् । तदेवेदमिति भासते । वस्तुतस्तदिदं न भवतीति भावः ।

चेटी–(८५) आर्य वञ्चितोसि दृष्ट्या । तदेवैतत्सुवर्णभाण्डम् ।

विदू०–(८६) भो वयस्य तदेवैतत्सुवर्णभाण्डं प(य)दस्माकं गेहे चौरैरपहृतम् ।

चारु०–[ योस्माभिरिति ] अनुष्टुप् । अत्र व्याजशब्दः पुल्लिङ्गः । स व्याज एवास्माकं प्रस्तुतो रत्नावलीप्रत्युत्तरत्वेनावतीर्णः । शेषं सुगमम् ॥ ३९ ॥

---

१ णिज्जाअदि A B (bc) G K; °ज्जाअदि H. २ पुरुवो H. ३ सिप्पि BB (a). ४ om. B (a). ५ om. CJ. ६ दिट्ठिए K. ७ सहर्षं जनान्तिकम् K. ८ om: B (a). ९ प्रसुतो° AB (c). १० सत्वं C (a); सत्यवि° B (d)

विदूषकः । भो व[1]अस्स स[2]च्चं स[3]वामि [4]बम्हण्णेण[5] (८७) ।

चारुदत्तः । प्रियं न: प्रिय[6]म् ।

विदूषकः । जनान्तिकम् । भो पुच्छामि णं कुदो एदं समासादिदंत्ति (८८) ।

चारुदत्तः । को दोषः ।

विदूषकः । चेट्याः कर्णे । ए[6]व्वं विअ (८९) ।

चेटी । विदूषकस्य कर्णे । एव्वं विअ (९०) ।

चारुदत्तः । किमिदं कथ्यते । किं वयं बाह्याः ।

विदूषकः । चारुदत्तस्य कर्णे । एव्वं विअ (९१) ।

---

विदू०—(८७) भो वयस्य सत्यं शपामि(पे) ब्राह्मण्येन ।

विदू०—(८८) भो पृच्छामि ननु कुत एतत्समासादितमिति ।

विदू०—चेटयाः कर्णे । (८९) एवमिवेति । यद्विदूषकेण चारुदत्तगृहे निद्रायामुत्स्वप्नमनुभूय चारुदत्तबुद्धया चौरशर्विलकाय सुवर्णभाण्डसमर्पणादि तत्कर्णे एवमिवेत्यस्यार्थः ।

चेटी—(९०)यत्पुनः शर्विलकेन गत्वा वसन्तसेनागृहं दत्त्वा सुवर्णभाण्डं लब्धा मदनिकेत्यादि तदत्र एवमिवेत्यस्यार्थः ।

विदू०—(९१) विदूषकेण यदिदं सकलं चारुदत्ताय कथितं तदत्र एवमिवेत्यस्यार्थः ।

---

१ वयस्स C J. २ सव्वं K. ३ सपामि D. ४ बह्मणेण AB (cd) EJK ; °णेण B (d). ५-प्रिय न. G. ६ Here as well as in othei places in this page एवं D. ७ om· B (d).

चारुदत्तः । भद्रे सत्यं तदेवेदं सुवर्णभाण्डम् ।

चेटी । अज्ज अध इं (१२) ।

चारुदत्तः । भद्रे न कदाचित्प्रियनिवेदनं निष्फली-कृतं मया । तद्गृह्यतां पारितोषिकमिदमङ्गुलीयकम् । इत्यनङ्गुलीयकं हस्तमवलोक्य लज्जां नाटयति ।

वसन्तसेना । आत्मगतम् । अदो ज्जेव कामीअसि (१३) ।

चारुदत्तः । जनान्तिकम् । भोः कष्टम् ।

धनैर्वियुक्तस्य नरस्य लोके
किं जीवितेनादित एव तावत् ।
यस्य प्रतीकारनिरर्थकत्वा-
त्कोपप्रसादा विफला भवन्ति ॥ ४० ॥

चेटी–(१२) आर्य अथ किम् ।

वस०–(१३) अत एव अत्युदारत्वादेवेत्यर्थः । काम्यसे ।

चारु०–[धनैरिति] श्लोकः उपजातिच्छन्दसा । आदित एव प्रथमत एव यस्य धनैर्वियुक्तस्य कोपप्रसादा विफला भवन्तीत्यर्थः । कोपे प्रतिकर्तुं प्रसादे चोपकर्तुमसमर्थतया तयोर्वैयर्थ्यमित्यर्थः । शिष्टं स्पष्टम् ॥ ४० ॥

---

१ कदापि B B.(a). २ मया प्रिय° B ; प्रियं B (d). ३ °वेदितं B (d). ४ निः-फली B K. ५ °यकमिति H ङ्गुनी ? B (abcd.). ६ भो B D. ७ भोः कष्टम् om: B (a) ; कष्टं कष्टम् G. ८ जीवितैरादि° B (a). ९ विफलीभ°. J; विफलो F.

अपि च ।

पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम् ।
सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥ ४१ ॥

अपि च ।

शून्यैर्गृहैः खलु समाः पुरुषा दरिद्राः
कूपैश्च तोयरहितैस्तरुभिश्च शीर्णैः ।
यद्दृष्टपूर्वजनसंगमविस्मृताना-
मेवं भवन्ति विफलाः परितोषकालाः ॥ ४२ ॥

**विदूषकः** । भो अलं अदिमेत्तं सन्तप्पिदेण । प्रकाशं सपरिहासम् । भोदि समप्पीअदु ममकेरिआ ण्हाणसाडिआ (९४) ।

---

निर्धनता महादोष इत्याह ।

[पक्षेति] ॥ ४१ ॥ [शून्यैरिति] पूर्वार्धं स्पष्टम् । यत्पूर्वदृष्टजनानां वसन्तसेनादीनां संगमो विस्मृतो यैस्तेषां मादृशानाम् । संगमस्य बहुकाञ्चनसाध्यतया स्वस्याकिंचनत्वेन च दुर्लभतया कादाचित्कतया च विस्मृतत्वं बोध्यम् । यद्वा दृष्टपूर्वस्य पूर्वदृष्टस्य जनस्य वसन्तसेनादेः संगमेनोत्तरलतायां वर्तमानस्वदैन्यं विस्मृतानां विस्मरणवतां मादृशानां पुंसामीदृशपरमोत्कर्षशालिहर्षकालेपि दातुं वस्तु किमपि नास्तीति । परितोषकालानां भवति वैफल्यमिति भावः ॥ ४२ ॥

विदू०-(९४) भो अलमतिमात्रं संतप्तेन । संतापेनेत्यर्थः । भावे क्तः । हे भवति समर्प्यतां ममकेरिआ ममेत्यर्थः । स्नानशाटिका । यस्यां सुवर्णभाण्डं बद्धं सा स्नानशाटीत्यर्थः ।

---

१. तु लोके A B (c) ; तुल्यो लोके D H. २ अपि च वयस्य B B (a). ३ समा C. ४ परिहितै° ? H. ५ विस्मितानां B (a) G K ; स्मृ corr. स्मि B (d). ६ अतिमेत्तं B (a), °मत्त B (d) ; °मत्त E. ७ संकथिदेण B (a). ८ om: D. ९ आ ह्राण ? A B (c?) ; आए ह्राण=एह्राण? A B (c). १० शाडिआ B (d)

**वसन्तसेना** । अज्ज चारुदत्त जुत्तं णेदं इमाए रअणावलीए इमं जणं तुलइदुं (९५) ।

**चारुदत्तः**। सविलक्षस्मितम्। वसन्तसेने पश्य पश्य ।

कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति ।
शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता ॥४३॥

**विदूषकः** । हञ्जे किं भोदीए । इध ज्जेव्व सुविदंव्वं (९६) ।

---

वस०–(९५) आर्य चारुदत्त युक्तं नेदं अनया रत्नावल्येमं जनं तुलयितुम्। महत्सुवर्णभाण्डगमने तत्प्रतिदानतया रत्नावलीदानमिति । न युक्तमित्यर्थः । ए(ये)षां जनानां भेदस्त एवान्योन्यं वस्तुनि सति गते देयोपादेयभावमावहन्ति । येषां तु तादात्म्यं तेषु नायं भाव इति भावः । इमं जनमित्युक्तिर्विनयगर्वयोरुभयोरप्याविर्भाविकेति ध्येयम् ।

चारु०–[कः श्रद्धास्यती(ति)] पद्यं [ १५५ पृष्ठे तृतीयाङ्के] व्याख्यातम् । दरिद्रता निष्प्रतापेति। भाग्यवतेश्वरेण यदसदपि कृतं तत्सदिव भाति । दरिद्रेण तु सदपि कृतं नातिभाति । पुनरसतः का कथा । किं चास्माकमकिंचनानामस्मिन्विषये चौर्यस्य रत्नमाला प्रतिदानसावधानतायामेव सर्वानर्थनिवारणमिति भावः ॥४३॥

विदू०–(९६)हञ्जे किं भवत्या चेटचेत्यर्थः । इहैव सु(स्व)प्तव्यम् ।

---

१ इयनणं E. २ विंस्मितम् G. ३ निःप्र० K. ४ भोदिए H. ५ °दडुं H; दड्डा K.

चेटी । विहस्य । अज्जे[1] मित्तेअ अदिमेत्तं[2] दाणिं उज्जअं[3] अत्ताणअं[4] दंसेसि[5] (९७) ।

विदूषकः । भो वअस्स एसो क्खु ओसारअन्तो[6] विअ सुहोवविट्ठं जणं पुणो वि[7] वित्थारवारिधाराहिं[8] पविट्ठो पज्जण्णो[9] (९८) ।

चारुदत्तः । सम्यगाह भवान् ।

अमूर्हि भित्त्वा[10] जलदान्तराणि
पङ्कान्तराणीव मृणालसूच्यः ।
पतन्ति चन्द्रव्यसनोद्विमुक्ता[11]
दिवोऽश्रुधारा इव वारिधाराः ॥४४॥

---

चेटी—(९७)आर्य मैत्रेय अतिमात्रमिदानीमुद्यतमात्मानं दर्शयसि । उद्यं(द्य)तमुद्युक्तम् ।

विदू०—(९८) भो वयस्य एष खलूत्सारयन्निव सुखोपविष्टं जनं पुनरपि विस्तारवारिधाराभिः प्रविष्टः पर्जन्यो मेघः ।

चारु°—[अमूरिति ।] मृणालसूच्य इव शुभा अमूर्धाराः । [उपजातिछन्द इदम्] ॥ ४४ ॥

---

१ अज्ज मित्ते° B, २ °मत्तं B (a). ३ उज्जुअं B (bd) H, उजुअं J. ४ अत्ताणं B (d). ५ °सेति ABCF. ६ रु (उ) A B (c) F, Pr. m. corr. ओ सा B (d); रु (उ) स्सार° D H. ७ om: B (d) ८ °त्थार° A B (bc) D; Pr. m. corr रि B (d). ९ पज्जणो A B (c); पाजिण्णे B (a); पज्जणे E, पज्जस्यो G पज्जणो H. १० भित्रा A B (c); भिंना F. ११ °युक्ता B (d) E; °सना वियुक्ता G

अपि च ।

धाराभिरार्यजनचित्तसुनिर्मलाभि-
श्चण्डाभिरर्जुनशरप्रतिकर्कशाभिः ।
मेघाः स्रवन्ति बलदेवपटप्रकाशाः
शक्रस्य मौक्तिकनिधानमिवोद्गिरन्तः ॥ ४९ ॥

प्रिये पश्य पश्य ।

एतैः पिष्टतमालवर्णकनिभैरालिप्तमम्भोधरैः
संसक्तैरुपवीजितं सुरभिभिः शीतैः प्रदोषानिलैः ।

---

[धाराभिरिति ।] बलरामवस्त्रसदृशा नीला इत्यर्थः । मेघा इन्द्र-मुक्तानिधिं विकिरन्त इव धाराभिः स्रवन्तीत्यन्वयः । [वसन्ततिलकं वृत्तम्] ॥ ४९ ॥

[एतैरिति ।] 'वर्णकोऽस्त्री विलेपनम्' इत्यमरः । पिष्टं यत्तमालस्य वर्णकं विलेपनं तमालवर्णं वा वर्णकं तस्य निभैस्तत्सदृशैः । नीलविलेपनसमानैरित्यर्थः । मेघैरालिप्तं कृतकस्तूरिकाङ्गरागमिवेति भावः । प्रदोषानिलैः संध्यावातैः । शीतैः सुगन्धैः । संसक्तैः सर्वतो मिलितैः । उपवीजितं संजातव्यजनवीजनमिवेति भावः । आकण्ठमुत्कण्ठामन्तरा नातिस्फुरत्यकुण्ठः शृङ्गार इत्युत्कण्ठामवतारयति । अम्भोदेत्यादि । अम्भोदानां समागमेनोद्दीपनविभावरूपेण प्रणयिनी प्रीतिमती । प्रणयः प्रेम । अत एव स्वच्छन्दं स्ववशं स्वयमेवेत्यर्थः । अभ्यागता नत्वाहूता प्रियेणेति भावः । यथा त्वं स्वयमेवागतासीति व्यङ्ग्यम् । रक्ता शोणवर्णानुरक्ता च । प्रियतमा कान्तमिव विद्युदम्बरमाकाशं समालिङ्गतीत्यन्वयः । एतेन समुद्दामसृगमदाङ्गरागसुन्दरं शीतसुगन्धतालवृन्तवातवीजितं वर्षा-

---

१ मेघा B (d) E. २ श्रवन्ति B (d) ; श्रयन्ति E. ३ विधान F. ४ दरै? G. ५ °वीजि om. B (b) ; °जीवि° B (d).

एषाम्भोदसमागमप्रणयिनी स्वच्छन्दमभ्यागता
रक्ता कान्तमिवाम्बरं प्रियतमा विद्युत्समालिङ्गति ॥४६॥

वसन्तसेना । शृङ्गारभावं नाटयन्ती चारुदत्तमालिङ्गति ।

चारुदत्तः । स्पर्शं नाटयन्प्रत्यालिङ्ग्य ।

भो मेघ गम्भीरतरं नद त्वं
तव प्रसादात्स्मरपीडितं मे ।

---

दिभिरुद्दीपनैरुद्दीपितमदमा(ना) स्वयमागमनशालिनी कामिनी यथा कान्तमालिङ्गति तथा विद्युदम्बरमालिङ्गतीति तटस्थतयैव कथनेन मामपि त्वमपीदृशी संभोगदानादिना कृतार्थयेति ध्वन्यते। अम्बरशब्दगतं नपुंसकं लिङ्गं नार्थे भासते । येन नपुंसकमालिङ्गतीति दूषणमुद्भाव्येत । दाराः कलत्रं योषिदित्यादौ व्यभिचारात् । 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यादौ भासते चापि तथापि प्रकृते न प्रकृतव्यङ्ग्यार्थहानिरपि त्वधिकचमत्कृतिरेव । तथाहि अपुमांसमप्यम्बरं सालिङ्गति। त्वं तु पुमांसमपि सुन्दरमपि मामालिङ्गरमय चेति भावः । 'सत्त्वादीनामुपचयापचयौ लिङ्गम्' इति लक्षणे तल्लिङ्गेन शब्देनाभिहितोर्थः स्वयमुपचयादिमानित्र भवन्बोधविषयो भवतीति शब्दादिदर्शनपर्यन्तविदः। [शार्दूलविक्रीडितं छन्दः] ॥४६॥

चारु०—विरहे प्रतिकूलानामुद्दीपनानामिदानीं सति संभोगेनुकूलतैवेत्याह। [भो मेघेति।] हे मेघ त्वं नद। चिन्ता नास्तीति भावः। अनुकूलता प्रत्युत तव संस्पर्शेन वसन्तसेनाङ्गसंगेन रोमाञ्चितं संजात-

---

१ °मिकर्षांतरं ? B (a). २ नाटयति D.

संस्पर्शरोमाञ्चितजातरागं
कदम्बपुष्पत्वमुपैति गात्रम् ॥४७॥

विदूषकः । दासीए[1] पुत्ते[2] दुद्दिण अणज्जो दाणिं सि तुमं । जं एव्वं[3] भोदिं विज्जुआए भाआवेसि[4] (९९) ।

चारुदत्तः । वयस्य नार्हस्युपालब्धुम् । 430

रोमाञ्चम् । जातकामानुरागं च । गो(गा)त्रमङ्गं कदम्बपुष्पत्वमुपैति गच्छति । कदम्बकुसुममिव भवतीत्यर्थः । गात्रस्य कदम्बपुष्पोपमा वर्षता(र्ता)वनुगुणैवेति भावः । स्त्रीपुंसयोः सामानाधिकरण्यमेव संभोग इति न भ्रमितव्यम् । एकशयनस्थितयोरपि तयोर्विप्रलभ(म्भ)संभवदर्शनात् । किं तु द्वयोरपि मनोवृत्तिसांमुख्यमेव मुख्यः शृङ्गारः । स च मनोवृत्तेरनुकूलतायां संभोगः । प्रतिकूलतायां तु विप्रलम्भ इति विवेकः । 'शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुके' इत्युक्तेः । शृङ्गेन(ण)मन्मथोद्भवेन आर्ति(अ?)आगच्छतीति शृगा(ङ्गा)र इति व्युत्पत्तेः । ऋ गतौ धातुः । अत्र तु संभोग एव । तदुक्तम्—'अनुरक्तौ निषेवेते यत्रान्योन्यविलासिनौ । दर्शनस्पर्शनाद्यैश्च संभोगोयमुदाहृतः' इति । स्पर्शनं सुरतमिति रसविद्याविदो वदन्ति । [उपजातिच्छन्दसा श्लोकः] ॥ ४७ ॥

विदू०—(९९)दास्याः पुत्र दुर्दिन अनार्य इदानीअ(म)सि त्वम् । यदेवं भवतीं विद्युता भीषयसि ।

चारु०—विद्युदुद्गर्जादिभीतायां वनितायामप्रार्थितसरभसघनालिङ्गनसंभवादाह । वयस्येत्यादि ।

१ दासिए उत्त B; दासिए B (d). २ उत्त B (a) also B. ३ एवं E. ४ भायावे° C J; भीआ° G; भाअ° K.

वर्षशतमस्तु दुर्दिनमविरतधारं शतह्रदा स्फुरतु ।
अस्मद्विधदुर्लभया यदहं प्रियया परिष्वक्तः ॥४८॥

अपि च वयस्य ।

धन्यानि तेषां खलु जीवितानि
ये कामिनीनां गृहमागतानाम् ।
आर्द्राणि मेघोदकशीतलानि
गात्राणि गात्रेषु परिष्वजन्ति ॥ ४९ ॥

प्रिये वसन्तसेने ।

स्तम्भेषु प्रचलितवेदिसंचयान्तं
शीर्णत्वात्कथमपि धार्यते वितानम् ।

---

[वर्षेति] च आर्याच्छन्दः । दुर्दिनं मेघाच्छन्नं दिनम् । शतह्रदा विद्युत् । अस्मद्विधेति । अकिंचनस्य चारुतरवाराङ्गनासंभोगासंभवादिति भावः । परिष्वक्त आलिङ्गितः ॥ ४८ ॥

निजालिङ्गनसुखं वर्णयति । [धन्यानीति ।] कामिनीनाम् । कामः इच्छा । तद्विषयकाभिलाषस्तद्वतीनामनुरक्तानामित्यर्थः । तत्रापि स्वयमेव गृहमागतानां गात्राणि परिष्वजन्ति आलिङ्गन्तीत्यर्थः ॥ ४९ ॥

एवमुद्दीपितमदनः सुर(त)सुखसंभोगाय वसन्तसेनामन्तर्नेतुमाह [स्तम्भेष्विति, विद्युज्जिह्वेनेति च ।] वेदिः कुट्टिमम् । चौं(चौ)तरा इति भाषा । तस्याः संचयो मिलिताभिरिष्टिकाभिर्निर्माणम् अन्योन्यसंलग्नतेत्यर्थः । प्रचलितो वेदिसंचयस्यान्तः प्रान्तो यस्

---

१ अविरतं B (a). २ धारं om. B (a), राधं H. ३ °ह्रदा A B (c) F. ४ स्फुरन्तु A B (c) F ५ om. G. ६ °त्रेदि° B (a), °वेदि B (b). ७ यन्तं A B (c) D F.

एषा च स्फुटितसुधाद्रवानुलेपा-
त्संक्लिन्ना सलिलभरेण चित्रभित्तिः ॥ ५० ॥

ऊर्ध्वमवलोक्य । अये इन्द्रधनुः । प्रिये पश्य पश्य ।

विद्युज्जिह्वेनेदं महेन्द्रचापोच्छ्रितायतभुजेन ।

न्तथा । वितानमुल्लोचः । 'अस्त्री वितानमुल्लोचः' इत्यमरः । च- न्द्रातप इत्यप्यस्यैव नाम । चनदेवा इति भाषा । स्तम्भेषु कथमपि धार्यते । कथमपीति कुतस्तत्राह । शीर्णत्वादिति गृहस्य विता(न)- स्य च जीर्णत्वादित्यर्थः । इदं पुरत उक्तम् । दक्षिणतो वामतो वा ाह । एषा चेति । गृहस्य जीर्णत्वात्स्फुटितो यः सुधाद्रवानुलेपः । सुधा चूर्णं तस्मात्प्रचुरचित्रा भित्तिर्जलभरेण संक्लिन्नात्यार्द्रा । क्लिदू आर्द्रीभावे धातुः । शीतपवनवर्षोपद्रवादन्तश्चलनीयमिति ाावः । [प्रहर्षिणी छन्दः] ॥ ५० ॥

गृहाभ्यन्तरगमनाय भयमपि द्योतयन्नाह । [ विद्युदिति । ] आर्याच्छन्दः । विद्युदेव जिह्वा यस्य तेन । इन्द्रचापमेवोच्छ्रि- ावुच्चावायतौ दीर्घौ भुजौ यस्य तेन । जलधरा एव विवृ- द्धोतिमहान्हनुश्चिबुकं यस्य तेन । अन्तरिक्षेणानेन वर्षाकालि- न गगनेन विजृम्भितमिव विशेषेण जृम्भितम् । इदं प्रिये पश्येत्य- ्यः । जृम्भैवेयं महती दत्ता गगनेनेत्यर्थः । जृम्भा छिक्कावद्विकारः सिद्धः । 'विधाय मानं रहसि स्थितायाः संभाव्य जृम्भामचलात्म- ायाः । चुटत्कृतिं स्मेरमुखो महेशः कराङ्गुलीभिः कलयांचकार ॥' इति रसतरङ्गिणीपद्ये स्फुटैव जृम्भा । 'बालायाङ्गुलिबद्धबाहुपरिधि-

१ चित्त° A B (c); pr. m. B (d). २ °र्ध्वं विलो° B.

जलधरविवृद्धहनुना विजृम्भित[1]मिवान्तरिक्षेण[2] ॥ ५१ ॥

तदेह्यभ्यन्तरमेव प्रविशावः । इत्युत्थाय परिक्रामति[3] ।

तालीषु[4] तारं विटपेषु मन्द्रं[5]
शिलासु[6] रूक्षं[7] सलिलेषु चण्डम्

न्यग्चद्विवृत्तत्रिकं त्रुटचत्कञ्चुकसंधिदर्शितलसद्दोर्मूलमुज्जृम्भते' इत्यत्र तु धात्वर्थ एव जृम्भा । अनेन व्यात्ताननभयंकरोत्तालवेतालादिरूपकेण सावयवेन भीताया वसन्तसेनायाः सत्वरमभ्यन्तरगमनं भवत्विति भावः ॥ ५१ ॥

एवमिदमिन्द्रजालमिव विरच्य स्पष्टं प्राह । तदेह्यभ्यन्तरमेव प्रविशाव इति। [तालीषु तारमिति ।] ताड्यमाना वाद्यमानाः संगीतवीणा इव धारास्तालानुसारेण पतन्तीत्यन्वयः । तालानुसारमेवाह । तालीषु तारमित्यादि । तारमुच्चस्वरम् । तालीदलेषु जलधाराघाते महानुच्चस्वरः श्रावणप्रत्यक्षविषय एव । विटपेषु शाखासु मन्द्रं गम्भीरस्वरम् । रूक्षस्वरचण्डस्वरयोः परमभेदेपि शिलासु सलिलेषु च वर्षधाराघाते काठिन्याकाठिन्यकृतः कश्चन प्रत्यक्ष एव भेदः । यथा वीणास्तत्र तत्र रागस्थाने तालानुसारेण तारं मन्द्रं रूक्षं चण्डं च स्वनन्ति तथा धारा इत्यर्थः । गत्वाभ्यन्तरमेवमेव सुरतं क्रीडाव इति परमं व्यङ्ग्यम् । प्रयत्नमन्तरा प्राप्तस्य स्पर्शमणेरिव निधेरिव चिन्तामणेरिव च स्वयं सरागमारचितागमनाया वसन्तसेनाया

---

१ जृम्बित J. २ °रीक्षेण J. ३ °मति is followed by प्रिये पश्य B C F; प्रिये पश्य पश्य D E. ४ नालीषु B (a). ५ मन्दं A B (c) D. ६ शिकासु B (a). ७ रुक्षं A B (c) C J.

संगीतवीणा इव ताड्यमाना-
स्तालानुसारेण पतन्ति धाराः ॥ ५२ ॥

इति निष्क्रान्ताः सर्वे ।

## [1]दुर्दिनो नाम पञ्चमोऽङ्कः ।

महाधनायाः प्रथमसंगे प्रथमाङ्के शकारान्तरायेणान्तरिते निर्भरान्योन्यानुरागानुरञ्जिते तावदलब्धालभ्यलाभादादौ सुरतं तारम् । ततस्तदा निरुपमानन्दनीरधिनिमग्नतया मन्द्रम् । ततः कामावेगप्रवेशे सति महति रूक्षम् । ततः स्खलनावसरे चण्डं सुरतमिति यथाक्रममवसेयमुत्तुङ्गशृङ्गाररसतरङ्गिणीधीवरैरिदं परमतमं व्यङ्ग्यमिति दिक् ॥ ५२ ॥ इति श्रीमृच्छकटिकप्रकरणव्याख्यायां श्रीमता लल्लादीक्षितधीमता श्रीमन्नाट्याद्यनेकानवद्यविद्याविशारदश्रीबलिसेनसाहबसंमदाय विद्योतितायामङ्कः पञ्चमः समाप्तिमबीभजत् ॥ ५ ॥

---

१ Before दुर्दिनो नाम write इति मृच्छकटिकाया B; दुर्दिनो नाम om. and for it write इति मृच्छकटिकप्रकरणे D; दुर्दिनो नाम om. and write इति मृच्छ० नाटके H.

# षष्ठोऽङ्कः ।

—∞✿∞—

ततः प्रविशति चेटी ।

चेटी । कधं अज्ज वि अज्जआ ण विबु[1]ज्झदि । भोदु । पविसिअ पडि[2]बोधइस्सं (१) ।

इति नाटयेन परिक्रामति ।

ततः प्रविशत्याच्छादितशरीरा प्रसुप्ता वसन्तसेना ।

चेटी । नि[3]रूप्य । उत्थेदु उत्थेदु अज्जआ । प[4]भादं [5]संवुत्तं (२)।

वसन्तसेना । प्रति[6]बुध्य । कधं [7]रत्ति ज्जेव्व प[8]भादं संवुत्तं(३)।

चेटी । अम्हाणं एसो पभादो । अज्जआए उण रत्ति ज्जेव्व (४) ।

---

चेटी-(१) कथमद्याप्यार्या न विबुध्यते । भवतु । प्रविश्य प्रतिबोधयिष्यामि ।

चेटी- (२) उत्तिष्ठतु उत्तिष्ठत्वार्या । प्रभातं संवृत्तम् ।

वस०-(३) कथं रात्रिरेव प्रभातं संवृत्तम् । प्रभातरात्रिमजानन्त्या(त्या) इयमुक्तिः । इदानीं रात्रिरेवास्ति कथं प्रभातं जातमित्यर्थः ।

चेटी-(४) अस्माकमेष प्रभातः । आर्यायाः पुना रात्रिरेव ।

---

१ विबुह्लदि A B (c) F ; विवुद्धदि D H; विवुज्जदि K. २ पडिबो० A B (bcd) CDFJ. ३ om. B, B (a). ४ पभादे B (a). ५ °वुत्त G. ६ प्रतु-य B (d). ७ रंत्ति (=रात्रौ) B (d); रत्ती D. ८ संपभादं B (d).

वसन्तसेना । हञ्जे कहिं उण तुम्हाणं जूदिअरो (५)।

चेटी । अज्जए वड्ढमाणअं समादिसिअ पुप्फकरण्डअं जिण्णुज्जाणं गदो अज्जचारुदत्तो (६) ।

वसन्तसेना । किं समादिसिअ (७) ।

चेटी । जोएहि रादीए पवहणं । वसन्तसेना गच्छदुत्ति(८)।

वसन्तसेना । हञ्जे कहिं मए गन्तव्वं (९) ।

चेटी । अज्जए जहिं चारुदत्तो (१०) ।

---

वस०–(५) हञ्जे कुत्र पुनर्युष्माकं द्यूतकरः ।

चेटी–(६) आर्ये वर्धमानकं समादिश्य पुष्पकरण्डकं जीर्णोद्यानं गत आर्यचारुदत्तः ।

वस०–(७) किं समादिश्य ।

चेटी–(८) योजय रात्रौ प्रवहणम् । वसन्तसेना गच्छत्विति ।

वस०–(९) हञ्जे कुत्र मया गन्तव्यम् ।

चेटी–(१०) आर्ये यत्र चारुदत्तः ।

१ om B, हं उण B (b) of course ञ्जे कहिं om :. २ जूदअरो D; जूदआरो H ३ वड्ढमाणअं K. ४ सदिअ B (a); समासादिअ marg. संदिश्य B (d). ५ पुष्प B (ab). ६ °दत्तओ B (a). ७ This speech and the next om: G. ८ मेमादिसिअ ? B (a), समादिअ B (d), this is followed by पुप्फ A B (c) D; पुष्प B (b); करण्डअं जिण्णुज्जाणं गदो अज्जचारुदत्तो A B (bc) D. ९ रादीए ज्जेव्व B, B (a); रादी om: del ए and marg. रत्नौ om: B (d); एदाए पव° K. १० °सेणा B E K. ११ om: B (a). १२ om: B (a).

**वसन्तसेना** । चेटीं परिष्वज्य । हञ्जे सुट्ठु ण णिज्झाइदो[1] रादीए । ता अज्ज पच्चक्खं[2] पेक्खिस्सं । हञ्जे किं पविट्ठा अहं इह अब्भन्तरचदुस्सालअं[3] (११) ।

**चेटी** । ण केवलं अब्भन्तरचदुस्सालअं[4] सव्वजणस्स-वि[5] हिअअं[6] पविट्ठा (१२) ।

**वसन्तसेना**[7] । अवि संतप्पदि चारुदत्तस्स परिअणो (१३) ।

**चेटी** । सन्तप्पिस्सदि[8] (१४) ।

---

वस०–(११) हञ्जे सुष्ठु न निध्यातो रात्रौ । तदद्य प्रत्यक्षं प्रेक्षिष्ये । हञ्जे किं प्रविष्टाहमिहाभ्यन्तरचतु(तुः)शालम् । रात्रौ प्रकाशविरहेण सुष्ठु न निध्यातो न दृष्टः । प्रातर्निद्राप्रमत्ता प्राह हञ्जे किमिति ।

चेटी–(१२) न केवलमभ्यन्तरचतु(तुः)शालं सर्वजनस्यापि हृदयं प्रविष्टा ।

वस०–(१३) अपि संतप्यते चारुदत्तस्य परिजनः । यतो मया रत्नावली गृहीतातः संतप्यत इति भावः । अपि(पिः) प्रश्ने । परिजनो दारादिः । इदमेव प्रश्नोत्तराभ्यामनुपदमेव स्फुटमिति बोध्यं बुधैः ।

चेटी–(१४) संतपत्स्य(प्स्य)ते ।

---

१ परसइदो B (a) ; णिज्जाइदो A B (bc) FK ; णिज्झी° H. २ पट्टक्खं A B (c) EF ; पज्ञक्खं B (a), पंचक्खं B (d). ३ °तुस्सा° BE. ४ °तुस्सा° B D. ५ om . B. ६ हिअअं पि B ; हिआबि B (a). ७ This and the following three speeches om : B (a). ८ °पिस्स° A B (bc) D F K.

वसन्तसेना । कदा (१५) ।

चेटी । जदो[1] अज्जआ गमिस्सदि (१६) ।

वसन्तसेना । तदो मए पढमं[2] सन्तप्पिदव्वं[3] । सानुनयम्[4] । हञ्जे गेह्ण एदं[5] रअणावलिं । मम बहिणिआए[6] अज्जाधूदाए गदुअ समप्पेहि । भणिदव्वं च अहं सिरिचारुदत्तस्स[7] गुणणिज्जिदा दासी तदा तुम्हाणं पि । ता एसा तुह ज्जेव्व[8] कण्ठाहर[9]णं[10] होदु रअणावली (१७) ।

चेटी । अज्जए[11] कुप्पिस्सदि चारुदत्तो अज्जाए[12] दाव (१८) ।

---

वस०-(१५) कदा ।

चेटी-(१६) यदार्या गमिष्यति ।

वस०-(१७) तदा मया प्रथमं संतप्तव्यम् । गृहीतरत्नावलीकायां गतायां मयि निजमित्रचारुदत्तपरिजनपरितापे पश्चान्मम बहुपश्चात्तापः स्यादिति प्रथममेव मया संतप्तव्यम् । शोचनीय(?) । यथा मित्रपरिजनानुतापो न भवेदिति भावः । इत्यभिप्रायेण प्राह । हञ्जे गेह्णेति । हञ्जे गृहाणैतां रत्नावलीम् । मम भगिन्या आर्याधूतायै गत्वा समर्पय । भणितव्यं च अहं श्रीचारुदत्तस्य गुणनिर्जिता दासी तदा युष्माकमपि । तदेषा तवैव कण्ठाभरणं भवतु रत्नावली ।

चेटी-(१८) आर्ये कु(को)पिष्यति चारुदत्त आर्यायै तावत् ।

---

१ जदा G. २ पठमं A B (c); पढ्ढमं B (a). ३ °पिदव्वं A B (bcd) D; °प्पइदव्वं B (a). ४ om. B B (a); सानुकपं B (d). ५ om: B (d); एदं च E. ६ बाहिणी° D. ७ सिरी° B (a). ८ तुहजव्व A B (c); तुवज्जेव G. ९ कंड्डा A B (c), कंढा? B (a); कंड्ढा B (b), काढा? B(d); कंड्डा DH. १० रणं हो° add marg. B (d). ११ om: B B (a). १२ अज्झआए B.

वसन्तसेना । ग[1]च्छ । ण कुप्पिस्सदि (१९) ।

चेटी । गृहीत्वा । जं[2] आणवे[3]सि (२०) ।

इति निष्क्र[4]म्य पुनः प्रविश[5]ति ।

चेटी । अज्ज[6]ए भणादि अज्जा धूदा । अज्जउत्तेण तुम्हाणं पसादीकि[7]दा । ण जुत्तं मम एदं गेह्णिदुं । अज्जउत्तो ज्जेव्व मम आहरणविसेसो त्ति जाणादु भोदी (२१) ।

ततः प्रविशति दारकं गृहीत्वा रदनिका ।

रदनिका । एहि व[8]च्छ स[9]अडिआए की[10]लेम्ह (२२) ।

दारकः । सकरुणम् । रदनिए किं मम एदाए मे[11]ट्टिआसअडिआ[12]ए । तं ज्जेव्व सोवण्णस[13]अडिअं देहि (२३) ।

वस०—(१९) गच्छ । न कु(को)पिष्यति ।

चेटी—गृहीत्वेति । रत्नावलीं गृहीत्वेत्यर्थः । (२०) यदाज्ञापयसि ।

चेटी—(२१) आर्ये भणत्यार्या धूता । आर्यपुत्रेण युष्माकं प्रसादीकृता । न युक्तं ममैतां गृ(ग्र)हीतुम् । आर्यपुत्र एव ममाभरणविशेष इति जानातु भवती ।

रद०—(२२) एहि वत्स शकटिकया क्रीडामः(वः) ।

दार०—(२३) रदनिके किं ममैतया मृत्तिकाशकटिकया । तामेव सुवर्णशकटिकां देहि ।

१ ता गच्छ E. २ जं अज्जुआ E. ३ आणबेदि C J; °बेदित्ति B (d) E; °वेदिसि K. ४ निष्क्रान्ता B B (a). ५ प्रविश्य B B (a). ६ om: B (a). ७ °किदा B (d) D E. ८ वत्स DH. ९ सआए B (b); सकडि° D H. १० कीलें° B B (a). ११ मट्टिअ° H. १२ °आये G. १३ स om: B (d), and अं om: B (b).

**रदनिका** । सनिर्वेदं निश्वस्य[1] । जाद[2] कुदो अम्हाणं सुवण्णववहारो । तादस्स पुणो वि रिद्धीए[3] सुवण्णसअडिआए कीलिस्ससि[4] । ता जाव विणोदेमि णं । अज्जआवसन्तसेणाए[5] समीवं उवसप्पिस्सं[6] । उपसृत्य । अज्जए पणमामि (२४) ।

**वसन्तसेना** । रदणिए[7] साअदं दे[8] । कस्स उण अअं दारओ[9] अणलंकिदसरीरो[10] वि चन्दमुहो आणन्देदि[11] मम हिअअं (२५) ।

**रदनिका** । एसो क्खु अज्जचारुदत्तस्स पुत्तो रोहसेणो णामे[12] (२६) ।

**वसन्तसेना** । बाहू प्रसार्य । एहि मे पुत्तअ[13] आलिङ्ग । इत्यङ्के उपवेश्य[14] । अणुकिदं अणेण पिदुणो रूवं[15] (२७) ।

---

रद०–(२४) तात कुतोऽस्माकं सुवर्णव्यवहारः । तातस्य पुनरपि ऋद्ध्या सुवर्णशकटिकया क्रीडिष्यसि । तद्यावद्विनोदयाम्येनम् । आर्यावसन्तसेनायाः समीपमुपसर्पिष्यामि । आर्ये प्रणमामि ।

वस०–(२५) रदनिके स्वागतं ते । कस्य पुनरयं दारकोऽनलंकृतशरीरोऽपि चन्द्रमुख आनन्दयति मम हृदयम् ।

रद०–(२६) एष खल्वार्यचारुदत्तस्य पुत्रो रोहसेनो नाम ।

वस०–(२७) एहि मे पुत्रक आलिङ्ग । अनुकृतमनेन पितू रूपम् ।

---

१ नि.श्वस्य B. २ om : B· (a). ३ °द्धिए D. ४ °लइस्ससि B (a) E. ५ अज्ज अज्जआए D; अज्जआए also without अज्ज H. ६ उप° B (ab); उपाविसिस्सं pr. m. B (d); उपसप्पाम्मि H. ७ रअणिए A B (bc) DFG. ८ ते D. ९ तरओ B (a); दारे अंदारओ B (b). १० अनलंकिद CJ. ११ °न्देइ D; अणंदोदिं E; अणंदेइ H; आषं ? देदि (=आस्पन्दते) K. १२ णामे B (b). १३ पुत्ता B (a). १४ उपविश्य ? K. १५ रूपं B (d), रूअं D.

रदनिका । ण केवलं रूवं[1] सीलं पि[2] तक्केमि । एदिणा[3] अज्जचारुदत्तो अत्ताणअं[4] विणोदेदि[5] । (२८) ।

वसन्तसेना । अध किंणिमित्तं[6] एसो रोअदि[7] (२९) ।

रदनिका । एदिणा पडिवेसिअ[8]गहवइ[9]दारअकेरिआए[10] सुवण्णसअडिआए कीलिदं[11] । तेण अ सा णीदा । तदो उण तं[12] मग्गन्तस्स मए इअं मट्टिआसअडिआ कदुअ[13] दिण्णा । तदो भणादि रदणिए किं मम[14] एदाए मट्टिआसअडिआए । तं ज्जेव सोवण्णसअडिअं देहि त्ति (३०) ।

वसन्तसेना । हद्धी हद्धी[15] । अअं पि[16] णाम परसम्पत्तीए[17]

---

रद०–(२८) न केवलं रूपं शीलमपि तर्कयामि । एतेनार्यचारुदत्त आत्मानं विनोदयति ।

वस०–(२९) अथ किंनिमित्तमेष रोदिति ।

रद०–(३०) एतेन प्रतिवेशिकगृहपतिदारककृतया सुवर्णशकटिकया क्रीडितम् । तेन च सा नीता । ततः पुनस्तां याचतः [मया] इयं मृत्तिकाशकटिका कृत्वा दत्ता । तदा भणति रदनिके किं ममैतया मृत्तिकाशकटिकया । तामेव सुवर्णशकटिकां देहीति ।

वस०–(३१) हद्धी हद्धी ( हा धिक् हा धिक् ) । अयमपि

---

१ रूअ D; रुअं H. २ वि D E, सीलंवि K. ३ एदीणा A. ४ अत्ताणं B (d) D. ५ °णोदेत्ति D. ६ °निमित्तं C. ७ रोइदि D H. ८ पाडिवेसिग° B B (a). ९ °गिह° B B (a). १० °बड° B (a). ११ कालिदव्वं E. १२ तं जेव्व E. १३ कदुआ B (d). १४ मए A B (bcd) D K. १५ हद्धि हद्धि ?. १६ वि D H. १७ °वत्तिए D H.

सन्तप्पदि । भअवं [1]कअन्त पोक्खरवत्तपडिदजलबिन्दुसरिसेहिं कीलसि तुमं [2]पुरिसभाअ[3]धेएहिं । इति [4]सास्रा । जाद [5]मा रोद । [6]सोवण्णसअडिआए कीलिस्ससि (३१) ।

दारकः । रदणिए का एसा (३२) ।

वसन्तसेना । [7]दे पिदुणो गुणणिज्जिदा दासी (३३) ।

रदनिका । जाद अज्जआ दे जणणी [8]भोदि (३४) ।

दारकः । रदणिए [9]अलिअं तुमं भणासि । जइ अम्हाणं अज्जआ जणणी ता [10]कीस अलङ्कि[11]दा (३५) ।

वसन्तसेना । [12]जाद मुद्धेण मुहेण अदिकरुणं मन्तेसि ।

---

नाम परसंपत्त्या संतप्यते । भगवन्कृतान्त हे दैव, पुष्करपत्रपतितजलबिन्दुसदृशैः क्रीडसि त्वं पुरुषभागधेयैः । तात मा रो(रु)दिहि । सुवर्णशकटिकया क्रीडिष्यसि ।

दार०–(३२) रदनिके कैषा ।

वस०–(३३) ते पितुर्गुणनिर्जिता दासी ।

रद०–(३४) तात आर्या ते जननी भवति ।

दार०–(३५) रदनिके अलीकं त्वं भणसि । यद्यस्माकमार्या जननी तत्कीस किमर्थम् । अलंकृता ।

वस०–(३६) तात मुग्धेन मुखेनातिकरुणं मन्त्रयसि । एषेदानीं

---

१ कदंत A B (bcd) D G; कइं K. २ पुलिस D H. ३ धेचेहि B (a). ४ सास्रम् G K. ५ मा रोद मा रोद K. ६ सुवण्ण B B (a) D H. ७ पिदुणो दे J; ते पिदुणो and दे om: D. ८ भोदी D. ९ अलीअं B (a). १० कीसअं K. ११ °दाए A B (c); °दा एसा D F H. १२ जात B (d).

नाट्येनाभरणान्यवतार्य रुदती[1]। एसा दाणिं दे जणणी संवुत्ता। ता गेह्न एदं अलङ्कारअं। सो[2]वण्णसआडिअं घडावेहि (३६)।

दारकः। अवेहि। ण गेह्नि[3]स्सं। रोदसि तुमं (३७)।

वसन्तसेना। अश्रूणि प्रमृज्य। जाद णं[4] रोदिस्सं। गच्छ कील। अलंकारैर्मृच्छकटि[5]कां पूरयित्वा। जाद कारेहि सो[6]वण्णसअडिअं (३८)।

इति दारकमादाय निष्क्रान्ता[7] रदनिका।

प्रविश्य प्रवहणाधिरूढः

चेटः। ल[8]दणिए लदणिए णिवेदेहि अज्जआए वशन्त[9]शेणाए। ओहा[10]लिअं पक्खदुआ[11]लिए श[12]ज्जं पवहणं चि[13]ट्ठदि (३९)।

---

ते जननी संवृत्ता। तद्गृहाणैतमलंकार(म्)। सुवर्णशकटिकाम्। घडावेहि कारय।

दार०–(३७) अपेहि। न ग्रहीष्यामि। रोदसि(दिषि) त्वम्।

वस०–(३८) तात न रोदिष्यामि। गच्छ क्रीड। तात कारय सुवर्णशकटिकाम्।

चेटः–चेटोयं वर्धमानकः पूर्वोक्तः। (३९) रदनिके रदनिके निवेदयार्यायै वसन्तसेनायै। अपवारितं पक्षद्वारके सज्जं प्रवहणं तिष्ठति।

---

१ रुदन्ती A B (bc). २ सुवण्ण B. ३ गेण्हीसं K. ४ ण D. ५ °टिकं A B (bc) C D. ६ सुवण्ण B (a). ७ नि क्रान्ता K. ८ रदणिए B (abcd) DEG K. ९ °सन्तसेणा° A B (abcd) D; °शेनाए C. १० ओहारिअं A B (bcd) CH; ओआरिअं B (a) D; ओहार्यं E. ११ °रए A B (bcd) D G; दुआए B (a). १२ सज्जं A B (abcd) D K. १३ चिट्ठदि A B (abcd) D J; चिष्ठदि C.

प्रविश्य

रदनिका। अज्जए[1] एसो वड्ढमाणओ विण्णवेदि पक्खदुआरए सज्जं पवहणं त्ति (४०)।

वसन्तसेना। हञ्जे[2] चिट्ठदु[3] मुहुत्तअं[4] जाव[5] अहं[6] अत्ताणअं[7] पसाधेमि (४१)। 85

रदनिका[8]। निष्क्रम्य। वड्ढमाणआ चिट्ठ मुहुत्तअं जाव अज्जआ अत्ताणअं पसाधेदि (४२)।

चेटः। ही ही भो। मए वि जाणत्थलके[9] विसुमलिदे[10]।

---

रद०–(४०) आर्ये एष वर्धमानको विज्ञापयति पक्षद्वारे सज्जं प्रवहणमिति।

वस०–(४१) हञ्जे तिष्ठ मुहूर्तं यावदहमात्मानं प्रसाधयामि। प्रसाधनमलंकारः।

रद०–(४२) वर्धमानक तिष्ठ मुहूर्तं यावदार्यात्मानं प्रसाधयति।

चेटः–(४३) ही ही भोः। मयापि यानास्तरण(णं) विस्मृतम्। तद्यावद्गृहीत्वागच्छामि। एते(तौ) नासिकारज्जुकटुका(कौ)

---

१ om: D F H. २ om· B. ३ चिट्ठ° A B (ab) D F. ४ मुहुत्तं A B (bcd) D; मुहूत्तं F. ५ दाव जाव B (a). ६ अज्जइआ B (b). इति श्रुत्वेति शेष K. ७ अत्ताणं K. ८ Radanikâ's whole speech om· A B (c) D F ९ ओहारिअ =उद्घाटय K B; °त्थलके B (a); °त्थणं के B (d). १० विसुमलिदे· A B (abcd) D E K.

ता जाव[1] गेण्हिअ[2] आअच्छामि[3] । एदे णइशालज्जुक[4]कडुआ[5] बइल्ला[6] । भोदु[7] भोदु । पवहणेण ज्जेव्व गदागदिं कलिश्शं[8] (४३) ।

इति निष्क्रान्त[9]श्चेटः ।

**वसन्तसेना ।** हञ्जे उवणेहि मे पसाहणं । अत्ताणअं[10] पसाधइस्सं[11] (४४) ।

इति प्रसाधयन्ती स्थिता ।

प्रविश्य प्रवहणाधिरूढः

**स्थावरकश्चेटः ।** आणत्तम्हि[12] लाअ[13]शाल[14]अशंठाणेण[15] थाव[16]लआ पवहणं गेह्णिअ पुप्फ[17]कलण्डअं[18] जिण्णुज्जाणं तुलिदं आअच्छेहि[19] त्ति । भोदु तहिं ज्जेव गच्छामि । वहध बइल्ला[20] वहध[21] ।

---

बलीवर्दाः(र्दौ) । भवतु भवतु । प्रवहणेनैव गतागतिं करिष्यामि ।

वस०–(४४) हञ्जे उपनय मे प्रसाधनम् । आत्मानं प्रसाधयिष्यामि ।

स्थाव०–(४५) स्थावरकनामा राजश्यालस्य चेटः । आज्ञप्तोस्मि राजश्यालसंस्थानेन स्थावरक प्रवहणं गृहीत्वा पुष्पकरण्डकं जीर्णोद्यानं त्वरितमागच्छेति । भवतु तत्रैव गच्छामि । वहत(तं) बलीवर्दा(र्दौ) वहतः(तम्) । कथं ग्रामशकटै रुद्धो मार्गः । किमिदानीमत्र करिष्या-

---

१ वजा B (d). २ °णं B B (ad) G K. ३ आअत्थामि B (b). ४ णस्सा अज्जुक° A B (c) F; णइशाक° B, णस्साक° B (abd); णासारज्जुक° D H; णण्णाक° G. ५ कट्टअ A B (c); कड्डआ D; कट्टआ G. ६ बईल्ला E. ७ भोदु J. ८ करिस्सं A B (abcd) D E F K. ९ निःक्रान्त. K. १० अत्ताणं K. ११ पसाह B D K. १२ अणत्त° D. १३ राअ° A B (bc) D E लाअ om B (a); राआ B (d). १४ स्रा तस° B (a); शाल om: अ D E . . . १५ संठा D. १६ ज °थाव B B (a), स्थावल A B (bcd) F. १७ पुष्प B (bd). १८ करंडअं A B (abcd) D. १९ आग° A B (bc) D E. २० बइलाल्ला B (d). २१ वहध वहध. B (d.)

परिक्रम्यावलोक्य च। कधं गामशाअलेहिं[1] लुद्धे मग्गे। किं दाणिं एत्थ कलेइश्शं[2]। साटोपम्। अले अले[3] ओशलध[4] ओशलध[5]। आकर्ण्य। किं भणाध। एशे[6] कश्श[7]केलके पवहणे[9] त्ति। एशे[10] लाअ[11]शाले[12]अशण्ठाण[13]केलके[14] पवहणेत्ति। ता शिग्घं[15] ओशले[16]ध। अवलोक्य। कधं एशे[17] अवले शाहिअं[18] विअ मं पेक्खिअ शहशा ज्जेव्व जूदपलाइदे विअ जूदिअले[19] ओहालिअ[20] अत्ताणअं अण्णदो अवक्कन्ते[21]। ता के[22] उण एशे[23]। अधवा किं मम एदिणा[24]। तुलिदं गमिश्शं[25]। अले अले[26] गामेलुआ। ओशलध[27] ओशलध[28]।

मि। अरे अरे अपसरत। किं भणत। एष कस्य कृते प्रवहण इति। एष राजश्यालसंस्थानस्य कृते प्रवहण इति। तच्छीघ्रमपसरत। कथमेषोपरः सभिकामिव मां प्रेक्ष्य सहसैव द्यूतपलायित इव द्यूतकरोपवार्यात्मानमन्यतोपक्रान्तः। तत्कः पुनरेषः। राज्ञा पालकेन बद्धस्तद्बन्धनादुन्मोचितः शर्विलकेनैकचरणलग्ननिगड आर्यकनामाभीरो महावीरो यः सिद्धादेशाद्राजा भविता सोयमिति ज्ञेयम्। अथवा किं ममैतेन। त्वरितं गमिष्यामि। अरे अरे गामेलुआ ग्राम्याः। त एव ग्रामीणा जना इत्यर्थः। अपसरत

१ शआडिएहिं B B'(a) २ °इस्स A B (bcd) D K. ३ ले J. ४ ओसलध A B (bcd) ५ ओसलधं A B (bd); om. B (c). ६ एसे A B (abc) D E K, एसो F G. ७ कस्स A B (abcd) D E K. ८ केरके A B (abcd) D E. ९ पवहणं ति E. १० एसे A B (abcd) D E K ११ राअ B (ad). १२ शाल om अ B D E K; साल B (ad). १३ संठाण A B (bcd) E; शंठालण D. १४ केरके B (a). १५ शिग्घ A B (c); शिघ B (a). १६ ओसल° A B (cd). १७ एसे A B (abcd) D E K. १८ साहिअं A B (acd) K; साहिअं B (b). १९ जूदअले D. २० ओहालि B (b). २१ अवक्कन्तो B (a); °क्कन्दे G. २२ को AB (abcd) C D E F G J. २३ एसो AB (bcd) D. २४ From दिणा to चिरइ om B (b) २५ गमिस्सं A B (acd) D E K . . . २६ om. B (a) E; ले J. २७ om A B (c) D F, ओसलध B (d) E K. २८ ओसलधB (d) E K.

किं भणा[1]ध मुहुत्तअं चिट्ठ[2] । चक्कपलिवट्टिं[3] देहि त्ति । अले अले[4] ला[5]अशा[6]लअशण्ठा[7]णके[8]लके हगे[9] शूले चक्कप[10]लिवट्टिं[11] देइश्शं[12] । अधवा ऐशे[13] एआई तवश्शी । ता ऐव्वं[14] कलेमि । एदं पवहणं[15] अज्जचालु[16]दत्तश्शॅ[17] लुक्ख[18]वाडिआए पक्खदुआलए[19] थावेमि । इति प्रवहणं संस्थाप्य । एशो[20]म्हि आअदे[21] (४९) । इति निष्क्रान्तः[22] ।

चेटी । अज्जए णेमिसद्दो विअ सुणीअदि । ता आअदो[23] पवहणो[24] (४६) ।

अपसरत । किं भणत मुहूर्तं तिष्ठ । चक्रपरिवृत्तिं देहीति । अरे अरे राजश्यालसंस्थानस्य केलके इति षष्ठी । हगे अहम् । (शूले) शूरः । चक्रपरिवृत्तिं दास्यामि । अथवैष एकाकी तपस्वी । तदेवं करोमि । एतं प्रवहणमार्यचारुदत्तस्य वृक्षवाटिकायाः पक्षद्वारके स्थापयामि । एषोस्म्यागतः ।

चेटी–(४६) आर्ये नेमिशब्द इव श्रूयते । तदागत(तः) प्रवहण(णः) ।

---

१ भणध D. २ चिट्ठ A B (acd) D F J, चिष्ठ C. ३ °पडिवट्टिअं A B (bc) D F G ; °पलिवत्ति B , °पडिवात्ति B (a); °पडिवाट्टिअं marg. वात्ति B (d) ४ लै J. ५ राअ A B (c) D K. ६ साल B (a), शाल om. अ D E, शाळ K. ७ संठाण A B (acd) D K. ८ केलिए K. ९ हग्गे J. १० पडि° A B (abc) DEk ; om : B (d) ११ वट्टिअं A B (bcd) D ; पंलिवत्ति B ; वात्तिअ B (a) ; वाडिअं E K. १२ दइस्सं A B (abcd) , दईस्सं E. १३ एसे B (a) K. १४ एवं D F K. १५ °वहणअं B (d) E G K. १६ चारु° A B (ac) D. १७ °दत्तस्स A B (abcd), D E. १८ रुक्ख° B (a) . १९ दुआलके D E , दुवालके K २० एस A B (bcd) E F, एश D K. २१ आअदो A B (bc) D; आगदो G K. २२ निक्रान्त. K. २३ आगदे B (a). २४ पवहणं B (a) H.

वसन्तसेना । हञ्जे गच्छ । तुवरदि मे हिअअं । ता आदेसेहि पक्खदुआरअं (४७) ।

चेटी । एदु एदु अज्जआ (४८) ।

वसन्तसेना । परिक्रम्य । हञ्जे वी[1]सम तुमं (४९) ।

चेटी । जं अज्जआ आणवेदि (५०) । इति निष्क्रान्ता ।

वसन्तसेना । दक्षिणाक्षिस्पन्दं सूचयित्वा प्रवहणमधिरुह्य च । किण्णेदं । फुरदि दाहिणं लो[2]अणं । अधवा [3]चारुदत्तस्स ज्जेव्व [4]दंसणं अणिमित्तं [5]पसज्जइस्सदि (५१) ।

प्रविश्य

स्थावरकश्चेटः । [6]ओशालिदा मए शअडा । ता जाव गच्छामि ।

---

वस०–(४७) हञ्जे गच्छ । त्वरयति (त्वरते) मे हृदयम् । तदादिश पक्षद्वारकम् ।

चेटी–(४८) एत्वेत्वार्या ।

वस०–(४९) हञ्जे विश्रम (विश्राम्य) त्वम् ।

चेटी–(५०) यदार्याज्ञापयति ।

वस०–(५१) किं नेदं वितर्क इत्युक्तम् । स्फुरति दक्षिणं लोचनम् । अथवा चारुदत्तस्यैव दर्शनमनिमित्तं प्रसञ्जयिष्यति (?) ।

स्थाव० । (५२) अपसारिता मया शकटाः । तद्यावद्ग-

---

१ विसम B (d). २ णअणं B, B (a) ; लोहणं G. ३ चालु° A B (bcd) D E H. ४ दंसणे D. ५ पमजिस्सदि B G K, पमज्जस्सदि B (d) ; पमज्जइस्सदि C J ; पसज्जिसदि D, पमज्जसदि E ; पसज्जिस्सदि A B (c) F K. ६ ओसालिदा A B (c).

इति नाट्येनाधिरुह्य चालयित्वा स्वगतम् । भालिके पवहणे[१] । अधवा चक्कपलि[२]वट्टिआए[३] पलिश्श[४]न्तश्श[५] भालिके[६] पवहणे पडिभाशदि[७] । भोदु गमिश्शं[८] । जाध गोणा जाध (५२) ।

नेपथ्ये ।

अरे रे दोवारिआ अप्पमत्ता सएसु सएसु गुम्मट्ठा[९]णेसु होध । एसो अज्ज गोवालदा[१०]रओ गुत्तिअं[११] भञ्जिअ गुत्ति[१२]वालिअं[१३] वावादिअ बन्धणं भेदिअ परिब्भट्टो[१४] अवक्कमादि[१५] । ता गेह्लध[१६] गेह्लध[१७] (५३) ।

प्रविश्यापटी[१८]क्षेपेण संभ्रान्त एकचरणलग्ननिगडोवगुण्ठित आर्यकः परिक्रामति ।

---

च्छामि । भालिके भारवत् । [पवहणे] प्रवहणम् । अथवा चक्रपरिवृत्त्या परिश्रान्तस्य सभारं प्रवहणं प्रतिभासते । भवतु गमिष्यामि । यात(तं) वृषभा(भौ) यात(तम्) । गोणा गावः । गोणा गोता गावी गोपुत्तलिकेति महाभाष्ये प्रथमपादप्रथमाह्निक उक्तम् ।

(५३) अरे रे दौवारिकाः अप्रमत्ताः शयध्वं शयध्वम् (शेध्वम्) (?)। गुल्मस्थानेषु भवत । एषोद्य गोपालदारको गुप्तिं रक्षां भङ्क्त्वा (ङ्क्त्वा)। गुप्तिपालकं व्यापाद्य बन्धनं भित्त्वा परिभ्रष्टोपक्रामति । तद्गृह्णीत गृह्णीत ।

---

१ पवहणं A B (c) F. २ °पाडि° A B (abcd) D E K. ३ वत्तिआए B B (a); वडिआए K. ४ पडिस्सं° A B (cd) D E F; पाडिश्शं° B (ab); पाडिसं° K. ५ °तस्स D E F K. ६ कथं भा० E. ७ °भासदि A B (abcd) D E K; भाशादि B. ८ °मिस्सं A B (abcd) D E K. ९ गुम्माठा° B (a), गुप्पठा° B (d), गुप्पट्ठा° E G; गुम्प°? K. १० °दारकओ A B (bcd). ११ डत्तिअं A B (c) D F; गुत्तिं E. १२ डात्ति° A B (c) D F; गुत्ति J. १३ बालअं B B (a) D, बालिअ E F; बाळअं K. १४ °ब्भाट्टिअ K. १५ चंक्कमदि K. १६ गेह्ल A B (c) D. १७ गेह्ल A B (c) D. १८ श्य पटा° A B (c) D; °श्य पटी B (d).

चेटः । स्वगतम् । महन्ते ण[1]अलीए शम्भमे उप्पण्णे । ता तुलिदं तु[2]लिदं गमिश्[3]शं (५४) । इति नि[4]ष्क्रान्तः ।

आर्यकः

हित्वाहं नरपतिबन्धनापदेश-
व्यापत्तिव्यसनम[5]हार्णवं नराणाम् ।
पादाग्रस्थितनिगडैकपाशा[6]कर्षी
प्रभ्रष्टो गज इव बन्धनाद्भ्रमामि ॥ १ ॥

भो अहं खलु सिद्धादेशजनितपरि[7]त्रासेन राज्ञा पालकेन घोषादानीय विशसने गूढागारे बन्[8]धनेन बद्धः। तस्माच्च प्रियसुहृच्छर्विलकप्रसादेन बन्धनात्परि[9]भ्रष्टोस्मि । अश्रूणि विसृ[10]ज्य ।

---

चेटः–(५४) महान्नगर्यां संभ्रमो भयम् । उत्पन्नः । तत्त्वरितं त्वरितं गमिष्यामि ।

आर्य०–[ हित्वाहमिति । ] नराणां राजकर्तृकबन्धनमिषरूपा व्यापत्तिर्विशिष्टापत्तिस्ताडनवधादिस्तज्जन्यं व्यसनं दुःखं तदात्मकमहार्णवमहं हित्वा त्यक्त्वा । तीर्त्वेत्यर्थः । प्रहर्षिणीछन्दः ॥ १ ॥

पालकेति राज्ञो नाम । घोष आभीरग्रामः । विशसने हनने । 'चर्मणि द्वीपिनं हन्ति' इतिवत्सप्तमी ।

---

१ एअलीऐ (=एतादृश) D; णअलए G. २ om: B (d); तुलिसं? E; तुलिददरं G. ३ गमिस्सं A B (bcd) D E K. ४ नि क्रान्त· K. ५ महार्हणं G. ६ पाशकर्ष G; पार्श्व K; ७ त्रासेन and not परि° K. ८ बन्धने B (a). ९ भ्रष्टो° and not परि° B E K. १० om. B D F G, From अश्रूणि to. °तोस्मि om. B (b).

भाग्यानि मे यदि तदा मम कोपराधो
यद्[1]वन्यनागं इव संयमितोस्मि तेन ।
दैवी च सिद्धिरपि लङ्घयितुं न शक्या
[2]गम्यो नृपो बलवता सह को विरोधः ॥ २ ॥

तत्कुत्र गच्छामि मन्दभाग्यः । विलो[3]क्य । इदं कस्यापि साधोरनावृतपक्षद्वारं गेहम् ।

[4]इदं गृहं भिन्न[5]मनायतार्गलं
विशीर्णसंधिश्च महाकपाटः ।
ध्रुवं [6]कुटुम्बी व्यसनाभिभूतां
दशां प्रपन्नो मम तुल्यभाग्यः ॥ ३ ॥

तदत्र ताव[7]त्प्रविश्य तिष्ठामि ।

नेपथ्ये । जाध गोणा जाध (९९) ।

---

[भाग्यानीति । ] वसन्ततिलकं छन्दः । तेन राज्ञा ॥ २ ॥

गेहं चारुदत्तस्येदं गेहम् । अस्यैव वर्णनमिदं गृहमिति ।

[इदं गृहमिति । ] ममार्यकस्य तुल्यभाग्यः । यथाहं दरिद्रो विपन्नश्च तथायमित्यर्थः । [उपजातिच्छन्दः] ॥ ३ ॥

(९९) यात (तं) गोणा यात (तं) । अयं वर्धमानक एवागतो यः पूर्वं यानास्तरणानयनाय गतः ।

---

१ येनैष नाग° K. २ ऽगम्यो sec. ms B (d) also K. ३ विलोक्य .... लु (तु) ल्यभाग्य om B (d) ४ इदं तु संभिन्न० K. ५ अनार्यंता° ? E. ६ कुटुम्ब– K. ७ प्रविशामि B B (a).

**आर्यकः** । आकर्ण्य । अये प्रवहणमित एवाभिवर्तते ।

भवेद्गोष्ठीयानं न च विषमशैलैरधिगतं
वधूसंयानं वा तदभिगमनोपस्थितमिदम् ।
बहिर्नेतव्यं वा प्रवरजनयोग्यं विधिवशा-
द्विविक्तत्वाच्छून्यं मम खलु भवेद्दैवविहितम् ॥ ४ ॥

ततः प्रवहणेन सह प्रविश्य

**वर्धमानकश्चेटः** । हीमाणहे । आणीदे मए जाणत्थलके । लदणिए, णिवेदेहि अज्जआए वशन्तशेणाए अवत्थिदे शज्जे पवहणे । अहिलुहिअ पुप्फकलण्डअं जिण्णुज्जाणं गच्छदु अज्जआ (५६) ।

**आर्यकः** । आकर्ण्य । गणिकाप्रवहणमिदं बहिर्यानं च । भवत्वधिरोहामि । इति स्वैरमुपसर्पति ।

---

आर्य०—आकर्ण्येति । प्रवहणनेमिनिःस्वनमिति प्रक्रान्तम् । वितर्कते । अये इत्यादि । [भवेदिति ।] गोष्ठी समानशीलजनसमूहः । 'समज्या परिषद्गोष्ठी' इत्यमरः । [शिखरिणीछन्दसा श्लोकः] ॥४॥

वर्धमानकश्चेटः–(५६) हीमाणहे इत्याश्चर्ये । आनीतं मया यानास्तरणम् । रदनिके, निवेदयार्यायै वसन्तसेनायै अवस्थितं सज्जं प्रवहणम् । अधिरुह्य पुष्पकरण्डकं जीर्णोद्यानं गच्छत्वार्या ।

---

१ गोष्ठीपानं (यानं)? G. २ नव(नय)? E. ३ °शैलै° G. ४ भवेदेव° A B (c) D F, भवेद्दैव° B (d). ५ हि हितम् D. ६ Om B B (abd) E. ७ हीमानहे A B (c), हीमाणहे B C D J; हीमाहे B (a); हीहीमाणहे G. ८ आणिदे B (abd). ९ जाणथलके A B (c) C J; जाणे थलके B (b). १० रदणिए A B (abcd) D F; Twice B (a), लदणिए लदणिए B. ११ वसंतसेणाए B K. १२ अवट्ठिदे D; °त्तीस्थि E m. १३ सज्जे D E K. १४ °रुहिअ D E G K. १५ पुष्प A B (bc). E. १७ °णम् om इदं B B (a). १८ अवरो° B (ad).

**चेटः** । श्रुत्वा । कधं णेउलशद्दे[१] । ता आअदा क्खु[२] अज्जआ । अज्जए इमे णेश्शा[३]कडुआँ[४] बइल्ला[५] । ता पिट्टदो[६] ज्जेव[७] आलुहदु[८] अज्जआ (५७) ।

**आर्यकः** । तथा करोति ।

**चेटः**[९] । पादु[१०]प्फालचालिदाणं णेउलाणं वीशन्तो[११] शद्दो[१२] । भलक्कन्ते[१३] अ पवहणे । तथा तक्केमि शम्पदं[१४] अज्जआए[१५] आलूढाए होदव्वं । ता गच्छामि । जाध गोणा जाध(५८) । इति परिक्रामति ।

प्रविश्य

**वीरकः** । अरे रे अरे जअ[१६]जअमाण[१७]चन्दणअ[१८]मङ्गल[१९]-

---

चेटः–(५७) कथं नूपुरशब्दः । अयमार्यकचरणलग्नैकनिगड-शब्दः । तदागता खल्वार्या । आर्ये इमौ नासिकारज्जुकटुकौ बलीवर्दौ । तत्पृष्ठत एवारोहत्वार्या ।

चेटः–(५८) पादोत्पा(त्स्फाल)चालितानां नूपुराणां विश्रान्तः। शब्दः । भाराक्रान्तं च प्रवहणम् । तथा तर्कयामि सांप्रतमार्ययारूढया भवितव्यम् । तद्गच्छामि । यात(तं) गोणा यात(तम् ) ।

---

१ सद्दे A B (abcd) D E K. २ खु B ; om. B (d). ३ णस्स A B (abc) F ; नस्सा B (d) ; नश्श C J ; णस्सलज्जु D H ; णस्सा E. ४ कटुआ A B (cd) ; E. ५ om. C J. ६ पिट्ठदो A B (abc) J ; पिष्ठतो B (d), पिष्ठदो E. ७ जेव्वं B (a), जेव्वे B (b). ८ ओ? लुहदु B (d). ९ om : B (a). १० जधा पादु° B B (ad) E K ; यथा पादु° G, पादुफा° A B(c) ; पाग्रुदुप्फा° B(d) ; पालुप्फाल° E. ११ वीसंतो A B (abcd) D E K ; वशिन्तो J. १२ सद्दो A B (abcd) D E ; शद्दो J. १३ भडक्कन्ते A B (abc) corr. भालक्कन्ते ; भालुक्कंते H. १४ संपदं A B (abcd) D E K. १५ आत्त° (अत्त?) अज्ज°? B (a). १६ जअजअ K. १७ जअम्माण A B (c) D, जअमाणअ B E K. १८ चन्दअ B (d). १९ From मङ्गल to भेत्तूण om. A B (c) D F ; मग° E.

[1]फुल्लभ[2]ड्डप[3]मुहा,

किं अच्छध वी[4]सद्धा जो सो गोवालदारओ [5]रुद्धो ।

भेत्तूण समं व[6]च्चइ णरवइहिअअं च[7] बन्धणं चा[8]वि॥ ९ ॥ 180

अ[9]ले पुरत्थिमे पदोली[10]दुआरे चिट्ठ [11]तुमं। तुमं पि [12]पच्छि[13]मे। तुमं पि[14] दक्खिणे। तुमं पि [15]उत्तरे। जो वि[16] एसो पाआरखण्डो एदं [17]अहिरुहिअ चन्दणेण समं [18]गेदुअ अवलोएमि। एहि चन्दणअ एहि। इदो दाव (९९)।

---

प्र( विश्य ) वीरकः। (९९) अरे रे अरे जयजयमानचन्दनक-मङ्गलपुष्पभद्रप्रमुखाः।

[किं अच्छधेति।] आर्याछन्दः। किं गच्छत(थ) विश्रब्धा[ः] यः स गोपालदारको रुद्धः। भित्त्वा समं व्रजति नरपतिहृदयं च बन्धनं चापि ॥ ९ ॥

अरे पुरत्थि(आ) (?) पुरस्तात्। पूर्वस्मिन्निति वामे (?) प्रतोलीद्वारे तिष्ठ त्वम्। त्वमपि पश्चिमे। त्वमपि दक्षिणे। त्वमप्युत्तरे। योऽप्येष प्राकारखण्ड एतमभि(धि)रुह्य चन्दनेन समं त्वावलोकयामि। एहि चन्दनक एहि। इतस्तावत्।

---

पुल्ल° B (ab) E K. marg. फुल्ल=पुष्प B (d). २ भट्ट E G; क्कड K. [३ प]मु B (a); पमुहा G. ४ वीसीद्धा B (a). ५ निरुद्धो G. ६ वद्धइ A B F. ७ अ B (a). ८ च not चावि B (d). ९ अरे रे B; अरे अरे B [१०] °दुअरे B (bc ? d); दुआरए B. ११ om: A B (c). १२ om: D F [१३] पच्छिमे B (b); पाडिमे A B (c). १४ om: A B (c) F; पिवि B (d). [१५ उत्तरे] तुमं दक्षिणे D; उत्ते for उत्तरे B (b), उत्तले B (d) E; उत्तळे K. १७ अभि° A B (bcd) E K. १८ om: B B (ad) E G K,

प्रविश्य संभ्रान्तः

चन्दनकः । अरे रे वीरं[1]अविसल्ल[2]भीमङ्गअदण्ड कालअ-दण्डसूर[3]प्पमुहा

आअच्छध वीसत्था[4] तुरिअं[5] जत्तेह[6] लहुं[7] करेज्जाह[8] ।
लच्छी जेण ण रण्णो[9] पहवेइ[10] गोत्तन्तरं गन्तुं ॥ ६ ॥

अवि अ ।

उज्जाणेसु सहासु अ मग्गे णअरीअ[11] आवणे[12] घोसे ।
वं[13] तं जोहेह[14] तुरिआ संङ्का[15] वा जाअए[16] जत्थ ॥ ७ ॥

---

प्र(विश्य) चन्दनकः—(६०) अरे रे वीरकविशल्यभीमाङ्गददण्डकालदण्डशूरप्रमुखाः ।

[आअच्छधेति ।] आर्याछन्दः । आमाथर्यै (?) । जत्तेह यतेध्वम् ? । गच्छत(थ) विश्रब्धास्त्वरितं यात्रां गमनम् । लघुं शीघ्रम् । करेज्जाह कुरुत । लक्ष्मीर्येन न राज्ञः प्रभवति । गोत्रान्तरमन्यां भूमिं कुलान्तरं वा । गन्तुम् ॥ ६ ॥

अपि च । [उज्जाणेस्विति ।] उद्यानेषु सभासु च मार्गे नगर्यामापणे घोषे । तं तं जोहहान्वेषयत । त्वरिताः शङ्का वा जायते यत्र ॥ ७ ॥ इत्यप्यार्याछन्दः ।

---

१ वीर अविरअविस° A B (c) D F. २ विसलु A B (c); विसण pr. corr. ल्ल B (d); विशल्ल D; विसण E; विवलु F; वशलु H. ३ °सुर H. ४ वीसद्धा A B (bc) D. ५ तुरिहपनेह E ६ जत्तहं (=यात्रा) A B (c), जजेह B (b); जत्तं D; ज्जत्तं H. ७ लंहुं B (d); लहु J. ८ करेजाह A B (c) D. ९ रण्णे B (ab). १० पवहइ B (d) D; °वहइ E. ११ णअरीए A B (c). १२ आपणे A B (c) B E. १३ तत्तं B (ad) K, तंत्तं E. १४ जो अह B (a). १५ सक्का धाए जत्थ B (a); सक्का वा &c. K; शंका B (d); शंका E. १६ जअए B (b).

रे रे वीरअ किं[1] किं दरिसेसि भणाहि दाव वीसद्धं[2] ।
भेत्तूण अ बन्धणअं[3] को सो गोवालदारअं हरइ ॥ ८ ॥

कस्सट्टमो[4] दिणअरो कस्स चउत्थो[5] अ वट्टए[6] चन्दो । 195
छट्ठो अ भग्गवग्गहो[7] भूमिसुओ[8] पञ्चमो कस्स ॥ ९ ॥

भण कस्स[9] जम्मछट्ठो जीवो णवमो तहेअ[10] सूरसुओ ।
जीअन्ते चन्दणए को सो गोवालदारअं[11] हरइ[12] ॥ १० ॥ (६०)

---

[रे रे वीरअ इति ।] इत्यप्यार्याछन्दः । रे रे वीरक किं किं दर्शयसि भणसि तावद्विश्रब्धम् । भित्त्वा च बन्धनकं कः स गोपालदारकं हरति ॥ ८ ॥

[कस्सट्टमो इति।] युग्मम्। आर्याछन्दः । कस्याष्टमो दिनकरः कस्य चतुर्थश्च वर्तते चन्द्रः । षष्ठश्च भार्गवग्रहो भूमिसुतः पञ्चमः कस्य ॥ ९ ॥ भण कस्य जन्मषष्ठो जीवो नवमस्तथैव सूरसुतः। जीवति चन्दनके कः स गोपालदारकं हरति ॥ १० ॥ जन्मतोऽष्टमसूर्यफलं पीडा । चतुर्थचन्द्रफलं कुक्षिरोगः । षष्ठशुक्रफलं बुद्धिहानिः । पञ्चममङ्गलफलं क्षतिः । जन्मषष्ठगुरुफलं शोकः । नवमशनैश्चरफलं नैःस्वम् । द्रव्यवैधुर्यमित्यर्थः । एवमादि । स्फुटं चेदं ज्योतिःशास्त्रे ।

---

१ किं once A B (c) D F. २ वीसद्दं A B (c) D; वीसत्थं B K. ३ बन्धण om. अं B (a). ४ °अट्टमो A B (c) D F. ५ चउट्ठो B (d) ६ वट्टदे A B (c) D F. ७ °वग्गहो E. ८ भूमिसूओ A B (c); भूमी° D H. ९ जम्मस्स अ अट्ठो (=जन्मनश्च षष्ठो) B (d); जस्स अ मंट्ठो E; कस्स अ छट्ठो G K. १० तेहअ ? A B (c); तह B (a); तहअ D H. ११ गोबालअं A B (cd) D F K, Sec. ms. add दार.B (d); गोपालदाअं H. १२ हरई B (a) G. After this add युग्मम् A B (abcd) D F G K.

वीरकः । भंड[1] चन्दणआ[2]

अवहरइ कोवि तुरिअं चन्दणअ सवामि तुज्झ[3] हिअएण।
जइ अद्धुइददिणअरे[4][5] गोवालअदारओ[6] खुडिदो[7] ॥११॥(६१)

चेटः। जाध गोणा जाध (६२) ।

चन्दनकः । दृष्ट्वा । अरे रे पेक्ख पेक्ख ।

ओहाडिओ[8] पवहणो वच्चइ[9] मज्झेण[10] राअमग्गस्स[11] ।
एदं[12] दाव[13] विआरह कस्स कहिं पवसिओ[14] पवहणोत्ति[15]॥१२॥(६३)

---

वीरकः–(६१) हे भट चन्दनक ।

[अवहरईति।] अपहरति कोपि त्वरितं चन्दनक शपामि(पे) तव हृदयेन । यथार्धोदितदिनकरे गोपालकं(क)दारकः खुटितः । [खुटितः] पलायितः । आर्याछन्दः ॥ ११ ॥

चेटः–(६२) यात(तं) गोणा यात(म्) ।

चन्द०–(६३) अरे रे पश्य पश्य ।

[ ओहाडिओ इति । ] इत्यप्यार्याच्छन्दः । अपवारितः(तम्) प्रवहणं व्रजति मध्येन राजमार्गस्य । एतं तावद्विचारय कस्य कुत्र प्रोषितं प्रवहणम् ॥ १२ ॥

---

१ भण B (a). २ चंदणअ B (a). ३ तुज्ज A B (bc) C J. ४ अद्धूइद A B (c); अद्धुइअ B E K; अत्थवइ marg. द्धुइअ B (d). ५ दिणअरे णअरे (=दिनकरे नगरे) B (d); दिनअरे C J. ६ गोबालदा° B (d); केणवि गोबाल &c. E. ७ सुडिदो K. ८ ओहाओ B (b), ओहारिओ J. ९ वज्जइ B D F; वज्जइ मज्जइ मज्जेण B (b), विज्जइ H. १० मज्जेण K. ११ °मग्गेणB (d). १२ एवं B (d). १३ ताव B B (d) K. १४ पवसिदो B (a). १५ पवहणो om. त्ति B D E F G; सवहणी om: त्ति K.

**वीरकः।** अवलोक्य। अरे[1] पवहणवाहआ[2], मो[3] दाव एदं[4] पवहणं वाहेहि। कस्सकेरकं[5] एदं पवहणं। को वा इध आरूढो[6]। कहिं वा वज्जइ[7]? (६४)।

**चेटः।** एशे क्खु[8] पवहणे अज्जचालुदत्ताहकेलके[9]। इध अज्जआ वशन्तशेणा[10] आलूढा[11]। पत्थाणं[12] पुप्फ[13]कलण्डअं[14] जिण्णुज्जाणं कीलिदुं[15] चालुदत्तश्श[16] णीअदि[17] (६५)।

**वीरकः।** चन्दनकमुपसृत्य। एसो पवहणवाहओ भणादि अज्ज[18]चालुदत्तस्स[19] पवहणं। वसन्तसेणा आरूढा। पुप्फकरण्डअं[20] जिण्णुज्जाणं णीअदि त्ति (६६)।

---

वीर०–(६४) अरे प्रवहणवाहक, मा तावदेतं प्रवहणं वाहय। कस्य कृतमेतत्प्रवहणम्। को वेहारूढः। कुत्र वा व्रजति।

चेटः–(६५) एतत्खलु प्रवहणमार्यचारुदत्तस्य कृतम्। इहार्या वसन्तसेनारूढा। प्रस्थानं पुष्पकरण्डकं जीर्णोद्यानं क्रीडितुं चारुदत्तस्य निर्याति। प्रकृष्टं स्थानं प्रस्थानमित्यर्थः।

वीर०–(६६) एष प्रवहणवाहको भणति आर्यचारुदत्तस्य प्रवहणम्। वसन्तसेनारूढा। पुष्पकरण्डकं जीर्णोद्यानं नीयत इति।

---

१ अरेरे B B (ad) G. २ पहण ? B (d) ३ मीदाव (=मृदुना) K. ४ om. B B (a). ५ कस्स .. ..त्ताह add marg. B (d). ६ रूढा G. ७ वच्चदि B D F K; वज्जदि B (a), वुच्चादि B (d) E, वच्चइ C; वच्चदि सच्छन्दं K. ८ खु E. ९ चारु° D E K. १० वसंतसेणा E K. ११ °रूढा E F G. १२ पच्छाणं A B (bcd) E K; om. J. १३ पुप्प B (a). १४ करण्डअं D, करण्डअं E, कलण्ड G. १५ कीलितुं B (d); कीलीदुं G. १६ चारु° A B (abcd); चारु...दस्स B (d); °दत्तस्स F. १७ णिज्जदि A B (bcd) E G K; पिज्जदि D F H. १८ For अज्ज ...दित्ति–सर्वं पूर्वोक्तमुदाहरति B (a). १९ चारुदत्तस्स B B (a), दस्स B (d). २० °करण्डअ E, कलण्डं G.

चन्दनकः । ता गच्छदु (६७) ।

वीरकः । अणवलोइदो ज्जेव्व (६८) ।

चन्दनकः । अध इं (६९) ।

वीरकः । कस्स पच्चएण (७०) ।

चन्दनकः । अज्जचारुदत्तस्स (७१) ।

वीरकः । को[१] सो अज्जचारुदत्तो । का वा वसन्तसेणा । जेण अणवलोइदं वे[२]जइ? (७२). ।

चन्दनकः । अरे अज्जचारुदत्तं ण जा[३]णासि । ण वा [४]वसन्तसेणिअं । जइ अज्जचारुदत्तं वसन्तसेणिअं वा[५] ण जाणासि ता गअणे जोण्हासं[६]हिदं चन्दं [७]पि तुमं ण जाणासि ।

---

चन्द०—(६७) तद्गच्छतु ।

वीर०—(६८) अनवलोकित ए(मे)व ।

चन्द०—(६९) अथ किम् ।

वीर०—(७०) कस्य प्रत्ययेन ।

चन्द०—(७१) आर्यचारुदत्तस्य ।

वीर०—(७२) क आर्यचारुदत्तः । का वा वसन्तसेना । येनानवलोकितं व्रजति ।

चन्द०—(७३) अरे आर्यचारुदत्तं न जानासि । न वा वसन्तसेनाम् । यद्यार्यचारुदत्तं वसन्तसेनां वा न जानासि तदा गगने ज्योत्स्नाहितं सचन्द्रमपि त्वं न जानासि ।

---

१ om. BCDEJK. २ वच्चादि BDEGK ; वज्जदि B (a), वच्चइ C. ३ Here and throughout the page आणा° BCDEK. ४ वसंतसेणिआ B (a) ; °सेणं B (bd) E K. ५ om. B (abd) E K. ६ °सहिअं B (a). ७ om. B B (a).

को तं गुणारविन्दं सीलमिअङ्कं जणो ण जाणादि।
आवे[1]ण्णदुःखमोक्खं चउ[2]साअरसारअं रअणं ॥ १३ ॥
दो ज्जेवे[3] पूअणीआ[4] इह णअरीए तिलअभूदा अ।
अज्जा वसन्तसेणा धम्मणिही चारुदत्तो अ॥१४॥(७३)

वीरकः। अरे[5] चन्दणआ[6]।

जाणामि चारुदत्तं वसन्तसेणं च[7] सुट्ठु[8] जाणामि।
पत्ते अ[9] रा[10]अकज्जे पिदरं[11] पि[12] अहं ण [13]जाणामि॥ १५ ॥(७४)

आर्यकः। स्वगतम्। अयं मे पूर्ववैरी। अयं मे पूर्वबन्धुः। यतः।

---

[को तमिति।] आर्याछन्दः। कस्तं गुणारविन्दं शीलमृगाङ्कं जनो न जानाति। आपन्नदुःखमोक्षं चतुःसागरसारं रत्नम् ॥१३॥

[दो ज्जेवेति।] द्वावेव पूजनीयाविह नगर्यां तिलकभूतौ च। आर्या वसन्तसेना धर्मनिधिश्चारुदत्तश्च। छन्द आर्या ॥ १४ ॥

वीर०–(७४) अरे चन्दनक। [जाणामीति।] जानामि चारुदत्तं वसन्तसेनां च सुष्ठु जानामि। प्राप्ते च राजकार्ये पितरमप्यहं न जानामि ॥ १५ ॥

आर्य०–अयं वीरको वैरी। अयं चन्दनो(नको) बन्धुरित्यर्थः।

---

१ आवण AB (c), आवंण H. २ चउ सा° AB (c); चौसाअरसाअरअण° B (a); चउसाआरसाआरं B (d); चउरसाअर° DH. ३ चेव्व B (b); चेव G; वेव्व E, व्वेव K. ४ पुअणीआ K. ५ अरे रे B (d). ६ ०नआ A B (c) c; ०नक B (abd) F K, णक G. ७ अ सु० B (a). ८ ज्जाणामि E. ९ वि B (d). १० लाअ० A B (bed) D E. ११ पिअरं A B (bcd) D E G. १२ वि B (ab). १३ आणा० B B (a).

एककार्यनियोगेपि नानयोस्तुल्यशीलता ।
विवाहे च चितायां च यथा हुतभुजोर्द्वयोः ॥ १६ ॥

चन्दनकः । तुमं तन्तिल्लो सेणावई रण्णो पच्चइदो । एदे धारिदा मए बइल्ला । अवलोएहि (७५) ।

वीरकः । तुमं पि रण्णो पच्चइदो बलवई । ता तुमं ज्जेव्व अवलोएहि (७६) ।

चन्दनकः । मए अवलोइदं तुए अवलोइदं भोदि । (७७) ।

वीरकः । जं तुए अवलोइदं तं रण्णा पालएण अवलोइदं (७८) ।

चन्दनकः । अरे उण्णामेहि धुरं (७९) ।

---

[एकेति । ] श्लोकः । अनयोश्चन्दनकवीरकयोः ॥ १६ ॥

चन्द०–(७५) त्वं तन्तिल(ल्ल)श्चिन्तापरः । सेनापती राज्ञः प्रत्ययितः । एतौ धारितौ मया बलीवर्दौ । अवलोकय ।

वीर०–(७६) त्वमपि राज्ञः प्रत्ययितो बलपतिः। तत्त्वमेवावलोकय ।

चन्द०–(७७) मयावलोकितं त्वयावलोकितं भवति ।

वीर०–(७८) यत्त्वयावलोकितं तद्राज्ञा पालकेनावलोकितम् ।

चन्द०–(७९) अरे उन्नामय धुरम् ।

---

१ एका° J. २ °ताम्? K. ३ तुमं पि B; तुमअंपि B (a), तुमं वि D. ४ तन्तिलो A B (e) D H; तन्तिलो B (bd) C E, तन्तिल्ले G, तंन्तिलो J K. ५ वइ H. ६ बच्चइदो B (d), पच्चइदो वइ? K. ७ मे? B (a). ८ °वइ D H; वदी B (b). अवलोहिदं भोहि E. ९ तु एव? B (d) १० अवलोइतं B (d). ११ अरे पवहणवाहआ B; पवण° B (d). १२ उणामेहि A B (c); ओणामेहि B.

**चेटः** । तथा करोति ।

**आर्यकः** । स्वगतम् । अपि रक्षिणो[१] मामवलोकयन्ति । अशस्त्रश्चास्मि मन्दभाग्यः । अथवा

भीमस्यानुकरिष्यामि बाहुः शस्त्रं भविष्यति ।
वरं व्यायच्छतो[२] मृत्युर्न गृहीतस्य बन्धने ॥ १७ ॥

अथवा साहसस्य[३] तावदनवसरः ।

**चन्दनकः** । नाट्येन प्रवहणमारुह्यावलोकयति[४] ।

**आर्यकः** । शरणागतोऽस्मि ।

**चन्दनकः** । संस्कृतमाश्रित्य । अभयं शरणागतस्य ।

**आर्यकः** ।

त्यजति किल तं जयश्रीर्जहति च मित्राणि बन्धुवर्गश्च ।
भवति च सदोपहास्यो यः खलु शरणागतं त्यजति ॥ १८ ॥

**चन्दनकः** । कधं अज्जओ[५] गोवालदारओ सेणविंत्तासिदो[६] विअ[७] पत्तरहो साउणिअस्स हत्थे णिवडिदो । विचिन्त्य । एसो

---

आर्य०—[भीमस्येति ।] अनुष्टुप् । इयं कर्मणि षष्ठी । भीममनुकरिष्यामीत्यर्थः । व्यायच्छतः करचरणादिप्रहारमपि ददत इत्यर्थः ॥ १७ ॥

[त्यजति किलेति ।] आर्याछन्दः ॥ १८ ॥

चन्द०—(८०) कथमार्यको गोपालदारकः श्येनवित्रासित इव पत्ररथः पक्षी । शाकुनिकस्य व्याधस्य । हस्ते निपतितः । एषोऽनपराधः

---

१ रक्षणो ? A B (c). २ व्यापत्स्यतो D H. ३ साहस्य ? B (ad). ४ °वलोक्य च B (a). ५ अज्जो B (a). ६ °वित्रासि° K. ७ पत्तरहो विअ B B (a).

[1]अणवराधो सरणाअदो[2] । अज्जचारुदत्तस्स पवहणं आरूढो। पाणप्पदस्स मे अज्जसव्विलअस्स मित्तं। अण्णदो राअणिओओ। ता किं दाणिं एत्थ जुत्तं[3] अणुचिट्ठिदुं[4]। अधवा[5] जं भोदु[6] तं भोदु[7] । पढमं[8] ज्जेव्व अभअं दिण्णं (८०) ।

भीदाभअप्पदाणं देन्तस्स[10] परोवआररसिअस्स[11] ।
जइ होइ होउ णासो तह वि अ[12] लोए गुणो ज्जेव्व ॥ १९ ॥ (८१)

सभयमवतीर्य । दिट्ठो अज्जो । इत्यर्धोक्ते[13] । णं[14] अज्जआ वसन्तसेणा । तदो एसा भणादि जुत्तं णेदं सरिसं णेदं[15] जं अहं अज्ज चारुदत्तं अहिसारिदुं गच्छन्ती राअमग्गे परिभूदा (८२) ।

---

शरणागतः । आर्यचारुदत्तस्य प्रवहणमारूढः । प्राणप्रदस्य मे आर्यशर्विलकस्य मित्रम् । अन्यतो राजनियोगः । तत्किमिदानीमत्र युक्तमनुष्ठि(ष्ठा)तुम् । अथवा यद्भवतु तद्भवतु । प्रथममेवाभयं दत्तम्। [भीदेति] आर्याच्छद(न्दः) । (८१)भीताभयप्रदानं ददतः परोपकाररसिकस्य । यदि भवति भवतु नाशस्तथापि खलु लोके गुण एव ॥१९॥

(८२) दृष्ट अर्यः । आर्या वसन्तसेना । तत एषा भणति युक्तं नदं(मिदं) सदृशं नेदं(मिदं) यदहमार्यचारुदत्तमभिसारयितुमभिसर्तुमिति वा गच्छन्ती राजमार्गे परिभूता ।

---

१ अणे अणव° B (b) ; अणवराद्धा B (a) ; अवराधो K. २ °अदे K. ३ जुत्तमणु D. ४ अणुट्ठिदुं B (d) E G K. ५ अथ वा B (b). ६ भोदि B B (a) भोइ K. ७ भोदि B B (a). ८ पठम A B (c) D. ९ °अभअ B (a). १० दत्तस्स A B (c) C D J ; देत्तस्स B (bd). ११ अस्सअ B (a) १२ हु A B (c) D F ; ह B (d) ; °हि हु E. १३ °क्तेन । अज्जु° and अज्ज° A B (bcd) D E F K , marg. १४ न ऋजुका B (d). १५ णेदं° णेदं° K.

वीरकः । चन्दणआ[1] एत्थ मह संसओ समुप्पण्णो[2] (८३)।

चन्दनकः । कधं दे संसओ (८४) ।

वीरकः ।

सम्भमघग्घरकण्ठो तुमं पि[3] जादोसि जं तुए भणिदं ।
दिट्ठो[4] मए क्खु[5] अज्जो पुणो वि[6] अज्जा[7] वसन्तसेणेत्ति ॥ २० ॥

एत्थ मे अप्पच्चयो (८५) ।

चन्दनकः । अरे को अप्पच्चओ[8] तुह । वअं दक्खिणत्ता अव्वत्तभासिणो खसखत्ति[9]खडोखडट्टोविलअकण्णाट-

---

वीर०–(८३) चन्दनक अत्र मम संशयः ।

[चन्द०–(८४) कथं तव संशयः] ।

वीर०–[सम्भमेति ।] आर्याछन्दः । (८५) संभ्रमघर्घरकण्ठ-स्त्वमपि जातोसि यत्त्वया भणितम् । दृष्टो मया खल्वार्यः पुनरार्या वसन्तसेनेति ॥ २० ॥ अत्र मेऽप्रत्ययः ।

चन्द०–(८६) अरे कोऽप्रत्ययस्तव । वयं दाक्षिणात्या अव्य-

---

१ णअ B (abd) E G, °नआ C. २ °डबणो B (a). ३ om: B D E F G. ४ दिट्ठो pr. m. B (d). ५ om· B D E F G K. ६ om B D E F G K. ७ अज्जुआ B G', अज्जआ D. ८ अपच्चओ B (d). ९ °क्कडो क्कडड्डोऽविलअ कर्णाट कर्णप्रा°.. अंद्र . वीण .. . धुघान A B (c) ; °कडत्थो . .. . वत्सर ..... B; °कपप्पा° B (a) ; °क्कडोक्कडत्थोऽविलअकर्णाटिकणप्रा..... द्रवि ..वीण . ...मधुघान... ...B(b) ; °क्कडोक्कढक्को विल..... (कट see. m. del) कर्णप्रा..... द्राविड (corr. दाविड ...... B(d) ; °क्कडो क्कडड्डो..... कर्नाट कर्णप्रा° ... अंद्रवि......वीण .....मधुघान .. ...D ; क्कडो कडुड्डो...... कर्णाटकर्णप्रा .. . अद्रविड...,..वीण......E, °कडो-क्कडड्डो......कर्णाटकर्णप्रा.: ...अंद्रविड..... वीण मधुघान F; °क्कडो •क्कठड्डोकर्णा-टकर्णप्रावर्ण... . वरवर...खानमुखाख म° G ; °अंध्र ... मधुपान H ; °कडोकडड्डो...... कर्णाटकर्ण.. ...प्रावर्ण अडाविड.. वीणचारखेर, खानमुखं मधुपान K.

कण्णप्पावरणअदविडचोलचीणबर्ब्बरखेरखानमुखमधुघातप्रभृतीनां म्लेच्छजातीनामनेकदेशभाषाभिज्ञा यथेष्टं मन्त्रयामो दिट्ठो[1] दिट्ठा वा अज्जो[2] वा अज्जआ वा । किं शब्दविचारः । स्त्रीपुं[3]नपुंसकव्याख्यानमप्रस्तुतम्[4] (८६) ।

वीरकः । णं अहं पि[5] पलोएमि । राअ[6]अण्णा एसा । अहं रण्णो पच्चइदो (८७) ।

चन्दनकः । ता किं[7] अहं अप्पच्चओ संवुत्तो (८८) ।

वीरकः । णं सामिणिओओ (८९) ।

चन्दनकः । स्वगतम् । अज्जगोवाल[8]दारओ अज्जचारुदत्तस्स पवहणं अहिरुहिअ[9] अवक्कमदि त्ति जइ कहिज्जदि[10]

क्षभाषिणः । खसेत्यादीनि कुलदेशोपहितानि म्लेच्छजातिनामानीति बोध्यम् । मन्त्रयां(या)मो भाषामहे । दृष्टो दृष्टा वा । आर्यो वार्या वा ।

वीर०–(८७) नन्वहमपि प्रलोकयामि । राजाज्ञैषा । अहं राज्ञः प्रत्ययितः ।

चन्द०–(८८) तत्किमहमप्रत्ययितः संवृः(वृत्तः) ।

वीर०–(८९) ननु स्वामिनियोगः ।

चन्द०–(९०) आर्यगोपालदारक आर्यचारुदत्तस्य प्रवहणमधिरुह्यापक्रामतीति यदि कथ्यते तदार्यचारुदत्तो राज्ञा शास्यते(?) । त-

१ दिट्ठादिट्ठो वा D F. २ अज्जा अज्जआ वा J. ३ पुन्नसुंक B (d). ४ मस्तुप्रतम् B (a); मप्रसुत B (b). ५ om B (d); वि D. ६ ण राअ० B (d) K, राअण्णा H. ७ For this have Sanskrit translation B B (abd) K. ८ गोपाल B (d). ९ अधि° (=अभि) B (d). १० °ज्जायि G.

खणेण गण्ठी[1] खण जूलके[2] मे
खणेण[3] मे[4] चञ्चलकुन्तले वा ।
खणेण[5] मुक्के खण उद्धचूडे[6]
चित्ते विचित्ते[7] हगे लाअशाले ॥ २ ॥

अवि अ । विशगाण्ठि[8]गब्भ[9]पविश्टेण विअ[10] कीडएण[11] अन्तलं[12] मग्गमाणेण पाविदं मए[13] महदन्तलं[14] । ता कश्श एदं किवि[15]णचेश्टिअं पाडइश्शं[16] । स्मृत्वा । आं[17] शुमालिदं मए । दलिद्द-चालुदत्तश्श[18] एदं[19] किविणचेश्टिअं[15] पाडइश्शं[16] । अण्णं[20] च । दलिद्दे क्खु शे । तेश्श[21] शव्वं शम्भावीअदि[22] । भोदु । अधि-

पठनीयः । एहिं इत्यनुस्वारस्य लघुत्वं च तत्र तत्र बोध्यम् । अपि च । विषग्रन्थिगर्भप्रविष्टेनेव कीटकेनान्तरं मार्गमाणेन प्राप्तं मया महदन्तरम् । तत्कस्य । उपरीति शेषः । एतत्कृपणचेष्टितं पातयिष्यामि । एतद्वसन्तसेनामारणरूपं कृपणं दीनं सुशक्यमित्यर्थः । कृपणं च तच्चेष्टितं चेति कर्मधारयः । आं स्मृतं मया । दरिद्रचारुदत्तस्य (एतत्कृपणचेष्टितं पातयिष्यामि । अन्यच्च । दरिद्रः खलु सः । तस्य सर्वं ) संभाव्यते । भवतु । अधिकरणमण्डपं गत्वाग्रतो व्यवहारं लेखयिष्यामि । यथा

१ गंड्ठी AB (bc);गठी B (d), गड्ठी E; खणेण गण्ठी &c., one line om. G. २ जूलकि मे E; जूदिका K, ३ व खणेण B (d). ४ वा ला खणकुन्त० K. ५ This half first and then the first half after it K. ६ उच्च ( व्व)? चूडे E. ७ °विविच्ते K. ८ विगंठि B (a), विशजकंठि पवि० गब्भ om. B (d) E, केशगांठि K. ९ पविठयेण AB(c); पविट्टेण B (ab) H J, पविट्ठेण B (d). १० धिअं ? E. ११ किमिणाके B (d) E १२ अन्तलं AB (bcd) EK, अत्तनं G. १३ om. B (a). १४ °दत्तलं. AB (bcd); °दत्तलं DH, पावितमहदंतलं E. १५ ०चेहिअं AB (bc) CDGJ, किमिणचिट्ठिअं B (ad) EK. १६ पालइश्शं AB (bcd) DFK; पाल्इस्सं G. १७ om. CJ; आ॰ E. १८ चारु० AB (bcd) D, °दत्तश्श तूत्तश्श B (d); चारुदत्तश्श शत्वतश्ञ E;० दत्तश्श शत्तूतश्श K. १९ एदं ........शव्वं om. AB (bc) DFG. २० स्मृत्वा अण्णं च K. २१ शव्वं तश्य K. २२ संभावीअदि AB (bc) DFG, °वाअदि ? E.

[1]अलणमण्डवं गदुअ अग्गदो ववहालं लिहावइश्शं। जधा [2]चालुदत्ताकेण वशन्त[3]शेणिआ मोडिअ[4] मालिदा। ता जाव अधिअलणमण्डवं ज्जेव्व गच्छामि। परिक्रम्यावलोक्य च। एदं तं अधिअलणमण्डवं। ए[5]त्थ पविशामि। प्रविश्यावलोक्य च। कधं [6]आशणाइं दिण्णाइं चि[7]ट्ठन्ति। दाव [8]आअश्शन्ति अधि-[9]अलणभोइआ। [10]एदश्शि दु[11]व्वेचत्तले मु[12]हुत्तअं उवविशिअ पडिवालइश्शं (२)। तथा[13] स्थितः।

**शोधनकः।** अन्यतः परिक्रम्य [14]पुरो दृष्ट्वा। एदे अधि[15]अरणिआ आअच्छन्ति। [16]ता जाव उवसप्पामि (३)। इत्युपसर्पति।

ततः प्रविशति श्रेष्ठिकायस्था[17]दि[18]परिवृतः

**[19]अधिकरणिकः।** भो भोः श्रेष्ठिकायस्थौ।

---

चारुदत्तकेन वसन्तसेनिका मोटयित्वा मारिता। तद्यावदधिकरणमण्डपमेव गच्छामि। एतत्तदधिकरणमण्डपम्। अत्र प्रविशामि। कथमासनानि दत्तानि तिष्ठन्ति। तावदागच्छन्त्यधिकरणभोजकाः। एतस्मिन्दूर्वाचत्वरे मुहूर्तमुपविश्य प्रतिपालयिष्यामि। प्रतिपालनं मार्गप्रतीक्षा।

शोध०–(३)एतेधिकरणिका आगच्छन्ति। तद्यावदुसर्पामि। श्रेष्ठी वणिक्। सेठ इति भाषापि। कायस्थः प्रसिद्धः। सर्वमिदं स्पष्टं मिताक्षरायाम्।

---

१ °अरण AB (bcd) D. Throughout the page the same. २ अज्जचालु० B, B (a), चारु० D. ३ °सिणिआ F. ४ मोक्य च कधं B (a). ५ एच्छ E. ६ आसणाइं DK. ७ चिट्ठदित्ति AB (bc) FG, दिट्ठंति B (a), चिट्ठंति B (d); चिष्ठंति C; चिट्ठंदीत्ति D, विचिट्ठंति E? चिट्ठंत्ति J; चिट्ठंदि K. ८ आअच्छन्ति CJ, आअश्यत्ति E. ९ °अरण° EK. १० भोदु एदश्शि B (d) E; ए ए दश्शि ? D ११ दुव्वाचत्तले DH, उच्चचत्तले K. १२ मुहुत्तं B (d) १३ इति स्थितः B B (a). १४ पुरतो B (d). १५ ०अलणिआ D. १६ om. B (a). १७ ०दिभिः B. १८ °वृत आधि० DF. १९ आधि० AB (c) DFH.

[1]तौ। आणवेदु अज्जो (४)।

अधिकरणिकः। व्यवहा[2]रपराधीनतया दुष्करं खलु [3]परचित्तग्रह[4]णमधिकरणि[5]कैः।

[6]छन्नं कार्यमुपक्षिपन्ति पुरुषा न्यायेन दू[7]रीकृतं
स्वान्दोषान्कथयन्ति नाधिकरणे रागाभिभूताः स्वयम्।
तैः पक्षापरपक्षवर्धितबलैर्दोषैर्नृपः स्पृश्यते
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः॥ २॥

---

तौ—(४) तौ श्रेष्ठिकायस्थौ। आज्ञापयत्वार्यः।

अधि०—व्यवहारपराधीनतया व्यवहारस्य पराधीनतया परस्याधीनतया तन्मात्रप्रयोज्यत्वेन परस्यान्यस्य। अन्यत्स्मृतिशास्त्रं कामन्दकादिनीतिशास्त्रं बुद्धिश्च निसर्गपट्वी सत्यासत्यपराभिप्रायज्ञानं दुष्करमधिकरणिकैरित्यर्थः। इदमेवाह श्लोकत्रयेण।

छन्नमिति। इदं श्लोकद्वयं किंचिद्विशेषं वहदेकार्थमेव। छन्नं सत्यं कार्यमसत्येनाच्छादितमसत्यं सत्येन च्छन्नमित्यर्थः। न्यायो दिव्यप्रमाणादिमान्निर्णयः। प्रमाणं वाचनिकं चाक्षुषं पत्रलेखादि वा। एतदभावे दिव्यमवतरतीति ध्येयम्। अधिकरणे स्वान्दोषान्पुरुषा न कथयन्ति। यतः स्वयं रागलोभाभिभूतास्तैरीदृशैः पुंभिः पक्षापरपक्षाभ्यां वर्धितानि बलानि सामर्थ्यानि येषां तैर्दोषैरित्यर्थः। पक्षः स्वीयत्वाभिमानवान्। अपरपक्षः स्वीयत्वाभिमानशून्यः द्रष्टुः प्राड्विवाकस्य। स्पष्टं शिष्टं विदुषाम्। [शार्दूलविक्रीडितं छन्दः]॥ २॥

---

१ छुमौ B, B (a). २ व्यवहाराधीनतया B(a). ३ om. G. ४ पर om. B (d). ५ आधि० AB (c) DF. ६ छंदन्नं? B (a). ७ Corr. कृता B (d).

अपि च ।

छन्नं दोषमुदाहरन्ति कुपिता न्यायेन दूरीकृताः
स्वान्दोषान्कथयन्ति न..धिकरणे सन्तोपि नष्टा ध्रुवम् ।
ये पक्षापरपक्षदोषसहिताः पापानि संकुर्वते[1]
संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥ ४ ॥

यतः[2] अधिकरणिकः[3] खलु ।

शास्त्रज्ञः कपटानुसार[4]कुशलो वक्ता न[5] च क्रोधन-
स्तुल्यो[6] मित्रपरस्वकेषु चरितं[7] दृष्ट्वैव[8] दत्तोत्तरः[9] ।
क्लीबान्पालयिता शठान्व्यथयिता[10] धर्म्यो[11] न लोभान्वितो
द्वैर्भावे[12] परतत्त्वे[13]बद्धहृदयो राज्ञश्च कोपापहः ॥ ५ ॥

छन्नं कार्यं प्रतिपाद्य छन्नं दोषं प्रतिपादयति । छन्नं दोषमिति । सन्तोपि साधवः सदाचारा अपि ये रागादिना पक्षापरपक्षीयैर्दोषैः सहिताः पापानि संकुर्वते ते ध्रुवं नष्टा लोकद्वयभ्रष्टा इत्यर्थः । स्पष्टमवशिष्टं शिष्टानाम् । [पूर्वोक्तमेव छन्दः] ॥ ४ ॥

इदानीं न्यायद्रष्टुर्लक्षणमाह । यत इत्यादिना । अधिकरणमुक्तम् । तत्प्रयोजनमस्येत्यधिकरणिकः प्राड्विवाकः । 'प्रयोजनम्' इति ठक् । अधिकरणमस्यास्तीत्यधिकरणिकः । 'अत इकि(नि)ठनौ' इति ठन्वा । स्फुटमिदं मिताक्षरादिषु । शास्त्रज्ञ इति । क्लीबानसमर्थवा(र्थान्) । धर्म्यो धर्मादनपेतः । द्वार्भावे(?) । [पूर्वोक्तमेव छन्दः] ॥ ५ ॥

१ शङ्कुर्वते K. २ om. E. ३ आधि° E. ४ ०नुकार Corr marg. B (d). ५ चन BB (ab). ६ तुल्योऽमित्र B (d), तुल्ये मित्र D ७ चरिते AB B (abcd) DFGK. ८ दृष्टे च B B (abd) E, दृष्टेव G. ९ दत्तोदर K. १० ०यता? B (d). ११ धर्म्येऽतिलो० AB (c) CDF; धर्म्योऽतिलो० J. धर्मो न० K. १२ द्वाभ्यां वै K. १३ °तन्त्र B (a).

श्रेष्ठिकायस्थौ । अज्जस्स वि णाम गु[1]णे दो[2]सो त्ति वुच्चदि । जइ[3] एँव्वं[4] ता चन्दालोए[5] वि अन्धआरो[6] त्ति वुच्चँदि[7] (५) ।

अधि[8]करणिकः । भद्र शोधनक, अधिकरणमण्डपस्य मार्गमादेशय ।

शोधनकः । एदु एदु अधिअ[9]रणभोइ[10]ओ एदु ( ६ ) । इति परिक्रा[11]मन्ति ।

शोधनकः । एदं अधिअरणमण्डवं[12] । ता पविसन्तु[13] अधि[14]अरणभोइआ (७) । सर्वे च[15] प्रविशन्ति ।

अधिकरणिकः । भद्र शोधनक, बहिर्निष्क्रम्य ज्ञायतां कः[16] कः कार्यार्थीति ।

शोधनकः । जं अज्जो आणवेदि । इति निष्क्रम्य । अज्जा अधिअरणिआ भणन्ति को[17] को इध कज्जत्थी त्ति (८) ।

---

श्रेष्ठिकायस्थौ–(५) आर्यस्यापि नाम गुणे दोष इत्युच्यते । यद्येवं तदा चन्द्रालोकेप्यन्धकार इत्युच्यते ।

शोध०– ( ६ ) एत्वेत्वधिकरणभोजक एतु ।

शोध०–( ७) अयमधिकरणमण्डपः । तत्प्रविशन्त्वधिकरणभोजकाः ।

शोध०–( ८ ) यदार्य आज्ञापयति । आर्या आधिकरणिका भणन्ति कः क इह कार्यार्थीति ।

---

१ om. B B (a). २ दोस० AB B (bcd) DEK; दोसंति F. ३ जह AB (c) DF; जदि BEK. ४ एवं K. ५ चंदेलोआवि ? K. ६ अंधकाआरो? B (a). ७ वुच्चति F, वुच्चंदि K. ८ आधि० D ९ ०अलण AB (abcd) EF. १० भोइज्जो AB (bc) EFGK; भोइज्जो Corr. भोइओ B (d); भोईआ B (a). ११ ०मति B (d). १२ मण्डपं D. १३ पविसन्दु DEFGK. १४ आधिअलण० D; अधिकरण० H. १५ om. DH, सर्वे उपविशन्ति B B (abd) GK. १६ om. B B (a). १७ om. B B (a).

**शकारः** । सहर्षम्। उवत्थिए अ[1]हिअलणिगए। साटोपं परिक्रम्य। ह[2]गे बलपुलि[3]शे मणुश्शे वाशुदेवे ल[4]ट्ठिअशाले ला[5]अशाले कज्जत्थी (९)।

**शोधनकः** । ससंभ्रमम्। ही[7]मादिके प[8]ढमं ज्जेव्व ल[9]ट्ठिअशा[10]लो कज्जत्थी। भोदु। अ[11]ज्ज मु[12]हुत्तं चिट्ठ। दाव अ[13]धिअरणिआणं णिवेदेमि। उ[14]पगम्य। अ[15]ज्जा, ए[16]सो क्खु ल[17]ट्ठिअशा[18]लो कज्जत्थी व[19]वहारं उवत्थि[20]दो (१०)।

**अ[21]धिकरणिकः** । कथं प्रथममेव राष्ट्रियश्यालः कार्यार्थी। यथा सूर्योदये उप[22]रागो महापुरुषनिपातमेव कथयति।

शका०—( ९ ) उपस्थिता अधिकरणिकाः। अहं वरपुरु(षो)मनुष्यो वासुदेवो राष्ट्रियश्यालो राजश्यालः कार्यार्थी।

शोध०—(१०)ससंभ्रमं सभयमित्यर्थः। हीमादिके खेदे। प्रथममेव राष्ट्रियश्यालः कार्यार्थी। भवतु। आर्य मुहूर्तं तिष्ठ। तावदधिकरणिकानां निवेदयामि। आर्या एष खलु राष्ट्रियश्यालः कार्यार्थी व्यवहारमुपस्थितः।

[ अधि० ]—उपरागो ग्रहणम्। व्याकुलेन निबिडेन।

---

१ आधिअलणिके D. २ हगे AB (bcd) DEGK. ३ पुलिश० AB (bcd) EG. ४ लट्ठिअ AB (bc) JK; लड्डिअ B (d) CD. ५ शिआल B (bcd) DK. अशाले.... चिट्ठ next page om. B (a). ६ राअ° B (d). ७ हीमादिके B, हामादिके DH. ८ पढमं AB (c); पढमं K. ९ लट्ठिअ° AB (bc); लड्डिअ° B (d) DEK, रड्डिअ° C. १० °शाले AB (c) D; शालके Corr. सालो B (d) EK; साले CJ. ११ अज्जा B (b). १२ मुहुत्तअं BE; मुहुत्ते B (b). १३ °अलणिआणं AB (abcd) E; आधिअल० D. १४ om. B (a). १५ अज्ज B (d). १६ एसे DH. १७ लट्ठिअ° AB (bc) D; लड्डिअ° B (ad) EK; रड्डिअ° C. १८ °शाले AB (c) D Same Corr. सालो B (ab); °श्यालो E; °शालो K. १९ ववहालमुव० AB (cd) CDE; ववहाललमुव ? B (b), ववहालं उव० G. २० ०त्थिदे B (d) DEH; °ट्ठिदो G. २१ आधि० D. २२ ०रागे ? K.

शोधनक, व्याकुलेनाद्य व्यवहारेण भवितव्यम् । भद्र, निष्क्रम्योच्यतां गच्छाद्य न दृश्यते तव व्यवहार इति ।

**शोधनकः** । जं अज्जो आणवेदि[1] त्ति (११) । निष्क्रम्य शकारमुपगम्य । अज्ज, अधिअरणिआ[2] भणन्ति । अज्ज गच्छ । ण[3] दीसदि[4] तव[5] ववहारो[6] (१२) ।

**शकारः** । सक्रोधम् । किं ण दीशदि[7] मम[8] ववहाले । जइ ण दीशदि[9] तदो[10] आउत्तं[11] लाआणं पालेअं[12] बहिणीवदिं[13] विण्णविअ[14] बहिणिं[15] अत्तिकं[16] च[17] विण्णविअ एदं अधिअलणिअं[18] फेलिअ[19] एत्थ अण्णं अधिअलणिअं ठावइश्शं[20] (१३) । इति गन्तुमिच्छति ।

---

शोध०—(११) यदार्य आज्ञापयतीति । (१२) आर्य अधिकरणिका भणन्ति । अद्य गच्छ । न दृश्यते तव व्यवहारः ।

शका०—(१३) किं न दृश्यते मम व्यवहारः । यदि न दृश्यते तदावृ(बु)त्तं भगिनीधवमित्यर्थः । राजानं पालकं भगिनीपतिं विज्ञाप्य भगिनीं मातरं च विज्ञाप्यैतमधिकरणिकं फेलिअ प्रक्षिप्य । अत्रान्यमधिकरणिकं स्थापयिष्यामि ।

---

१ आवेणदित्ति AB (bcd), इति नि० B. २ ०अलणिआ B (ad); आधि० D. ३ om. K. ४ दीशदि AB (c), दीससि B (b); दीशाति E. ५ लव B (b); तुह G. ६ ववहाले B (abcd) DEFGK. ७ दीसदि B (ab). ८ तव वहाले ? B (a). ९ दीसदि B (abd). १० अदो B (a). ११ आवुत्तं D. १२ पलाअं ? K. १३ ०पदिं D. १४ विणविअ D. १५ वहिणिअं AB (bcd) EG, वहिणी B (a) BH; विवहिणिअं ? णविअ om. ? K. १६ अत्तिकं . अधिअलणिअं next page om. D (b); अलिकं ? D. १७ अ D, ज्जअ ? H. १८ ०अराणिअं AB (c) E; अधिअणीअं B(a), आल्वि० D. १९ फेलइश्शं अण्णं &c. B B (ab), फलिआएशं ? E, एत्थ om. B (d). २० ग (ठा) वइ्श्शं F.

शोधनकः । अज्ज [१]रट्ठिअ[२]शालअ, [३]मुहुत्तअं चिट्ठ । दाव [४]अधिअरणिआणं [५]णिवेदेमि । [६]अधिकरणिकमुपगम्य । [७]एसो [८]रट्ठिअ[९]शालो [१०]कुविदो भणादि (१४) । इति तदुक्तं भणति ।

[११]अधिकरणिकः । [१२]सर्वमस्य मूर्खस्य संभाव्यते । [१३]भद्र, उच्यताम् । आगच्छ । दृश्यते तव व्यवहारः ।

शोधनकः । शकारमुपगम्य ! अज्ज, [१४]अधिअरणिआ [१५]भणन्ति । आअच्छ । [१६]दीसदि [१७]तव [१८]ववहारो । ता पविसदु अज्जो (१५) ।

शकारः । [१९]ही [२०]पढमं [२१]भणादि [२२]णं [२३]दीशदि । [२४]शंपदं [२५]दीशदि त्ति । ता [२६]णाम भीदभीदा [२७]अधिअलणभोइआ जेत्तिअं [२८]हग्गे

शोध०–( १४ ) आर्य राष्ट्रियश्याल, मुहूर्तं तिष्ठ । तावदधिकरणिकानां निवेदयामि । एष राष्ट्रियश्यालः कुपितो भणति ।

शोध०–( १५ ) आर्य, अधिकरणिका भणन्ति । आगच्छ । दृश्यते तव व्यवहारः । तत्प्रविशत्वार्यः ।

शका०–(१६)ही वितर्के । प्रथमं भणति(न्ति) न दृश्यते । सांप्रतं

१ लट्ठिअ° AB (abcd) DEK. २ °शालअ AB (cd) CDEJ; °स्सालअ K. ३ मुहुत्तं B (d). ४ ०अलणि० B (d), आधिअल० D. ५ निवेदेमि CJ ६ आधिकरणिकाबु(व)प० AB (c) F; अधिकरणिकान् उप° B (bd) E; आधिकरणिकान् D, आधिकरणिकामुप° ? H. ७ एशे AB (c) DF; एशो B (d). ८ लट्टिअ° AB (abc) DEFK, लट्ठिआ° B (d) ९ °शाले AB (c) DF; °शालो B (d) E, °श्शालो K. १० कुबिदे AB (c) DF. ११ आधि० D. १२ सर्वमूर्खस्य B (a). १३ तदुच्यतां BB (a). १४ अधिअल° D. १५ भणन्दि D. १६ दीसदि......अज्जो om. CDFJ. १७ तव . . . ण दीशादि om. B (b) १८ ववहाले E. १९ सहर्षमात्मगतं ही BEG, ही om. AB (c) CDFJ. २० पढमं AB (c), पडमं G. २१ भणन्ति AB (c) FJ; भणन्दि D. २२ न CDJ. २३ दीसादि AB (acd) E. २४ संपदं AB (abcd) CJ. २५ दीसादि B (ab) K. २६ मे K. २७ आधिअल० D. २८ हगे AB (bcd) LG.

भणिइश्शं तेत्तिअं पत्तिआवइश्शं[१] । भोदु पविशामि । प्रविश्योपसृत्य[२] । शुशुहं[३] अम्हाणं[४] तुम्हाणं पि शुहं[५] देमि[६] ण देमि च[७] (१६) ।

अधिकरणिकः[८] । स्वगतम् । अहो स्थिरसंस्कारता व्यवहारार्थिनः । प्रकाशम् । उपविश्यताम् ।

शाकारः । आं[९] । अत्तणकेल्लका मे[१०] भूमी[११] । तो[१२] जहिं मे लोअदि[१३] तहिं उवविशामि । श्रेष्ठिनं प्रति । एशे[१४] उवविशामि । शोधनकं प्रति । णं[१५] एत्थ[१६] उवविशामि । इति अधिकरणिकमस्तके हस्तं दत्त्वा । एशे[१७] उवविशामि (१७) । इति भूमावुपविशति ।

अधिकरणिकः[१८] । भवान्कार्यार्थी ।

शाकारः । अध[१९] इं (१८) ।

---

दृश्यत इति । तन्नाम भीतभीता अधिक(र)णभोजका यावदहं भणिष्यामि तावत्प्रत्येष्यन्ते । भवतु प्रविशामि । सुसुखमस्माकं युष्माकमपि सुखं ददामि न ददामि च ।

शाका०–(१७) आं । आत्मीया मम भूमि(ः) । तद्यत्र मे मह्यं रोचते तत्रोपविशामि । एष उपविशामि । नन्वत्रोपविशामि । एष उपविशामि ।

शाका०–(१८) अथ किम् ।

---

१ ०इस्सं B (ab); °इश्शे DH; °इश्शादि K. २ °त्य च B B (a), D. ३ सुशहं? AB (cd); सुहुइं B (ab); सुशुहं H, सशुद्धे? K. ४ अम्हाणं पि E. ५ सुभं B (a), सुहं B (d). ६ देमिमि ? B (d). ७ अ D. H. ८ आधि० D. ९ आ० CDJ, आः F. १० शे AB (c) CDFJ. ११ भूमि B (d) F. १२ जा जहिं B (a). १३ रोअदि AB (abc) CDJK. १४ एष B (a), एशे DH; एत्थ K. १५ ण BB (ab). १६ ०एसु K. १७ आधि० AB (c) DE. १८ एथ BB (a). १९ अध किं B (ab), अथ इं B (d).

अधिकरणिकः[१] । तत्कार्यं कथय ।

शकारः । कण्णे कज्जं कथइश्शं[२] । एव्वं[३] वड्डके मल्ल[४]-कप्पमाणाह कुले हग्गे[५] जादे[६] ।

[७] लाअश्शुले मम पिदा लाआ तादश्श[८] होइ जामादा[९] ।
लाअशिआले[१०] हग्गे[११] ममावि[१२] वहिणीवदी[१३] लाआ[१४] ॥ ६ ॥ (१९)

अधिकरणिकः[१५] । सर्वं ज्ञायते ।

किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति नितरां स्फीताः सुक्षेत्रे[१६] कण्टकिद्रुमाः[१७] ॥ ७ ॥

तदुच्यतां कार्यम् ।

शकारः । एव्वं भणामि । अवलद्धाह[१८] वि णं[१९] अ मे किं पि[२०]

---

शका०–( १९ ) कर्णे कार्यं कथयिष्यामि । एतावद्वृद्धके मल्लकप्रमाणस्य कुलेहं जातः । लाअश्शुले इति । आर्याच्छन्दः । राजश्वशुरो मम पिता राजा तातस्य भवति जामाता । राजश्यालोहं ममापि भगिनीपती राजा ॥ ६ ॥ एतेन यदुक्तं भवति तदाह । अपराद्धस्यापीत्यादि ।

अधि०–[किमिति । स्पष्टम् ॥ ७ ॥]

शका०–( २० ) एवं भणामि । अपराद्धस्यापि न च मे किंमपि करिष्यति । ततस्तदेति वा । तेन भगिनीपतिना परितुष्टेन मे

---

१ आधि० D. २ कथयइस्सं AB (bc), °यइश्शं B (d), कथइश्शं D; हुं कधइस्सं K. ३ एंअवडके AB (bc) EF; एअं वड्डके B, एव्वडके B (a); एअं वड्डक्के B (d), एअवड्ड-के DH; एअवकडे ? (डके) G; एसो वडके K. ४ मल्लिक° DH, मल्लक° E; गल्लक° K. ५ हग AB (bcd) DEK. ६ जादो K. ७ written as prose after जादे AB (c). ८ तादस्स B (a) ९ जामदा B (d). १० °श्शालए B, °श्यालश B (a). °शिआले-वि DH, ०शिआलड्डा E, °शिआल K. ११ हगे B (d) DEK. १२ ममवि ? K. १३ भइणी० AB (cd) DG बदि pr. m. B (d); बहिणीबई B; बइणी०B (b); बहणीबदि E, भईणि० ? F, बहणी० J. १४ राआ AB (abcd) EFK. १५ आधिक० D. १६ विपिने DEFG. १७ कण्टकं० B. १८ °लद्धाहपि E; अवॆद्धाहवि H. १९ ण मे K. २० वि DEFHK.

कल्लेइश्शादि[1] । तदो तेण[2] बहिणीबदिणा परितुश्टेण[3] मे कीलिदुं लक्खिदुं शव्वुज्जाणाणं पवले पुप्फ[4]कलण्डकजिण्णु[5]ज्जाणे दिण्णे । तहिं च पेक्खिदुं अणुदिअहं[6] शोशावेदुं[7] शोधावेदुं पोश्टावेदुं[8] लुणावेदुं[9] गच्छामि । देव्वजोएण पेक्खामि ण पेक्खामि वा इश्थिआ[10]शलीलं णिवडिदं (२०) ।

अधिकरणिकः । अथ ज्ञायते[11] का स्त्री विपन्नेति ।

शाकारः । हंहो अधि[12]अलणभोइआ, किंत्ति[13] ण आणामि । तं तादिशिं[14] णअल[15]मण्डणं कञ्चणशदभूशणिअं[16] केण[17] वि

क्रीडितुं रक्षितुं सर्वोद्यानानां प्रबलं पुष्पकरण्डकजीर्णोद्यानं दत्तम् । जीर्णेति विशेषणं विजनत्वज्ञापनार्थम् । तत्र च प्रेक्षितु अ(म)नुदिवसं शुष्कं कारयितुं शोधयितुं पुष्टं कारयितुं लूनं कारयितु(तुं) गच्छामि । दैवयोगेन पश्यामि न पश्यामि वा स्त्रीशरीरं निपतितम् ।

शका०–( २१ ) हंहो इति वितर्के । अधिकरणिक(ण)भोजकाः, किमिति न जानामि । तां तादृशीं नगरमण्डनं काञ्चनशतभूषणां केनापि कुपुत्रेणार्थकल्यवर्तस्य कारणाच्छून्यं पुष्पकरण्डक-

१ °इस्सादि E. २ त्तेण H. ३ बरितुट्टेण DFK; परितुट्टेण J. ४ पुफ° B (a); पुष्फ° B (d). ५ °करण्डजि० B (d), °करण्डकाजि० D; °करण्डअजि° G. ६ अणुदिणं B; °दिण ? B (a); ०दिअह ? B (b). ७ शोशादुं B (a). ८ पोत्थावेदुं AB (bc) CDJ, पोस्तावेदुं B (ad). ९ लुस्तावेदुं B (d), लुआवेदुं E, लुस्सावेदुं K. १० इत्थिअ AB (c) CDFGJ; ईच्चथिआ B (a), इत्थिय B (b) इस्तिआ B (d); इश्तिया E. ११ जायते AB (c). १२ आधि० D. १३ किंत्ति AB (bcd) J. १४ तादिशं B (a), तादिशि K. १५ णअर° K. १६ °भूषणिअं AB (abc), °भूस corr. श B (d). १७ केणावि K.

कुपुत्तेण अत्थकल्लवत्तश्श कालणादो[2] शुण्णं[3] पुप्फकलण्डक-जिण्णुज्जाणं पविशिअ[4] बाहुपाशबल[5]क्कालेण[6] वशन्तशेणिआ मालिदा। ण मए (२१)। इत्यधोक्ते मुखमावृणोति[9]।

अधि[10]करणिकः। अहो नगररक्षिणां प्रमादः। भो[11]: श्रेष्ठिकायस्थौ न मयेति व्यवहारपदं प्रथममभिलिख्यताम्।

कायस्थः। जं अज्जो आण[12]वेदि। तथा कृत्वा। अज्ज लिहिदं (२२)।

शकारः। स्वगतम्। हीमा[13]दिके उत्तला[14]अन्तेण वि[15]अ पाँ[16]अशापिण्डे[17]लकेण अज्ज मए अत्ता एव्वं[18] णिण्णा[19]शिदो। भोदु। एव्वं दाव। प्रकाशम्। अहो अधि[20]अलणभोइआ, णं भणामि[21] मए ज्जेव्व दिट्टा[22]। किं कोलाहलं[23] कलेध[24] (२३)। इति पादेन लिखितं[25] प्रोञ्छति[26]।

---

जीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण वसन्तसेना मारिता। न मया।

अधि०— व्यवहारस्य पदं स्थानम्।

काय०—(२२) यदार्य आज्ञापयति। आर्य लिखितम्।

शका०—(२३) हीमादिके भये खेदे चाव्ययम्। उत्तलाअ-

---

१ कुपुत्रेण B (a). २ कालणा B (d) G. ३ शुणं AB (c). ४ पविशिअ BDEF GK. ५ वाहवाशब० K. ६ °काले AB (bc); °कालेणा B (a), °बलक्काले DF. ७ मया K. ८ °क्के च AB (bcd) CDGK, ०द्धोक्ते च EF. ९ मुख वृणोति ? B (a). १० आधि० D. ११ भो B १२ °दिति B (a). १३ ही मादिके B. १४ °अत्तेण AB (bcd) EG, उत्तलअंत्तेण DH ; उत्तलाचलणेण K. १५ वि B (a). १६ पायश AB (bc) F; पायशो D; °यशे H, पापश्य K. १७ पिण्डेण B (a), पिण्डाल० CJ. १८ एव्वं K....... .. १९ णिणाशिदो AB (c), णिण्णसिदे B (a) E, णिण्णाशिदे BB (d); विणाशिदे K. २० आवि° D. २१ भणा om. ? B (a). २२ दिट्ठा AB (abcd) JK. २३ °कलं केलेध B (b). २४ कलध K. २५ लिखनं AB (bcd) DFG. २६ प्रोञ्छन्ति AB (c).

अधिकरणिकः[१] । कथं त्वया ज्ञातं यथा खल्वर्थनिमित्तं बाहुपाशेन व्यापादिता ।

शकारः । हंहो णूणं शुण्णशूणाए[२] मोघट्ठाणाए[३] गीवालिआए[४] णिशुवण्णकेहिं[५] आहलणट्ठाणेहिं[६] तक्केमि (२४) ।

श्रेष्ठिकायस्थौ । जुज्जदि विअ (२५) ।

शकारः । स्वगतम् । दिट्ठिआ[७] पच्चुज्जीविदम्हि[८] । अविदमादिके (२६) ।

---

न्तेण त्वरया त्वरां कुर्वाणेनेत्यर्थः । उत्पतता चेत्यर्थः । इव पायसपिण्डरकेना(णा)द्य मयात्मैव निर्नाशितः । भवत्वेवं तावत् । अहो अधिकरणभोजका, ननु भणामि मयैव दृष्टा । किं कोलाहलं कुरुत ।

शका०—( २४ ) हंहो नूनं शून्यशूनय(या) मोघस्थानया ग्रीवालिकया निःसुवर्णकैराभरणस्थानैस्तर्कयामि । शून्या च शूना उच्छूना उच्छोथवतीत्यर्थः । ग्रीवालिका ग्रीवैव ।

श्रे० का०—( २५ ) युज्यत इव । शकारेणैव मारितेति युज्यत इत्यर्थः ।

शका०—( २६ ) दिष्ट्या प्रत्युज्जीवितोस्मि । अविदमादिके खेदे ।

१ अधि° D. २ शूणशूणाए AB (c); शुणशूण B; शूणशुणाए B (d), शूणशूणए ? E. ३ मोघठाणाए AB (c) D; om. B; मोघवाणीए B (b); मोठाणा ? H. ४ गीवा-लि० B (a); गावालि ? B (b); गीवाए K. ५ णिसुवण्ण AB (abcd) D; णीसुवण्ण० B. सुवण्णके० K. ६ °थाणेहिं B (a); °ठाणेहिं B (d). ७ दिट्ठिआ AB (abcd) CDJK. ८ पत्युज्जी° AB (c) CJ, पच्चुवजी० B, पच्चुप० B (d), पच्चुजी E.

श्रेष्ठिकायस्थौ । भो[1] कं एसो ववहारो[2] अवलम्बदि(२७)।

अ[3]धिकरणिकः । इह हि द्विविधो व्यवहारः ।

श्रेष्ठिकायस्थौ । केरिसो[4] (२८) ।

अधिकरणिकः । वाक्यानुसारेणार्था[5]नुसारेण च । यस्तावद्वाक्यानुसारेण स ख[6]ल्वर्थिप्रत्यर्थि[7]भ्यः । यश्चार्थानुसारेण स च[8]धिकरणिकबुद्धिनिष्पाद्यः ।

श्रेष्ठिकायस्थौ । ता वसन्तसेणामादरं अवलम्बदि ववहारो (२९) ।

अ[3]धिकरणिकः । एवमिदम् । भद्र शोधनक, वसन्तसेनामातरमनुद्वेजयन्नाह्वय ।

शोधनकः । त[9]था । इति निष्क्रम्य ग[10]णिकामात्रा सह प्रविश्य । एदु एदु अज्जा (३०) ।

---

श्रे॰ का॰—( २७ ) भो(भोः) कमेष व्यवहारोवलम्बते ।

श्रे॰ का॰—(२८) कीदृशः ।

श्रे॰ का॰—शकारवाक्यानुसारेणायं व्यवहार इति प्रत्यर्थिनमाहतुः । ( २९ ) तद्वसन्तसेनामातरमवलम्बते व्यवहारः ।

शोध॰—( ३० ) [तथा] । एत्वेत्वार्या ।

---

१ om. B B (ab). २ अवलम्बदि .... ववहारो L. 2 next page om. E; Four speeches after अवल॰ om. G. ३ आधि॰ D. ४ केरिसो AB (c) CFJ ५ अर्थानुसा॰ वाक्यानु॰ &c. B (d). ६ खलु om. B B (ab). ७ अर्थं प्रत्यर्थेभ्य K. ८ च om. BB (a), वाचिकानिक..... निः पा॰ K. ९ तथेति नि॰ AB (abcd) CDJ. १० गणिकाया मा॰ B B (a).

वृद्धा । गदा मे दारिआ मित्तघरेअं अत्तणो जोव्वणं अनुभविदुं । एसो उण दीहाऊ भणादि आअच्छ अधिअरणिओ सद्दावेदि । ता मोहपरवसं विअ अत्ताणअं अवगच्छामि । हिअअं मे थरथरेदि । अज्ज, आदेसेहि मे अधिअरणमण्डवस्स मग्गं (३१) ।

शोधनकः । एदु एदु अज्जा । उभौ परिक्रामतः। एदं अधिअरणमण्डवं । एत्थ पविसदु अज्जा (३२) । इत्युभौ प्रविशतः ।

वृद्धा । उपसृत्य । सुहं तुम्हाणं भोदु भावमिस्साण (३३) ।

अधिकरणिकः । भद्रे, स्वागतमास्यताम् ।

वृद्धा । तधो (३४) । इत्युपविष्टा ।

---

वृद्धा—वृद्धे(द्धा) इयं वसन्तसेनाजननी । (३१) गता मे दारिका मित्रगृहमात्मनो यौवनमनुभवितुम् । एष पुनर्दीर्घायुर्भणति आगच्छ अधिकरणिक आहू(ह्व)यति । तन्मोहपरवशमिवात्मानमवगच्छामि । हृदयं मे प्रकम्पते । [ इदमात्मगतमाह । ] आर्य, आदिश मे मह्यमधिकरणमण्डपस्य मार्गम् । [ इदं प्रकाशमाह । ]

शोध०—(३२) एत्वेत्वार्या । एषोधिकरणमण्डपः । अत्र प्रविशत्वार्या ।

वृद्धा—(३३) सुखं युष्माकं भवतु भावमिश्राणाम् ।

वृद्धा—(३४) तथा ।

---

१ °हरंअं B B (abd) EK. २ °णमणु° AB (abcd); जेव्वण (जोव्वण) सुहमणु° D; जोव्वणमणुणअं K. ३ भविउं AB (bcd) FK. ४ आधि० AB (bc) D, अधिअल० B (ad). ५ °वशमिव AB (c) D; °प्पवसमिव B (a); ०वसमिव B (bd) JK ६ थरहरेदि BCDEFK. ७ °अलण B (a). ८ Whole speech om. G. ९ °काम्यतः K. १० °अलण AB (abc) DE; अधिअलमण्ड° ? B (d). ११ पविशिदु AB (c); पविद्दु B (b), उपाविसदु K. १२ आधि० Here as well as hroughout the next page D. १३ तथेत्युप० AB(abcd) K, तथा इत्यु० D.

शकारः । साक्षेपम् । आगदाशि वुड्ढकुट्टणि, आगदाशि (३५) ।

अधिकरणिकः। अये, त्वं किल वसन्तसेनाया माता ।

वृद्धा । अध इं (३६) ।

अधिकरणिकः। अथेदानीं वसन्तसेना क्व गता ।

वृद्धा । मित्तघरअं (३७) ।

अधिकरणिकः । किंनामधेयं तस्या मित्रम् ।

वृद्धा । स्वगतम् । हद्धी हद्धी । अदिलज्जणीअं क्खु एदं । [प्रकाशम् । जणस्स पुच्छणीओ अअं अत्थो । ण उण अधिअरणिअस्स (३८) ।

अधिकरणिकः । अलं लज्जया । व्यवहारस्त्वां पृच्छति ।

श्रेष्ठिकायस्थौ । ववहारो पुच्छादि । णत्थि दोसो । कधेहि (३९) ।

---

शका०–(३५) आगतासि वृद्धकुट्ट(कुट्टि)नि, आगतास्यागतासि ?।

वृद्धा–( ३६ ) अथ किम् ।

वृद्धा–( ३७ ) मित्रगृह(म्) ।

वृद्धा–(३८) हद्धी हद्धी । हा धिक् हा धिक् । अतिलज्जनीयं खल्वेतत् । जनस्य पृच्छनीयः प्रष्टव्योयमर्थः । न पुनरधिकरणिकस्य ।

श्रे० का०–( ३९ ) व्यवहारः पृच्छति । नास्ति दोषः । कथय ।

---

१ ०सि D. २ वुढ B (a). ३ कुट्टिणि B (a) DH, कुट्टणिआ B (d). ४ °सेनामाता B B (a) ५ om. B B (a); हाद्धि हद्धि D. ६ अदि om. B (b). ७ ०णीयं AB (bc). ८ क्खु...to प्रकाशम् om. B (d). ९ आधि० AB (c) D. १० ण एत्थ B B (a), णत्थि H.

वृद्धा । कधं ववहारो[1] । जइ[2] एव्वं ता सुणन्तु अज्जमिस्सा । सो क्खु सत्थ[3]वाहवि[4]णअदत्तस्स णत्तिओ साअरदत्तस्स तणओ [5]सुगहिदणामहेओ अज्जचा[6]रुदत्तो णाम सेट्ठिचै[7]त्तरे पडिवसदि । तहिं मे दारिआ जोव्वण[8]सुहं अणुभवदि (४०) ।

शकारः । [9]शुदं अज्जेहिं । लि[10]हीअंतु एदे अक्खला । चा[11]लुदत्तेण [12]शह मम विवादे (४१) ।

श्रेष्ठिकायस्थौ । चारुदत्तो मि[13]त्तो त्ति [14]णत्थि दोसो (४२) ।

[15]अधिकरणिकः । व्यवहारोयं चारुदत्तमवलम्बते ।

श्रेष्ठिकायस्थौ । [16]एव्वं विअ (४३) ।

---

वृद्धा—(४०) कथं व्यवहारः । यद्येवं तदा शृण्वन्त्वार्यमिश्राः । स खलु सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य तनयः सुगृहीत-नामधेय आर्यचारुदत्तो नाम श्रेष्ठिच(च)त्वरे प्रतिवसति । तत्र मे दारिका यौवनसुखमनुभवति ।

शका०—(४१)श्रुतमार्यैः । लिख्यतामेतान्यक्षराणि । चारुदत्तेन सह मम विवादे [विवादः] ।

श्रे० का०—(४२) चारुदत्तो मित्रमिति नास्ति दोषः ।

श्रे० का०—(४३) एवमिव ।

---

१ ववहालो B (ab). २ om. B B (a). ३ साम्हि० ? B (a). ४ विणय० AB (bc) F; विणयवंतस्स B (d). ५ सुगिहिद AB (bcd) D. ६ चालु० AB (abc) D. ७ °चत्तले B (a) ८ °सुहमणु० AB (abcd) CDJ. ९ सुदं AB (abcd) D. १० लिहीयन्तु AB (bc) FK; लिहीअंतु CJ. ११ चारु० AB (cd). १२ सह AB (abc) D; सु मम ? B (d). १३ मित्तोत्ति AB (bc) DF. १४ णत्थि B (a). १५ आधि० D. १६ एवं K.

अधिकरणिकः[1] । धनदत्त, वसन्तसेनार्यचारुदत्तस्य गृहं गतेति लिख्यतां व्यवहारस्य प्रथमः पादः । कथमार्यचारुदत्तोऽप्यस्माभिराह्वाययितव्यः । अथवा व्यवहारस्तमाह्वयति । भद्र शोधनक, गच्छ । आर्यचारुदत्तं स्वैरमसंभ्रान्तमनुद्विग्नं सादरमाह्वय[2] प्रस्तावेनाधिकरणिकस्त्वां[3] द्रष्टुमिच्छतीति ।

शोधनकः । जं अज्जो आणवेदि[4] । इति निष्क्रान्तश्चारुदत्तेन सह प्रविश्य च । एदु एदु अज्जो (४४) ।

चारुदत्तः । विचिन्त्य ।

परिज्ञातस्य मे राज्ञा शीलेन च कुलेन च ।
यत्सत्यमिदमाह्वानमवस्थामभिशङ्कते[5] ॥ ८ ॥

सवितर्कं स्वगतम् ।

ज्ञातो नु किं स[6] खलु बन्धनविप्रयुक्तो
मार्गागतः[7] प्रवहणेन मयापनीतः ।
चारेक्षणस्य नृपतेः श्रुतिमागतो वा
येनाहमेवमभियुक्त इव प्रयामि ॥ ९ ॥

अथवा किं विचारितेन । अधिकरणमण्डपमेव[8] गच्छामि । भद्र शोधनक, अधिकरणस्य मार्गमादेशय ।

---

अधि०—धनदत्तेति नाम कायस्थस्य ।

शोध०—(४४) यदार्य आज्ञापयतीति । एत्वेत्वार्यः ।

चा०—परिज्ञातस्येति । अनुष्टुप् ॥८॥ ज्ञात इति । वसन्ततिलका च्छन्दः । स आर्यकः ॥ ९ ॥

---

१ आधि० D. २ आहूय B (d). ३ °कराणिस्त्वा B (b); वराणिक त्वां.. ...इच्छन्ति B (d). ४ बेदिद्धि AB (c); बेदिति B (d). ५ °स्थानभि° E; °स्थानवि° K. ६ om. B (a); न खलु J. ७ मार्गं गतः AB (c) D; °गतप्रवहणेन B (d). ८ अधिकरणमण्डपस्य B (d).

**शोधनकः** । एदु एदु अज्जो[1] (४५) । इति परिक्रामतः[2] ।

**चारुदत्तः** । सशङ्कम् । तत्किमपरम् ।

रूक्ष[3]स्वरं वासति[4] वायसोय-
ममात्यभृत्या मुहुराह्वयन्ति ।
सव्यं च नेत्रं स्फुरति प्रसह्य[5]
ममानिमित्तानि हि खेदयन्ति ॥ १० ॥

**शोधनकः** । एदु एदु अज्जो सैरं[6] असम्भन्तं (४६) ।

**चारुदत्तः** । परिक्रम्याग्रतोवलोक्य च[7] ।

शुष्कवृक्षस्थितो ध्वाङ्क्ष आदित्याभिमुखस्तथा ।
मयि चोदयते वामं चक्षुर्घोर[8]मसंशयम् ॥ ११ ॥

पुनरन्यतोवलोक्य । अये कथमयं सर्पः[9] ।

---

शोध०–( ४५ ) एत्वेत्वार्यः ।

चारु०–चारुदत्तस्यानिष्टसूचकान्यपशकुनानीति बोध्यम् । रूक्षेति । वायसः काकः । वासति चञ्चुपुटः(?) मुखास्य विरौति । तत्रापि रूक्षस्वरं यथास्यात्तथा । सव्यं वामम् । अनिमित्तान्यपशकुनानि ॥ १० ॥

शोध०–( ४६ ) एत्वेत्वार्यः स्वैरमसंभ्रान्तम् ।

चारु०–शुष्केति । अनुष्टुप् । पूर्वार्धे चैकमपशकुनमुत्तरार्धे चापरमिति बोध्यम् ॥ ११ ॥

---

१ अज्ज AB (c). अज्जे B (b), २ °माति G. ३ रुक्ष० J. ४ वाशाति J. ५ प्रसत्य? B (a); प्रसह्यं B (d). ६ om. from the Prâkrita and add next speech after चारुदत्त· as a stage direction स्वैरमसंभ्रान्तं परि० &c. AB (c) DFG; सौरमसंभ्रान्तं B (b). om. B (bd) ८ चक्षुश्चौरमसंशम् K. ९ सर्पस्तर्प्यं· (?) B (b).

मयि वि[1]निहितदृष्टिर्भिन्ननीलाञ्जनाभः,
स्फुरितविततजिह्वः, शु[2]क्लदंष्ट्राचतुष्कः ।
अभिपतति सरोषो, जि[3]ह्मिताध्मानकुक्षि-
र्भुजगपतिरयं मे[4] मार्गमाक्रम्य सुप्तः ॥ १२ ॥

अपि चेदम् ।

स्खलति चरणं भूमौ न्यस्तं, न चार्द्रतमा मही
स्फुरति नयनं, वामो बाहुर्मुहुश्च विकम्पते ।
शकुनिरपरश्चायं ता[5]वद्विरौति हि नैकशः
कथयति म[6]हाघोरं मृत्युं न चात्र विचारणा ॥ १३ ॥

सर्वथा देवताः स्वस्ति करिष्यन्ति ।

**शोधनकः** । एदु एदु अज्जो । इमं अ[7]धिअरणम[8]ण्डवं पविसदु अज्जो (४७) ।

**चारुदत्तः** । प्रविश्य समन्तादवलोक्य । अहो अधिकरणमण्डपस्य परा श्रीः । इह हि

---

मयीति । मालिनी छन्दः । भिन्नः कज्जलराशिमध्येऽधिकनील इत्यत आह भिन्नेति । नीलाञ्जनं कज्जलम् । अयं यः सर्पो मे मार्गमाक्रम्य सुप्तः स विनिहतेत्यादिषड्विशेषणविशिष्टो मय्यभिपततीत्यन्वयः । जिह्मिता वक्रिता ध्माता शब्दिता च कुक्षिर्येनेत्यर्थः ॥ १२ ॥ स्खलतीति । हरिणीप्लुता छन्दः । स्पष्टम् ॥ १३ ॥

शोध०—(४७) एत्वेत्वार्यः । इममधिकरणमण्डपं प्रविशत्वार्यः ।

---

१ विंनिहत H. २ शुष्क D. ३ जिम्हता० G. ४ ते H. ५ तावत् om. B (a). ६ महामृत्युं घोरं B (a), मेहोमृत्युघोरं (?) H. ७ अधिअलण° AB (abcd) DE. ८ मण्ड marg. पं B (d).

चिन्तासक्तनिमग्नमन्त्रिसलिलं[1], दूतोर्मिशङ्खाकुलं,
पर्यन्तस्थितचार[2]नक्रमकरं, नागाश्व[3]हिंस्रा[4]श्रयम् ।
नानावाशक[5]कङ्कपक्षिरुचिरं, कायस्थसर्पास्पदं,
नीतिक्षुण्णतटं, च राजकरणं[6] हिंस्रैः समुद्रायते ॥१४॥

भवतु । प्रविशञ्शिरोघातमभिनीय सवितर्कम् । अहह इदमपरम् ।
सव्यं मे स्पन्दते[7] चक्षुर्विरौति[8] वायसस्तथा ।
पन्थाः सर्पेण रुद्धोयं स्वस्ति[9] चास्मासु दैवतः[10] ॥ १५ ॥

तावत्प्रविशामि । इति प्रविशति ।

अधिकरणिकः[11] । अयमसौ चारुदत्तः । य एषः

---

चारु०—चिन्तेति । राजकरणमधिकरणम् । क्वचित्तु राजभवनमिति पाठः स्फुट एव । तद्धिंस्रैर्हिंसारुचिभिर्नरैरुपलक्षितं समुद्रायते । समुद्र इवाचरति समुद्रायते । 'कर्तुः क्यङ्' इति सूत्रेण क्यङ् । चिन्तायामासक्ता निमग्ना मन्त्रिण एव सलिलानि यत्र तत्तथा । दूता 'वकीला' एवोर्मयो महातरंगाः शङ्खाश्च तैराकुलम् । परितः स्थिताश्चारा भटा एव नक्रा मकराश्च यत्र तत् । येषां पादाधस्ताद्बध्या दीयन्ते ते नागा गजा अश्वाश्च त एव हिंस्रास्तेषामाश्रयः स्थानमित्यर्थः । नाना बहुप्रकारा वाशकाः शब्दं कुर्वाणाः कर्णेजयाः(पाः) पिशुना एव कङ्कपक्षिणस्तै रुचिरम् । वाशृ शब्दे धातुः । नीतिरेव क्षुण्णं चूर्णीकृतमुच(च्च)नीचं तटं यत्र तत्तथा । [ शार्दूलविक्रीडितं छन्दः] ॥ १४ ॥ सव्यमिति । अनुष्टुप् । दैवेनेति दैवतोस्मासु स्वस्ति चास्तु ॥ १५ ॥

---

१ सलिल om. D. २ चार० B (b) G. ३ नागाश्च ? B (a); नागश्च B (d). ४ हिंसा० D ५ °वासक D, °वासकंक° H. ६ °भवनं B B (ad) EK. ७ स्पन्दति मे B (ad) ८ विरौति वा० H ९ om. B (a). १० दैवता GK. ११ आधि० D Here as well as throughout the next two pages.

घोणोन्नतं मुख[1]मपाङ्गविशालनेत्रं
नैतद्धि[2] भाजनमकारणदूषणानाम् ।
नागेषु गोषु तुरगेषु तथा नरेषु
नह्याकृतिः सुसदृशं विजहाति वृत्तम् ॥ १६ ॥

चारुदत्तः । भो, अधिकृतेभ्यः स्वस्ति । हंहो[3] नियुक्ता, अपि कुशलं भवताम् ।

अधिकरणिकः । ससंभ्रमम् । स्वागतमार्यस्य । भद्र शोधनक, आर्यस्यासनमुपनय ।

शोधनकः । आसनमुपनीय । एदं[4] आसणं[5] । उवविसदु अज्जो[6] (४८) ।

चारुदत्तः । उपविशति ।

शकारः । सक्रोधम् । आगदेशि[7] ले[8] इत्थि[9]आधादआ आगदेशि । अहो णाए ववहाले । अहो[10] धम्मे ववहाले । जं एदोह[11]

---

घोणोन्नतमिति । घोणा नासोन्नता यं(य)त्र तन्मुखमपाङ्गविशालनेत्रं चास्ति । एतच्चारुदत्तरूपमकारणानां कारणशून्यानां दूषणानां दोषाणां भाजनं पात्रं हीति निश्चयेन नास्ति । आकृतिः स्वरूपं सुसदृशं स्व(स्वा)नुरूपं वृत्तमाचरणम् । [ वसन्ततिलकं वृत्तम् ] ॥ १६ ॥

शोध०--( ४८ ) एतदासनम् । अत्रोपविशत्वार्यः ।

---

१ मुखमपर्ण० ?H. २ नैतद्धिभाज० AB B (abcd). ३ om. B (a). ४ एदे B (b). ५ आसनं BCFJ. ६ अज्जे AB (c). ७ आगदे शि B. ८ रे AB (abcd) D. ९ इत्थिआ० AB (abcd) CDGJK; figure 2 after घादआ G १० अहो ......हाले om. B (a). ११ जं एष अण्णाह AB (bc); ०एअं अण्णाह B (d); णएअ अंणाह ( =नैतदन्यस्य ) D; जं एअदाह CJ; जं एअं अणाह EK, एअ अण्णाह F; जं एअअणाह G, जं ण अइअं ? H.

इत्थिआघादेआह आशणे दीअदि । सगर्वम् । भोदु । णं
254 दीअदु (४९) ।

अधिकरणिकः । आर्य चारुदत्त, अस्ति भवतोस्या आर्याया दुहित्रा सह प्रसक्तिः प्रणयः प्रीतिर्वा ।

चारुदत्तः । कस्याः ।

अधिकरणिकः । अस्याः । इति वसन्तसेनामातरं दर्शयति ।

255 चारुदत्तः । उत्थाय । आर्ये, अभिवादये ।

वृद्धा । जाद, चिरं मे जीव । स्वगतम् । अअं सो चारुदत्तो । सुणिक्खित्तं क्खु दारिआए जोव्वणं ( ५० ) ।

अधिकरणिकः । आर्य, गणिका तव मित्रम् ।

चारुदत्तः । लज्जां नाटयति ।

---

शका०–( ४९ ) आगतोसि रे स्त्रीघातक आगतोसि । अहो न्यायो(य्यो) व्यवहारो । अहो धर्मो(र्म्यो) व्यवहारो । यदेतदन्यस्य स्त्रीघातकस्यासनं दीयते । सगर्वम् । भवतु । ननु दीयताम् ।

वृद्धा– ( ५० ) तात, चिरं मे जीव । अयं स चारुदत्तः । सुनिक्षिप्तं खलु दारिकया यौवनम् ।

---

१ इत्थिअ AB (ac) CDFJK ; इत्थियो B (b); इश्तिआ B (d), इश्तिया E; इक्खिआ G. २ घादुकाइ AB (bcd) EGK, घातुका° DFH, घादकाइ J. ३ दिज्जादि B (a). ४ सगव्वम् AB (bc) K , सगच्छं pr. m. corr. सगव्वम् B (d). ५ om. B (d). दीयदु twice G ६ प्रसक्तः B B (abd) GK ; प्रक्तः E. ७ चिरे ? AB (bc) C; pr. m correct चिरं B (d). ८ om. K. ९ °खित्तं AB (bc). १० दारियाए B (b). ११ This direction and next speech of शकार om. H.

शकारः ।

लज्जाए[1] भीलुदाए वा
　चालित्तं अलिए[2] णिगूहिदुम्[3] ।
शअं[4] मालिअ[5] अत्थकालणाए[6]
　ण्णिगूहदिणं तं हि[7] भट्टके[8] ॥ १७ ॥(५१)

श्रेष्ठिकायस्थौ । अज्ज चारुदत्त, भणाहि । अलं लज्जाए । ववहारो क्खु एसो (५२) ।

चारुदत्तः । सलज्जम्[9] । भो अधिकृता[10], मया कथमीदृशं वक्तव्यं यथा गणिका मम मित्रमिति । अथवा यौवनमत्रापराध्यति न चारित्र्यम्[11] ।

---

शका०-(५१) [लज्जाए इति ।] लज्जयाथ वा भीरुतया वा चारित्रमलीकं निगूहितुं स्वयं स्त्रीं मारयित्वार्थकारणाय निगूहति न तद्धीं(द्धि) भट्टकः [वैतालीयं छन्दः] ॥ १७ ॥

श्रे० का०-(५२) आर्य चारुदत्त, भण । अलं लज्जया । व्यवहारः खल्वेषः ।

---

१ लज्जाए आदु भीलु० B (a) DEFGK. २ अलीए B (abcd). ३ निगूहिदुं ? B (bc), णिगूहदु B; णिगूहिदुं B (a), णिगूहीदुं B (d); णिगूहिदुं E; णिगूदुि K. ४ सअं B (a) D, सयं B (b) EK. ५ इत्थिअं मालिय B (a) DE; इत्थिए मालि० G; इत्थिअं मालिअ K. ६ अत्थकालणाए णिगूहादि B (a) DGJK which has अच्छ for अत्थ; °णणिगेण्हादि B. ७ तं ण भ० B; नतं भ० B (a), न तं हि० C; नातं भ० B (b): णाहि भ० K. ८ भट्टको AB (bc), भट्टके B (a) CJ, भट्टके B (d) E; भरटको F, नट्टके K. ९ om. B. १० °कृते AB; (bcd) G, °कृत K. ११ °त्रम् B (bd) EK.

**अधिकरणिकः**[1] ।

व्यवहारः सविशेयं[2] त्यज लज्जां हृदि स्थिताम् ।
ब्रूहि सत्यमलं धैर्यं छलमत्र न गृह्यते ॥ १८ ॥

अलं लज्जया । व्यवहारस्त्वां पृच्छति ।

**चारुदत्तः** । अधिकृत[3], केन सह मम व्यवहारः ।

**शकारः** । साटोपम्[4] । अले[5] मए शह ववहाले ( ९३ )।

**चारुदत्तः** । त्वया सह मम व्यवहारः सुदुस्सहः ।

**शकारः** । अले[6] इत्थिआघादआ[7], तं[8] तादिशिं लअण[9]-शदभूशणिअं[10] वशन्तशेणिअं मालिअ शम्पदं कवडकावडिके[11] भविअ[12] णिगूहेशि[13] (९४) ।

**चारुदत्तः** । असंबद्धः खल्वसि ।

**अधिकरणिकः** । आर्य चारुदत्त, अलमनेन । ब्रूहि सत्यम् । अपि गणिका तव मित्रम् ।

**चारुदत्तः** । एवमेव[14] ।

---

अधि०– व्यवहार इति। अनुष्टुप् । स प्रसिद्धः । शास्त्रे लोके चेत्यर्थः ॥ १८ ॥

शका०–( ९३ ) अरे मया सह व्यवहारः ।

शका०–( ९४ ) अरे स्त्रीघातक, तां तादृशीं रत्नं(त्न)शतभूषणां वसन्तसेनां मारयित्वा साम्प्रतं कपटकापटिको भूत्वा निगूहसि ।

---

१ आधि० D; From आधि० to मम व्यवहारः (L. 274) om. E. २ सविश्रेयं AB (c) FG; ०प्रायं DH. ३ ०कृते B (a). ४ om. AB (bcd) D. ५ अए B, अये B (bd), ववहालो AB (c). ६ अए BK; Om. B (a); अये DH; ओषे G. ७ इत्थिआ० AB (abc) CDGJK; इत्थिघादआ B (d). ८ om. B B (a); तंतादिं D. ९ लयण K. १० भूषणिअं AB (bc) K; भूषणीअं B (d), भूषिअं DH. ११ ०काचाडिके K. १२ भाविअ G. १३ °सि D. १४ ०वम् B. DFGK; From this to ब्रवीमि (L. 288) om: G.

अधिकरणिकः । आर्य, वसन्तसेना क्व ।

चारुदत्तः । गृहं गता ।

श्रेष्ठिकायस्थौ । कधं गदा, कदा गदा, गच्छन्नी[1] वा केण अणुगदा (९५) ।

चारुदत्तः । स्वगतम् । किं प्रच्छन्नं गतेति ब्रवीमि ।

श्रेष्ठिकायस्थौ । अज्ज, कधेहि (९६) ।

चारुदत्तः । गृहं गता । किमन्यद्ब्रवीमि ।

शकारः । मम केलेकं[2] पुष्फकलण्डकजिण्णुज्जाणं[3] पवेशिअ अत्थणिमित्तं बाहुपाशबलक्कालेण मालिदा । अए शम्पदं वदाशि घलं गदे त्ति (९७) ।

चारुदत्तः । आः असंबद्धप्रलापिन्,

अभ्युक्षितोसि सलिलैर्न[4] बलाहकानां
चाषाग्रपक्षसदृशं[5] भृशमन्तराले[6] ।

---

श्रे० का०–( ९५ ) कथं गता, कदा गता, गच्छन्ती वा केनानुगता ।

श्रे० का०–( ९६ ) आर्य, कथय ।

शका०–( ९७ ) मदीयं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्यार्थनिमित्तं बाहुपाशबलात्कारेण मारिता । अये साम्प्रतं वदसि गृहं गतेति ।

चारु०– अभ्युक्षितोसीति । चाषस्य पक्षिणः पक्षाग्रं तत्सदृश-

---

१ गच्छन्दी DH. २ केरक B (a); केवलं H. ३ करण्डक AB (abc) E; करण्ड B (d), करण्डअ D. ४ om. E. ५ चापाग्र AB (cd) F; बाष्पाग्र? K. ६ मन्तरा ते BEK; मन्तरालं D.

मिथ्यैतदाननमिदं भवतस्तथाहि
हेमन्तपद्ममिव निष्प्रभतामु[1]पैति ॥ १९ ॥

**अधिकरणिकः ।** जनान्तिकम् ।

तुलनं चाद्रिराजस्य समुद्रस्य च तारणम् ।
ग्रहणं चा[2]निलस्येव चारुदत्तस्य दूषणम् ॥ २० ॥

प्रकाशम् । आर्यचारुदत्तः खल्वसौ । कथमिदमकार्यं[3] करिष्यति । घोणेत्यादि (पृ० ३९९ श्लो० १६) पठति । [4]

**शकारः ।** किं पक्खवादेण ववहाले दीशदि[5] (९८) ।

**अधिकरणिकः[6] ।** अपेहि[7] मूर्ख ।

वेदार्थान् प्राकृत[8]स्त्वं वदसि न च ते जिह्वा निपतिता[9]
मध्याह्ने वीक्षसेर्कं[10] न[11] तव सहसा दृष्टिर्विचलिता ।

---

मपि मेघानां बिन्दुभिर्नाभ्युक्षितः सिक्तोसि । उक्ष सेचने । अन्तराले गगने । सर्वं मिथ्या वदसि । अतः पापिनस्ते मुखं मलिनमित्याह । मिथ्यैतदाननमित्यादिना । [ वसन्ततिलकं छन्दः ] ॥ १९ ॥

अधि०—अकृतपापस्य सप्रभं मुखमिदं दृश्यतेतश्चारुदत्तस्य दूषणमसंभवमस्तमित्याह । तुलनमिति ॥ २० ॥ घोणेत्यादीति 'घोणोन्नतं मुखम्' इति श्लोकमित्यर्थः ।

शका०—(९८) किं पक्षपातेन व्यवहारो दृश्यतां(ते)।

अधि०—वेदार्थानिति । प्राकृतो नीचः । असौ पाणिः । देहं हरति भूरिति भूमिर्विदीर्य कुतो न त्वां गिलतीत्यर्थः । [ सुमधुरा वृत्तम् ] ॥ २१ ॥

---

१ निःप्रभता K. २ वानिलस्ये० E. ३ कथमकार्यं B B (a) ४ om:. AB (c) DF. ५ दीसदि G. ६ ओधि° D. ७ अवेहि B (abd) DEG. ८ कृतं त्वं ? K. ९ निपततति K. १० बीक्ष्यसे° B (d), °संर्कं K. ११ तव न B (a)

दीप्तेऽग्नौ[1] पाणिमन्तः क्षिपसि स[2] च ते दग्धो भवति नो
चारित्र्याच्चारुदत्तं चलयसि[3] न ते देहं हरति भूः॥२१॥

आर्य[4]चारुदत्तः कथमकार्यं[5] करिष्यति।

कृत्वा समुद्रमुदकोच्छ्रयमात्रशेषं
दत्तानि येन हि धनान्यनपेक्षितानि[6]।
स श्रेयसां कथमिवैकनिधिर्महात्मा[7]
पापं करिष्यति धनार्थमवैरिजुष्टम्[8]॥ २२ ॥

शकारः। किं पक्खवादेण ववहाले दीशदि[9] (५९)।

वृद्धा। हदास,[10] जो दाणिं णासीकदं[11] सुवण्णभण्डअं रत्तिं[12] चोरेहिं अवहदं[13] त्ति तस्स कारणादो[14] चदुस्समुद्दसारभूदं रअणावलिं देदि सो दाणिं अत्थकल्लवत्तस्स[15] कारणादो[16] इमं अकज्जं करेदि। हा जादे,[17] एहि मे पुत्ति[18] (६०)। इति रोदिति[19]।

---

कृत्वेति। उदकेनोदकस्य वोच्छ्रय उच्चतैव शेषो यस्य तं समुद्रं समुद्रस्योदकमहत्तयैव महत्त्वं न पुनः संपद्भिरित्यर्थः। यद्वीरैर्न जुष्टं सेवितं पापम्। [ वसन्ततिलकं वृत्तम् ]॥ २२ ॥

शका०–( ५९ ) किं पक्षपातेन व्यवहारो दृश्यते।

वृद्धा–( ६० ) हताश, य इदानीं न्यासीकृतं सुवर्णभाण्डं रात्रौ चौरैरपहृतमिति तस्य कारणाच्चतुःसमुद्रसारभूतां रत्नावलीं ददाति स इदानीमर्थकल्यवर्तस्य कारणादिदमकार्यं करोति। हा जाते, एहि मे पुत्रि।

---

१ दीप्ताग्नौ? H. २ न च ते तत्क्षणं दह्यतेऽसौ BDEFK. ३ छलयसि K. ४ आर्य corr. अयं B (d). ५ कथमयमकार्यं AB (bcd) DEFG; कथमकार्यमयं K. J. ६ °न्यनिपेक्षितानि H, °न्यपेक्षितानि J. ७ °र्यदात्मा K. ८ °मवीरजु° G, °मवैरिजुष्टम् AB (bc) J. ९ दीसदि A. १० हदाश AB (abc). ११ °किदं B (a), णाशीकद D. १२ रत्तिचो° DH. १३ °दत्ति BG; °वदंति H. १४ काल° AB (abc) D, कारणा om. दो B (d); कालणा E. १५ अत्थकारणादो B, अत्थकाल° B (a). १६ कारणा E; कालणा K. १७ जाद B B (ad) EK. १८ पुत्त G. १९ रोदति J.

अधिकरणिकः । आर्य चारुदत्त, किमसौ पद्भ्यां गतोत प्रवहणेनेति ।

चारुदत्तः[1] । ननु मम प्रत्यक्षं न गता । तन्न जाने किं पद्भ्यां गतोत प्रवहणेनेति ।

प्रविश्य सामर्षो[2]

वीरकः[3] ।

पादप्पहारपरिभवविमाणणा[4]बद्ध[5]गरुअ[6]वेरस्स ।
अणुसोअन्तस्स[7] ईयं[8] कधं पि[9] रत्ती[10] पभादा मे ॥ २३ ॥

ता जाव अधिअरणमण्डवं उवसप्पामि[11] । प्रवेष्टकेन[12] । सुहं अज्जमिस्साणं (६१) ।

अधिकरणिकः[13] । अये, नगररक्षाधिकृतो वीरकः । वीरक[14], किमागमनप्रयोजनम् ।

वीरकः । ही[15] ही बन्धणभेअणसम्भमे[16] अज्जकं[17] अण्णे[18]-

वीर०–(६१) पादप्पहारेति । आर्या च्छन्दः । पादप्रहारपरिभवविमाननाबद्धगुरुकवैरस्य । अनुशोचत इयं कथमपि रात्रिः प्रभाता मे ॥ २३ ॥ तद्यावदधिकरणमण्डपमुपसर्पामि । सुखं शुभमिति वार्यमिश्राणाम् ।

वीर०–(६२) ही ही बन्धनभेदनसंभ्रमे आर्यकमन्वेषयन्नपवारितं प्रवहणं व्रजतीति विचारं कुर्वन्नन्वेषयन् अरे, त्वयाप्यालोकितं मयाप्यालोकितव्यमिति भणन्नेव चन्दनमहत्तरकेण पादेन ता-

१ Whole speech om. B (a). २ मामर्शोक B (a), सामर्शो B (d) K. ३ वीरकः twice H. ४ विमाणिणा DH. ५ लद्ध(=लब्ध B B (abd) ६ गुरुअ D ७ °सो अअं तस्स B (a). ८ इअं B B (d) DH. ९ वि B (d); वि D. १० रत्ति H. ११ उव° om. B (a). १२ पविष्ट० B B (abd) EHK. १३ आधि० D. १४ om. B (d). १५ om. AB (c) J. १६ बन्धणभइं अज्जकं K; ०भअण० D, ०संभवे G. १७ अकज्जं B (a); अज्जाकं B (b). १८ अंणे० H.

सन्तो [1]ओवाडिदं पवहणं [2]वेच्चदि त्ति विआरं [3]करन्तो अण्णेसन्तो अरे, तुए वि आलोइदे मए वि [4]अलोइदव्वो त्ति भणन्तो ज्जेव्व चन्दणमहत्त[5]रएण पादेण ताडिदो म्हि । एदं सुणिअ अज्जमिस्सा पमाणं (६२) ।

अधिकरणिकः । भद्र, जानीषे कस्य तत्प्रवहणमिति ।

वीरकः । [6]इमस्स अज्जचारुदत्तस्स । वसन्तसेणा [7]आरूढा [8]पुप्फकरण्डकजिण्णुज्जाणं [9]कीलिदुं [10]णीअदित्ति पवहणवाह[11]एण कहिदं (६३) ।

शकारः । पुणो वि [12]शुदं अज्जेहिं[13] (६४) ।

अधिकरणिकः ।

एष भो निर्मलज्योत्स्नो[14] राहुणा ग्रस्यते शशी ।
[15]जलं कूलावपातेन प्रसन्नं कलुषायते ॥ २४ ॥

---

डितोस्मि । एतच्छ्रुत्वार्यमिश्राः प्रमाणम् ।

वीर०—(६३) अस्यार्यचारुदत्तस्य । वसन्तसेनारूढा पुष्पकरण्डकजीर्णोद्यानं क्रीडितुं नीयत इति प्रवहणवाहकेन कथितम् ।

शका०—(६४) पुनरपि श्रुतमार्यैः ।

अधि०— एष भो इति । अनुष्टुप् । एष चारुदत्तः । अप्रस्तुतप्रशंसालंकारः ॥ २४ ॥

---

१ ओव्वाडि० AB (bcd) F; ओशारिअं B; सुओव्वाडिदं E; अणुग्घाडिदं K. २ वज्जदि B (a). वट्टदि K. ३ करेन्तो K. ४ अलो० CJ. ५ ०त्तलएण AB (abcd) DE. ६ इदमस्स B (a). ७ आउढा AB (c). ८ पुप्प° B (b). ९ कालिदुं E. १० णिअदि E. ११ वाहुएण H. १२ सुदं AB (abcd) D. १३ अज्जमिस्शेहिं B B (a). १४ °ज्योओ E. १५ अलं DF.

वीरक, पश्चादिह भवतो न्यायं द्रक्ष्यामः । यं[1] एषोऽधिकरण[2]द्वार्यश्वस्तिष्ठति तमेनमारुह्य गत्वा पुष्पकरण्डकोद्यानं दृश्यतामस्ति तत्र काचिद्वि[4]पन्ना स्त्री न वेति ।

वीरकः । जं[5] अज्जो आणवेदि । इति निष्क्रान्तः । प्रविश्य च[6] । गदोम्हि तहिं । दिट्ठं च मए इ[7]त्थिआकलेवरं सा[8]वदेहिं विलु[9]प्पन्तं (६५) ।

श्रेष्ठिकायस्थौ । कधं तुए जाणिदं इत्थिआक[10]लेवरं त्ति (६६) ।

वीरकः । सा[11]वसेसेहिं के[12]सहत्थपाणिपादेहिं उ[13]वलक्खिदं मए ( ६७ ) ।

अधिकरणिकः । अहो धिक् वैषम्यं लोकव्यवहारस्य ।

यथा यथेदं निपुणं विचार्यते
तथा त[14]था संकटमेव दृश्यते ।

---

वीर०–( ६५ ) यदार्य आज्ञापयति । गतोऽस्मि तत्र । दृष्टं च मया स्त्रीकलेवरं श्वापदैर्विलुप्तम् ।

श्रेष्ठी(ष्ठि)०– ( ६६ ) कथं त्वया ज्ञातं स्त्रीकलेवरमिति ।

वीर०– ( ६७ ) सावशेषैः केशहस्तपाणिपादैरुपलक्षितं मया ।

अधि०–यथेति । व्यवहारस्य न्यायस्य नीतयः सुसन्नाः ।

---

१ om. B (a). २ °करणे BFG. ३ तत्रास्ति G. ४ स्त्री विपन्ना B B (a). ५ From this to कलेवरं त्ति ( L. 351 ) om: E. ६ om: B (d). ७ इत्तिआ°AB (c) D ; इच्छिआ° B (d) K. ८ साहदे° H. ९ विलुप्पं AB (c) DF; विलुम्पन्तं B (d) K. १० कलेवरत्ति DK. ११ सावसेहिं D. १२ °पाणिपादएहिं AB (bcd) DEFG ; पाणिबादेहिं B (a) K. १३ उप० B (d) EK. १४ om. B (d).

अङ्गा सुसन्ना व्यवहारनीतयो
गतिस्तु गौः पङ्कगतेव सीदति ॥ २५ ॥

**चारुदत्तः ।** स्वगतम् ।

यथैव पुष्पं प्रथमे विकाशे
समेत्य पातुं मधुपाः पतन्ति ।
एवं मनुष्यस्य विपत्तिकाले
छिद्रेष्वनर्था बहुलीभवन्ति ॥ २६ ॥

**अधिकरणिकः ।** आर्य चारुदत्त, सत्यमभिधीयताम् ।

**चारुदत्तः ।**

दुष्टात्मा परगुणमत्सरी मनुष्यो
रागान्धः परमिह हन्तुकामबुद्धिः ।
किं यो यद्वदति मृषैव जातिदोषा-
तद्ग्राह्यं भवति न तद्विचारणीयम् ॥२७॥

अपि च ।

योऽहं लतां कुसुमितामपि पुष्पहेतो-
राकृष्य नैव कुसुमावचयं करोमि ।

---

यत्प्राप्तं तत्कर्तव्यमेवेत्यर्थः । अत एवाह । मतिरिति । ब्राह्मणत्वादपी-त्यर्थः । [वंशस्थमिदं छन्दः] ॥ २५ ॥

चा०– यथैवेति । पुष्पं पातुं पतन्ती (ती) त्यन्वयः । [ उपजा-तिछन्दसा श्लोकः ] ॥ २६ ॥

अधि०– दुष्टात्मेति । प्रहर्षिणी च्छन्दः । स्पष्टम् ॥ २७ ॥ योऽहमिति । [वसन्ततिलकं वृत्तम्] ॥ २८ ॥

---

१ यो वदति G.

मोहं कथं भ्रमरपक्षरुचौ सुदीर्घे
केशे प्रगृह्य[१] रुदतीं प्रमदां निहन्मि ॥ २८ ॥

**शकारः** । हंहो अधिअलणभोइआ[२], किं तुम्हे पक्खवादेण ववहालं पेक्खध । जेण अज्ज वि एशो हदाशचालुदत्ते[३][४] आशणे धालीअदि[५] (६८) ।

**अधिकरणिकः** । भद्र शोधनक, एवं क्रियताम् ।

शोधनकस्तथा करोति ।

**चारुदत्तः** । विचार्यतां भो अधिकृताः[६], विचार्यताम् ।

इत्यासनादवतीर्य भूमावुपविशति ।

**शकारः** । स्वगतम् । सहर्षं नर्तित्वा । ही अणेण[७][८] मए कडे पावे अण्णश्श[९] मश्तके[१०] णिवडिदे[११] । ता जहिं चालुदत्ताके[१२] उवविशेदि[१३] तहिं हग्गे[१४] उवविशामि । तथा कृत्वा । चालुदत्ता[१५], पेक्ख पेक्ख[१६] मं । ता भण भण[१७] मए मालिदे त्ति[१८] (६९) ।

---

शका०—(६८) हंहो अधिकरणभोजकाः, किं युष्माकं (यूयं) पक्षपातेन व्यवहारं पश्यत । येनाद्याप्येष हताशचारुदत्त आसने धार्यते ।

शका० – (६९) ही अनेन । मदीयच्छद्मकरणेनेत्यर्थः । मया कृतं पापमन्यस्य मस्तके निपतितम् । तद्यत्र चारुदत्त उपविशति तत्राहमुपविशामि । चारुदत्त, पश्य माम् । तद्भण भण मया मारितेति ।

---

१ विगृह्य B B (abd) K. विग्रह्य E. २ आधि० D. ३ हदास D; हदाशे K. ४ चारुदत्ते D. ५ धालदि E. ६ अधिकृते B (a). ७ om: D. ८ अण्णेण० B ९ om: B (d) E. १० मत्थके AB (bc) G, मण्चथके B (a); मस्तके B (d). ११ णिवडिदे CJ. १२ चालुदत्ते B (d); चारुदत्त K. १३ विशेदि K. १४ हगे AB (bcd) DEK. १५ चारुद० DEK. १६ om E. १७ om: B (a). १८ माडिदेत्ति AB (c) DF; मालिदत्ति B, माडिदत्ति B (abd) EGK.

**चारुदत्तः** । भो अधिकृताः, दुष्टात्मेति पूर्वोक्तं (श्लो० २७) पठति । सनिश्वासं स्वगतम् ।

मैत्रेय भोः, किमिदमद्य ममोपघातो
हा ब्राह्मणि[१], द्विजकुले[२] विमले प्रसूता ।
हा रोहसेन, नहि पश्यसि मे विपत्तिं
मिथ्यैव नन्दसि परव्यसनेन[३] नित्यम् ॥ २९ ॥

प्रेषितश्च मया तद्वार्त्तान्विषणाय मैत्रेयो वसन्तसेनासकाशं शाकटिकानिमित्तं च । तस्य प्रदत्तान्यलंकरणानि प्रत्यर्पयितुम्[४] । तत्कथं चिरयते ।

ततः प्रविशति गृहीताभरणो विदूषकः ।

**विदूषकः** । पेसिदोम्हि अज्जचारुदत्तेण वसन्तसेणास[५]आसं तहिं अलंकरणाइं[६] गेण्हिअ । जधा अज्ज मित्तेअ, वसन्तसेणाए वच्छो[७] रोहसेणो अत्तणो[८] अलंकारेण अलंकरिअ[९] जणणीसआसं पेसिदो । इमस्स आहरणं दादव्वं ण उणो[१०] गेण्हिदव्वं । ता

---

चारु०— विदूषकं मित्रं स्मृत्वाह । मैत्रेयेति । धूतानाम्नीं पत्नीं स्मृत्वाह ब्राह्मणीति । रोहसेनः पुत्रः । परेण व्यसनेनोपलक्षितोपि त्वं नित्यं मिथ्यैव नन्दसि । [पूर्वोक्तं छन्दः] ॥ २९ ॥

विदू०— (७०) प्रेषितोस्म्यार्यचारुदत्तेन वसन्तसेनासकाशं तत्रालंकरणानि गृहीत्वा । यथार्य मैत्रेय, वसन्तसेनाया(नया) वत्सो रोहसेनोलंकारेणालंकृत्य जननीसकाशं प्रेषितः । अस्या [आ] भरणं दातव्यं न पुनर्गृहीतव्यम् । तत्समर्पयेति । तद्यावद्वसन्तसेनासकाशमेव

---

१ ब्राह्मणी K. २ निजकुले K. ३ परिव्यसनेन B (d). ४ प्रत्यर्पितुम् DH. ५ वसन्तसेना E. ६ °करणानि B (d) GK. ७ वत्स DA. ८ om: AB (bc)D. ९ अलंकिदो K. १० om: E.

समप्पेहि त्ति । ता जाव वसन्तसेणासआसं ज्जेव्व गच्छामि । परिक्रम्यावलोक्य चाकाशे । कधं भाव रेभिलो । भो भाव रेभिल, किं णिमित्तं तुमं उव्विग्गो उव्विग्गो विअ लक्खीअसि । आकर्ण्य । किं भणासि पिअवअस्सो चारुदत्तो अधिअरणमण्डवं सद्दावीआदि त्ति । ता णं हु अप्पेण कज्जेण होदव्वं । विचिन्त्य । ता पच्छा वसन्तसेणासआसं गमिस्सं । अधिअरणमण्डवं दाव गमिस्सं । परिक्रम्यावलोक्य च । इदं अधिअरणमण्डवं । ता जाव पविसामि । प्रविश्य । सुहं अधिअरणभोइआणं । कहिं मम पिअवअस्सो (७०) ।

अधिकरणिकः । नन्वेष तिष्ठति ।

---

गच्छामि । अस्य रोहसेनस्य दातव्यमाभरणं त्वया गृ(ग्र)हीतुं योग्यं नेत्यर्थः । रोहसेनखेलनमृच्छकटिकापूरितानीमानीभूषणानि वसन्तसेनयेत्यादि स्मरणीयम् । तेषामेषां बहुत्वात्प्रत्यर्पणम् । वसन्तसेनया तु सुवर्णशकटिकायै रुदतो रोहसेनस्य लालनं कृतमित्यादि ध्येयम् । किंनिमित्तं त्वमुद्विग्न उद्विग्न इव लक्ष्यसे । किं भणसि प्रियवयस्यश्चारुदत्तोधिकरणमण्डपं सद्दावीआदि आहूयते इति । तन्न खल्वल्पेन कार्येण भवितव्यम् । तत्पच्छा पश्चात् । वसन्तसेनासकाशं गमिष्यामि । अधिकरणमण्डपं तावद्गमिष्यामि । अयमधिकरणमण्डपः । तद्यावत्प्रविशामि । सुखमधिकरणभोजकानाम् । कुत्र मम प्रियवयस्यः ।

---

१ च om. B B (ad). २ कथं B (a). ३ रेभिलः AB (abcd). ४ निमित्तं AB (c). ५ उपा(उण)तुमं B (a). ६ उव्विग्गाड॰ AB (bc) G. उविग्गो B (d). ७ उविग्गो B (d) om. DHK ८ om: B B (a). ९ अज्जचारुदत्तो BB (a). १० ॰अधिअरणं B B (a) ११ सद्दावीअत्ति B (d); संद्दावीअति E. १२ णहुप्पेण D. १३ ॰गेहं B B (a) १४ ॰भोईआणं H. * One leaf from this missing E.

विदूषकः । वअस्स, सोत्थि दे[1] (७१) ।

चारुदत्तः । भविष्यति ।

विदूषकः । अवि क्खेमं दे (७२) ।

चारुदत्तः । ऐ[2]तदपि भविष्यति ।

विदूषकः । भो वै[3]अस्स, किंणिमि[4]त्तं उ[5]व्विग्गो उव्विग्गो विअ लक्खीअसि । कुदो वा सं[6]ङ्गाइदो (७३) ।

चारुदत्तः । वयस्य,

मया खलु नृशंसेन परलोकमजानता ।
स्त्री रति[7]र्वाविशेषेण शेषमेषोभिधास्यति ॥३०॥

विदूषकः । किँ किम् ( ७४ ) ।

चारुदत्तः । कर्णे । एवमेवम् ।

विदूषकः । को एव्वं भणादि (७५) ।

---

विदू०– ( ७१ ) वयस्य, स्वस्ति ते ।

विदू०– ( ७२ ) अपि क्षेमं ते ।

विदू०– ( ७३ ) भो वयस्य, किंनिमित्तमुद्विग्न उद्विग्न इव लक्ष्यसे । कुतो वाहूतः ।

चारु०–मया खल्विति । अनुष्टुप् ॥ ३० ॥

विदू०– ( ७४ ) कि( किं किम् ) ।

विदू०–(७५) क एव(वं) भणति ।

---

१ भो B (a), भोदु B (d). २ तदपि D. ३ वअस्स AB (bc) CFJ.• ४ उण after णिमित्तं B B (a). ५ उव्विग B B (ad) G. om. D K. ६ सङ्गाविदो DHK. ७ °श्चाविशेषेण B B (abd) GK. ८ om. B°(d) K. ९ एवभिाति BB (a).

चारुदत्तः । संज्ञया शकारं दर्शयति । नन्वेष तपस्वी हेतुभूतः कृतान्तो मां व्याहरति ।

विदूषकः । जनान्तिकम् । एव्वं कीस ण भणीअदि गेहं गदे त्ति (७६) ।

चारुदत्तः । उच्यमानमप्यवस्थादोषान्न गृह्यते ।

विदूषकः । भो भो अज्जा, जेण दाव पुरट्ठावणविहारारामदेउलतडागकूवजूवेहिं अलङ्किदा णअरी उज्जइणी सो अणीसो अत्थकल्लवत्तकारणादो एरिसं अकज्जं अणुचिट्ठदि त्ति । सक्रोधम् । अरे रे काणेलीसुदा, राअश्शालसण्ठाणआ,

---

•चारु०—कृतान्तो यमराजः । व्याहरान्ति(ति) । वसन्तसेना मया मारितेति वदतीत्यर्थः ।

विदू०—( ७६ ) एव(वं) किमर्थं न भण्यते गृहं गतेति ।

चारु०—अवस्थाया दारिद्र्यरूपायाः । दोषात् ।

विदू०— ( ७७ ) भो भो आर्याः, येन तावत्पुरस्थापनविहारारामदेवालयतडागकूपयूपैरलंकृता नगर्युज्जयिनी सोनीशोऽर्थकल्यवर्तकारणादीदृशमकार्यमनुतिष्ठतीति । पुरस्थापनं पुरावस्थितिः । विहारो जैनमन्दिरम् । आराम उपवनम् । अरे रे काणेलीसुव(त),

---

१ मंज्ञा? J. २ निर्दिशति B B (a). ३ om. B B (a). ४ एदं B B (ad) K. ५ कीश K. ६ गदत्ति BFK; गदेत्ति H. ७ जेन CJ; तेण B (d). ८ जाव D; ताव H. ९ पुरत्तावण AB (c) DF; ०त्थावण B (b). १० विविहा० K. ११ देउल AB (bc); देउलेहिं B B (a). १२ तडागकूवेहिं B B (a), °कूवेहि marg. °वजू B (d). १३ °जूवेहिं सोहिअणअरी &c. K. १४ om. B B (a). १५ उज्जअणी AB B (abcd) FG; उज्जईणी H. १६ om. B B (ad); °अणो(=जन) DH. १७ कलवत्त B (d). १८ काल० K, कारणदो AB (ac); कारणाएरि° B (d). १९ ईदिसं BDG, इदीसं K. २० °चिट्ठदित्ति B (ad). २१ ०साल B; °शाल K.

दुस्संकणआ, किदजणदोसभण्डआ, बहुसुवण्णमोण्डिदमक्कड-आ, भण भण मम अग्गदो। जो दाणिं मम पिअवअस्सो कुसुमिदं माधवीलदं पि आअट्टिअ कुसुमावचअं ण करेदि कदा वि आअट्टिदाए पल्लवच्छेदो भोदि त्ति सो कधं एरिसं अकज्जं उहअलोअविरुद्धं करेदि। चिट्ठ रे कुट्टणिउत्ता, चिट्ठ जाव एदिणा तव हिअअकुडिलेण दण्डअट्ठेण मत्थअं दे सदखण्डं करेमि (७७)।

शकारः। सक्रोधम्। शुणन्तु शुणन्तु अज्जमिश्शा। चालुदत्ताकेण शह मम विवादे ववहाले वा। ता कीश एशे काक-

---

राजश्यालसंस्थानक, दुःशकुन, कृतजनदोषभाण्ड, बहुसुवर्णमण्डितमर्कटक, भण भण ममाग्रतः। य इदानीं मम प्रियवयस्यः कुसुमिता(तां) माधवीलतामप्याकृष्य कुसुमावचयं न करोति कदाप्याकृष्टतया पल्लवच्छेदो भवतीति स कथमीदृश अ(म)कार्यमुभयलोकविरुद्धं करोति। तिष्ठ रे कुट्टिनीपुत्र, यावदेतेन तव हृदयकुटिलेन दण्डकाष्ठेन मस्तकं ते शतखण्डं करोमि।

शका०— (७८) शृण्वन्तु शृण्वन्त्वार्यमिश्राः। चारुदत्तकेन

---

१ दुस्संखणआ AB (abc) FGK; उस्सं° B; उस्सुङ्खलआ J. D २ मण्डआ AB (abc) D (=भाण्ड AB (c); भण्डणआ G. ३ मंडिदा मक्क H; om: K. ४ मक्कडअ AB (bc) D. ५ नण मम? K. ६ °लदं बि B (a) H. ७ आअंविअ BF (=आकृष्य AB (c); आअड्डीअ B (b), आवविअ H, आआरिअ K. ८ चयं AB (bc) K. ९ आअधत्ताए AB (c) F (=आकृष्टतया); आअट्टदाए B (a) DH, °ट्टताए B (b) G; अअवत्ताए K. १० छेऊ AB (c), छेओ B (bd) DFH K. ११ एसं (रि om.) B (a); इदीसं K. १२ कुट्टिणि B (a) D; उट्टणि G. १३ चिट्ठचिट्ठ BB (a); om. AB (bcd) D. १४ °कट्ठे० B (a) D. १५ मछअं B (d) H. १६ सुणन्तु० AB (abcd) K; सुणंदु DH. १७ °मिस्सा AB (abcd) K. १८ चारु° AB (abc) DK. १९ सह H. २० मह K.

पदशीशमेश्तका मम शिले शदखण्डे कलेदि। मा दाव। ले दाशीए उत्ता, दुश्टबडुवका (७८)।

विदूषकः। दण्डकाष्ठमुद्यम्य पूर्वोक्तं पठति।

शकारः। सक्रोधमुत्थाय ताडयति।

विदूषकः। प्रतीपं ताडयति।

अन्योन्यं ताडयतः। विदूषकस्य कक्षादेशादाभरणानि पतन्ति।

शकारः। तानि गृहीत्वा दृष्ट्वा ससाध्वसम्। पेक्खन्तु पेक्खन्तु अज्जा। एदे क्खु ताए तवस्सिणीए केलका अलंकाला। चारुदत्त-

---

सह मम विवादो व्यवहारो वा। (ता) तत्। किमर्थमेष काकपदशीर्षमस्तको दुष्टबटुवको मम शिरः शतखण्डं करोति। मा तावत्। रे दास्याः पुत्र, दुष्टबटुवक।

विदू०-पूर्वोक्तं भो भो अज्जा इति। अरे रे काणेलीसुतेत्यादि च।

शका०-(७९) पश्यन्तु पश्यन्त्वार्याः। एते खलु तस्यास्तपस्विन्या अलंकाराः। तस्या वसन्तसेनायाः। (तपस्विन्याः) शोच्यायाः। केलका तदीया इत्यर्थः। अस्य चारुदत्तस्य। अर्थकल्यवर्तस्य कारणाय। एषा मारिता व्यापादिता च। एषा वसन्तसेनेत्यर्थः।

---

१ °मस्तका AB (bcd) K; मन्थका B (a) J; मत्थआ DH. After this add दुट्टबटुका AB (c) FG, दुत्थवदट्टका B (b), दुडुव्वडुवका B (d). उड्डवडुआ DH. २ मए B (a) K. ३ शीशे B (d). ४ ०खण्डं B (a). ५ कलेशि B B (a). ६ भले D. ७ दासीपुत्ता G. ८ दुड AB (abcd) DGJK. ९ °वटुका AB (c); °वडुट्टका B (b); °वदुव्वका B (d); °वडुआ D; °वडुका K. १० For पूर्वोक्तं &c -एदिणा तव &c. last page D. ११ From धमुत्या.. ध्वसम् (L 447) om: B (a). १२ कक्ष DJ. १३ om: B B (abd) GK; पेक्खंदु पे० DH. १४ तवस्सीए AB (bc); तवस्सिणीए DH. १५ °कारा BDK.

मुद्दिश्य । इमश्शे[१] अत्थकल्लवत्तश्श कालणादो[२] एशा मालिदा वावादिदा अ (७९) ।

अधिकृताः[३] सर्वेऽधोमुखाः स्थिताः ।

**चारुदत्तः** । जनान्तिकम् ।

अयमेवंविधे काले दृष्टो[४] भूषणविस्तरः ।
अस्माकं भाग्यवैषम्यात्पतितः पातयिष्यति ॥ ३१ ॥

**विदूषकः** । भो कीसं[५] भूदत्थं ण णिवेदीअदि[६] (८०) ।

**चारुदत्तः** । वयस्य,

दुर्बलं नृपतेश्चक्षुर्नैतत्तत्त्वं निरीक्षते[७] ।
केवलं वदतो दैन्यमश्लाघ्यं मरणं भवेत् ॥ ३२ ॥

**अधिकरणिकः** । कष्टं भोः कष्टम्[८] ।

अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पतेः ।
ग्रहोऽयमपरः पार्श्वे धूमकेतुरिवोत्थितः ॥ ३३ ॥

---

चारु०—अयमेवमिति । अनुष्टुप् । पतितः विदूषककक्षादेशात् । मां पातयिष्यति ॥ ३१ ॥

विदू०— (८०) भो किमर्थं भूतार्थो न निवेद्यते ।

चारु०—दुर्बलमिति । अनुष्टुप् । मया न मारितेति वदतः ॥ ३२ ॥

अधि०—अङ्गारकेति । अङ्गारक(को) मङ्गलस्तेन सह विरुद्धस्य । अङ्गारको विरुद्धो यस्येति सम्यगर्थः । इयमप्रस्तुतप्रशंसालंकृतिः । अङ्गारक इव शकारः । बृहस्पतिवच्चारुदत्तः । विदूषककक्षादेशादलंकारपातो धूमकेतुरिवेत्यादि ध्येयं धीवरैः(?) ॥ ३३ ॥

---

१ ०स्स K. २ कालणा एशा B; काणाए एशा B (d); कालणाए एशा AB (abc) DFG. ३ अधिकृता AB (cd); अधिकरणिकाः B; आधि० B (b). ४ दष्टे (sic.) K. E continues from this. ५ कीश AB (abcd) DEK. ६ णिवेदीयदि AB (bc); °यति K. ७ निरीक्ष्यते? G. ८ om. B (d).

श्रेष्ठिकायस्थौ । विलोक्य वसन्तसेनामातरमुद्दिश्य । अवहिदा दाव अज्जा एदं सुवण्णभण्डअं अवलोएदु सो ज्जेव्व एसो ण वेत्ति (८१) ।

वृद्धा । अवलोक्य । सरिसो एसो । ण उण सो (८२) ।

शकारः । आं वुड्ढकुट्टणि, अक्खीहिं मन्तिदं वाआए मूकिदम् (८३) ।

वृद्धा । हदास, अवेहि (८४) ।

श्रेष्ठिकायस्थौ । अप्पमत्तं केधेहि सो ज्जेव्व एसो ण वेत्ति (८५) ।

वृद्धा । अज्ज, सिप्पिकुसलदाए ओबन्धेदि दिट्ठिं । ण उण सो (८६) ।

---

श्रे० का०–( ८१ ) अवहिता तावदार्यैतत्सुवर्णभाण्डमवलोकतां तदेवैतन्नवेति ।

वृद्धा– ( ८२ ) सदृश एषः । न पुनः सः ।

शका०– ( ८३ ) आं वृद्धकुट्टिनि, अक्षिभ्यां मन्त्रितं वाचा मूकितम् ।

वृद्धा– ( ८४ ) हताश, अपेहि ।

श्रे०का०–(८५) अप्रमत्तं कथय स एवैष न वेति । एषोलंकारः ।

वृद्धा– ( ८६ ) आर्य, शिल्पिकुशलतयावबध्नाति दृष्टिम् । न पुनः सः ।

---

१ om: B B (a). २ अवलोअदु AB (bcd) DEK. ३ Four speeches om: G. ४ विलोक्य B B (a). ५ एसो twice AB (bcd), om: B (a) H. ६ om: B (a); आः B (d); आ EK. ७ °कुट्टिणि B (a) D. ८ अवक्खिहिं DH. ९ मन्दिदं DH. १० Pr. m. मूकिदं corr. शूक्किदं B (d); शूकिदं E. ११ कहेहि D. १२ अज्जा B (b). १३ सिप्थि°? B (a). १४ ओबन्धे दिट्ठिं AB (c) CJ.

अधिकरणिकः । भद्रे, अपि जानास्येतान्याभरणानि ।

वृद्धा । णं भणामि । णं हु ण हु अण्णदो अह्म कदा वि सिप्पिणा घडिदो भवे (८७) ।

अधिकरणिकः । पश्य श्रेष्ठिन्,

वस्त्वन्तराणि सदृशानि भवन्ति नूनं
रूपस्य भूषणगुणस्य च कृत्रिमस्य ।
दृष्ट्वा क्रियामनुकरोति हि शिल्पिवर्गः
सादृश्यमेव कृतहस्ततया च दृष्टम् ॥ ३४ ॥

श्रेष्ठिकायस्थौ । अज्जचारुदत्तस्स केरकाइं एदाइं (८८) ।

चारुदत्तः[12] । न खलु न खलु ।

श्रेष्ठिकायस्थौ । ता कस्स ( ८९ ) ।

---

वृद्धा– ( ८७ ) ननु भणामि । न खलु न खलु अन्यतोऽथ कदापि केनापि शिल्पिना घटितो भवेत् ।

अधि०–वत्स्व(स्त्व)न्तराणीति । कृतहस्तता शिल्पकुशलता हस्तलाघवमित्यर्थः । अत एव 'कृतहस्ततया रिपुकुलमिषुवर्षेणाभिपात्य' इत्युक्तं दशकुमारे (प्रथमोच्छ्वासेपहारवर्मकृते धनमित्रवर्णने) । हस्तशब्देन हस्तादिशिल्पम् । कृतपदेन बहुव्रीहिः ।[वसन्ततिलकमिदं छन्दः] ॥ ३४ ॥

श्रे० का०–(८८) आर्यचारुदत्तस्य केरकाणि तदीयान्येतानि ।

श्रे० का०–( ८९ ) तदा कस्य ।

---

१ एना० B (d) २ ण हु once AB (c) D, णंहु H. ३ अणदो (=अन्यतः) AB (c), अण्णाणदो B (b); अभिणादो B (d); अंणदो H. अणभिजाणिदो J. ण भणिदो K. ४ अहअ B (d). ५ केणावि सि० AB (c) DGK केणवि सि० B (bd). ६ घट्टिदा AB (bc), घडिदा DF; पडिदा H ७ शिल्प०? AB (bc). ८ हत० G. ९ om. B (d) १० केरकाणि AB (bcd) DEFGK. केरणाणि B (a): ११ एदाणि AB (bcd) DEGK; एदानि F. १२ Two speeches om. G.

चारुदत्तः । इहात्रभवत्या दुहितुः ।

श्रेष्ठिकायस्थौ । कधं एदाइं ताए वि[1]ओअं गदाइं (१०)।

चारुदत्तः । एवं गतानि । आं इदम् ।

श्रेष्ठिकायस्थौ । अज्ज चारुदत्त, एत्थ स[2]च्चं वत्त[3]व्वं । पेक्ख पेक्ख ।

सच्चेण सुहं क्खु[4] लब्भइ[5] सच्चाला[6]वि ण होइ[7] पा[8]वं ।
स[9]च्चं त्ति दु[10]वेवि अ[11]क्खरा मा सच्चं अ[12]लिएण गू[13]हेहि ॥३८॥ (११)

चारु०— अत्रभवत्याः पूज्यायाः ।

श्रे० का०—(१०) कथमेतानि तस्या वसन्तसेनायाः वियोगं गतानि ।

चारु०— एवं गतानीति । सुवर्णशकटि(का)यै रोदनं कुर्वन्रोहसेनः समलंकृत्य प्रेषितो वसन्तसेनयेत्यादि सर्वमेवंपदस्यार्थः । आमङ्गीकारे । इदं यदुक्तं तदिदं वृत्तान्तजातमित्यर्थः ।

श्रे० का०—( ११ ) आर्य चारुदत्त, अत्र सत्यं वक्तव्यम् । पश्य पश्य । सत्येनेति । सत्येन सुखं खलु लभ्यते सत्यालापे न भवति पापकम् । सत्यमिति द्वे अप्यक्षरे मा सत्यमलीकेन गूहय । असत्येन सत्यं मा गूहेहि । मा गोपयेत्यर्थः ॥ ३८ ॥

१ विआअं AB (c). २ सव्वं B (a). ३ वत्तस्स? K. ४ om. B (a) ; खु D. ५ लंभइ AB (ac); लंञ (भ?) इ B (b) ; लब्भंइ B (d) H : लहइ G. ६ सच्चालावे AB (bc) DK. ७ होई E. ८ पादइं B ( a ) ; पावए B (d ) EGK. पावं H. पादई J. ९ सच्चंति AB (c) DEG. (=सत्यमिति) AB (c) ; सच्चात्ति B (d) FH. १० वेवि om: दु AB (c) DG. ११ अक्खला AB ( abcd ) D. १२ अलिए B (a), om ण G. १३ गुहेहिं AB (bc) D, णिगुहेहिं B (a).

चारुदत्तः । आभरणान्याभरणानीति । न जाने । किं त्वस्मद्गृहादानीतानीति जाने ।

शकारः । उज्जाणं पवेशिअ पढमं मालेशि । कवडकावडिआए शम्पदं णिगूहेशि (१२) ।

अधिकरणिकः । आर्य चारुदत्त, सत्यमभिधीयताम् ।

इदानीं सुकुमारेस्मिन्निःशङ्कं कर्कशाः कशाः ।
तव गात्रे पतिष्यन्ति सहास्माकं मनोरथैः ॥ ३६ ॥

चारुदत्तः ।

अपापानां कुले जाते मयि पापं न विद्यते ।
यदि संभाव्यते पापमपापेन च किं मया ॥ ३७ ॥

स्वगतम् । न च मे वसन्तसेनाविरहितस्य जीवितेन कृत्यम् । प्रकाशम् । भोः, किं बहुना ।

मया किल नृशंसेन लोकद्वयमजानता ।
स्त्री रतिश्च विशेषेण शेषमेषोभिधास्यति ॥ ३८ ॥

---

चारु०– आभरणानि भूषणानि । इमान्याभरणानि उदरदरीपरिपूरणकरणानीत्यर्थः । इति न जाने । 'डुभृञ्' धारणपोषणयोः ।

शका०– ( १२ ) उद्यानं प्रवेश्य प्रथमं मारयसि । कपटकापटिकतया साम्प्रतं निगूहसि गोपयसि ।

अधि०–इदानीमिति । 'कशा तुरगघातिनी' इति कोशः ॥ ३६ ॥

चारु०–अपापानामिति ॥ ३७ ॥ मया किलेति । 'नृशंसो घात(तु)कः क्रूरः' [इत्यमरः] । एष राजश्यालः । शकार इत्यर्थः ॥ ३८ ॥

---

१ पठमं AB (c); पठमे B (b). २ कडवाकाब० B (d). ३ संपदं D. ४ नि शङ्कं B (a). ५ सदा० B (a) K. ६ खलु B (d). ७ द्वयलोकं B (a); परलोक B (d). ८ रत्नं च B (ad) EK.

शकारः । वावादिदा। अले, तुमं पि[१] भण मए[२] वावादिदेत्ति (१३) ।

चारुदत्तः । त्वयैवोक्तम् ।

शकारः । शुणेध शुणेध भट्टालका[३]। एदेण मालिदा। एदेण ज्जेव्व । शंशए[४] छिण्णे । एदश्श[५] दलिद्दचालुदत्तश्श[६] शालीले[७] दण्डे धालीअदु[८] (१४) ।

अधिकरणिकः । शोधनक, यथाह राष्ट्रियः । भो राजपुरुषाः, गृह्यतामयं चारुदत्तः । राजपुरुषा गृह्णन्ति ।

वृद्धा । प[९]सीदन्तु पसीदन्तु अज्जमिस्सा । जो दा[१०]व चोरेहिं अवहदस्स [११]इत्यादि पूर्वोक्तं पठति । तो[१२] जदि वावादिदा मम दारिआ

---

शका०– ( १३ ) व्यापादिता । अरे, त्वमपि भण मया व्यापादितेति ।

शका०– ( १४ ) शृणुत शृणुत भट्टारकाः । एतेन मारिता। एतेनैव । संशये(यः) छिन्ने(न्नः) । एतस्य दरिद्रचारुदत्तस्य शरीरे दण्डो धार्यताम् ।

वृद्धा–( १५ ) प्रसीदन्तु प्रसीदन्त्वार्यमिश्राः । यस्तावच्चौरैरपहृतस्येत्यादि पूर्वोक्तमिति । हदाश, जो दाणिं णाशीकदं सुवण्णभण्डअं रत्तिं चोरेहिं अपहदं त्ति तस्स कालणादो चदुःसमुद्दसारभूदं रअणावलिं देदि सो दाणिं अत्थकल्लवत्तस्स कालणादो

---

१ वि D. २ om B B (a) ३ भट्टा० AB (abc) CDJK; भश्टालआ B; भट्टालआ B (d) H. ४ शिलए छिणे K: J. ५ एदस्स C. ६ °चालुदत्ताह BDFGK; चारुदत्ताह E. ७ शलीले B (d), शलीले EGK. ८ ण धाली० B B (a) EK; न धाली० B (d) ९ पशी० पसी० J. १० दाणिं B B (a). ११ अवहदंति तस्स &c., whole as given before instead of इत्यादि पुर्वोक्तं &c ??? १२. ता जादि दा° res$_t$ om : B (d).

वावादिदा । जीवेदु मे दीहाऊ । अण्णं च । अत्थिपच्चत्थिण्णं ववहारो । अहं अत्थिणी । ता मुञ्चध एदं (१९) ।

शकारः । अवेहि गब्भदाशि, गच्छ । किं तव एदिणा (९६) ।

अधिकरणिकः । आर्ये, गम्यताम् । हे राजपुरुषाः, निष्क्रामयतैनाम् ।

वृद्धा । हा जाद, हा पुत्तअ (९७)। इति रुदती निष्क्रान्ता ।

शकारः । स्वगतम् । कडं मए एदेश्श अत्तणो शलिशं शम्पदं गच्छामि (९८)। निष्क्रान्तः ।

अधिकरणिकः । आर्य चारुदत्त, निर्णये वयं प्रमाणम् । शेषे तु राजा । तथापि शोधनक, विज्ञाप्यतां राजा पालकः ।

अयं हि पातकी विप्रो न वध्यो मनुरब्रवीत् ।

---

इदं अकज्जं करेदि । इदं पूर्वोक्तमित्यर्थः (पृ० ४०१ वृद्धाभाषणम्)। तदा यदि व्यापादिता मम दारिका व्यापादिता । जीवतु मे दीर्घायुः । अन्यच्च । अर्थिप्रत्यर्थिनोर्व्यवहारः । न चाहमर्थिनी । तन्मुञ्चतैतम् ।

शका०— ( ९६ ) अपेहि गर्भदासि, गच्छ । (किं) तवैतेन ।

वृद्धा— ( ९७ ) हा तात, हा पुत्रक ।

शका०—(९८) कृतं मयैतस्यात्मनः सदृशम् । साम्प्रतं गच्छामीति ।

अधि०—अयं हीति । [अनुष्टुप् । ] श्लोकः ॥ ३९ ॥

---

१ तहावि B B (a). २ जीअदु B ; जीवदु D. ३ अणद्ध K. ४ अत्थिप्पच्च० B B (ad). ५ ववहारे K. ६ ण अ अह AB (bc) DK ; ण अहं B (d) E. ७ अवाहि ? D. ८ °दासि CJ. ९ °तैनम् AB (bcd). १० उत्त B (a); पुत्तआ G. ११ रुदन्ती? D. १२ एदस्स CJ. १३ एसलिसं B (a) ; सलिसं K. १४ सपदं pr. m. corr. सएदं ? B (d). १५ इति निष्क्रा° BDH. १६ °मः B B (a).

राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह ॥ ३९ ॥

शोधनकः । जं अज्जो आणवेदि । इति निष्क्रम्य पुनः प्रविश्य सास्रम् । अज्जा, गेदम्हि तहिं । राआ पालओ भणादि । जेण अत्थकल्लवत्तस्स कारणादो वसन्तसेणा वावादिदा, तं तहिं ज्जेव आहरणाइं गले बन्धिअ डिण्डिमं तोडिअ दक्खिणमसाणं णेइअ सूले भज्जेध त्ति । जो को वि अवरो एरिसं अकज्जं अणुचिट्ठदि सो एदिणा सणिआरदण्डेण सासीअदि (१९) ।

चारुदत्तः । अहो अविमृश्यकारी राजा पालकः ।

अथवा ।

ईदृशे व्यवहाराग्नौ मन्त्रिभिः परिपातिताः ।
स्थाने खलु महीपाला गच्छन्ति कृपणां दशाम् ॥४०॥

शोध०—( १९ ) यदार्य आज्ञापयति । आर्याः, गतोस्मि तत्र । राजा पालको भणति । येनार्थकल्यवर्तस्य कारणाद्वसन्तसेना व्यापादिता, तं तत्रैवाभरणानि गले बन्धयित्वा डिण्डिमं ताडयित्वा दक्षिणश्मशानं नीत्वा शूले भञ्जतेति । यः कोप्यपर ईदृशमकार्यमनुतिष्ठति स एतेन सनिकारदण्डेन शास्यते ।

चारु०—ईदृशे इति । श्लोकः । स्थाने योग्यमित्यर्थः । 'युक्ते

१ °रक्षितै H. २ om AB (c). ३ गदम्हि । तहिं राआ &c. AB (abc). ४ लाआ AB (abcd) D. ५ °वत्तश्श AB (bc) DE. ६ कालणादो B (a); कारणा om: दो K. ७ °वशन्त° AB (bc). ८ ताइं DJ. ९ आहल॰ AB (abcd). १० डिण्डिअ? AB (c). ११ om: AB (c); ताडिअ अ DH. १२ मसाणअं B (a). १३ णइय AB (bcd). १४ शूले AB (abcd) १५ एरिसं मकज्जमण° &c. D. १६ अकज्जणुचि॰ B (d). १७ सासि॰ AB (ac). १८ अविवेको विमृश्य AB (bc) DEGK, अविवेको in marg. before विमृश्य B (d); अविमृश्य B; अविवेको अविमृ॰ K. १९ श्रियम् AB (c) DF.

अपि च ।

ईदृशैः श्वे[1]तकाकीयै राज्ञः शासनदूषकैः ।
अपापानां सहस्राणि हन्यन्ते च हतानि च ॥ ४१ ॥

सखे मैत्रेय, गच्छ । म[2]द्वचनाद[3]म्बामपश्चिममभिवादयस्व । पुत्रं च मे रोहसेनं प[4]रिपालयस्व ।

विदूषकः । मूले छिण्णे कुदो पादवस्स पा[5]लणं(१००) ।

चारुदत्तः । मा मैवम् ।

नृणां लो[6]कान्तरस्थानां देहप्रतिकृतिः सुतः ।
मयि यो वै त[7]व स्नेहो रोहसेने स युज्यताम् ॥४२॥

---

द्वे साम्प्रतं स्थाने' इत्यमरः । कृपणां दीनाम् । नारकीया इ(मि)-त्यर्थः ॥ ४० ॥ ईदृशैरिति । श्लोकः । श्वेतकाकीयैः श्वेतकाक-सदृशैः । इवार्थे छः । उत्पातकल्पैरित्यर्थः । राज्ञः शासनस्य दूषकैः पापात्मभिर्मन्त्रिभिः ॥ ४१ ॥ अम्बा चारुदत्तमाता ।

विदू०– (१००) मूले छिन्ने कुतः पादपस्य पालनम् ।

चारु०– नृणामिति । श्लोकः । देहस्य प्रतिकृतिः प्रतिमा । द्वितीयो देह इत्यर्थः । तथा च श्रुतिः । 'सा जाया जाया भवति यदस्यां जायते पुनः' इति । 'अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम्' इति च ॥ ४२ ॥

---

१ श्वेत? AB (c); °काकैयै DH, स्वेत० K. २ मम वच° B (d). ३ अम्बां मम पश्चिम° D, अम्बामपि मम अभि० K. ४ स्व om. D. ५ परिकलणं B B (a). ६ लोकोत्तर० G. ७ यस्तव BCDFK.

विदूषकः । भो[1] वअस्स, अहं ते पिअवअस्सो[2] भविअ तुए विरहिदाइं[3] पाणाइं[4] धारेमि ( १ ) ।

चारुदत्तः । रोहसेनमपि तावद्दर्शय[5] ।

विदूषकः । एव्वम् । जुज्जदि ( २ ) ।

अधिकरणिकः । भद्र शोधनक, अपसार्यतामयं बटुः[6] ।

शोधनकस्तथा करोति ।

अधिकरणिकः । कः कोत्र भोः[7] । चाण्डालानां[8] दीयतामादेशः ।

इति चारुदत्तं विसृज्य[9] निष्क्रान्ताः सर्वे राजपुरुषाः ।

शोधनकः । इदो आअच्छदु अज्जो (३) ।

चारुदत्तः । सकरुणम् । मैत्रेय[10] भोः, किमिदमद्य । इत्यादि पठति[11] ।

आकाशे[12] ।

---

विदू०– ( १ ) भो वयस्य, अहं ते प्रियवयस्यो भूत्वा त्वया विरहितान्प्राणान्धारयामि ।

विदू०– ( २ ) एवम् । युज्यते ।

शोध० – ( ३ ) इत आगच्छत्वार्यः ।

---

१ om B B (a); भो वयस्य CJ. २ विअव° B (a). ३ विराहिदं BB (abcd) DEK. ४ पाणइं B (d). ५ च ताव० DH. ६ बहि B (b), वाहक AB (c) DF ७ भो AB (c). ८ चण्डाला० J. ९ विसर्ज्ये AB (bcd) DEFK. १० मैत्रेयऽयमेवंविधे काले इत्या° AB (bc) ?, योयमेवं &c. A; मैत्रेयंमभो किदं B (a); किमिदं इत्यादि only अद्य om: B; मैत्रेय योयमेवंविधे &c....पातयिष्यति whole for भो ..पठति D. ११ इच्छति K. १२ आकाशे पठाति DH.

विषसलिल[1]तुलाग्निप्रार्थिते मे विचारे
क्रक[2]चमिह शरीरे वीक्ष्य दातव्यमद्य।
अथ रिपुवचनाद्वा ब्राह्मणं मां[3] निहंसि
पतसि नरकमध्ये पुत्रपौत्रैः समेतः ॥ ४३ ॥

अयमागतो[4]ऽस्मीति। निष्क्रान्ताः सर्वे।

[5]व्यवहारो नाम नवमोङ्कः [6]समाप्तः।

चारु०—मैत्रेय भोरिति पूर्वोक्तं पद्यमित्यर्थः [ पृ० ४०७ श्लो० २९ ]। विषेति। मालिनीच्छन्दः। विषं च सलिलं च तुला च अग्निश्च एभिः प्रार्थिते विचारे परीक्षायां सत्यमपि इह शरीरेद्य क्रकं(क)चं दातव्यम्। अथ पुनः रिपोः शकारस्य राजश्यालस्य। राजानं पालकं प्रत्युक्तिरियम्। विषं भक्षयित्वापि न मृतश्चेद्विष-परीक्षा। विषेण शपथ इत्यर्थः। अग्निना तु प्रसिद्धैव परीक्षा। तुला-परीक्षापि स्फुटा शास्त्रे। एवमादि। ज्ञेयं विज्ञैरिति।

इति श्रीमृच्छकटिकप्रकरणव्याख्यायां सुवर्णालंकरणाख्यायामनन्तमङ्गलावासवसन्तसेनामोटनो(न)मिथ्यापराधचारुदत्तनिग्रहो नाम नवमाङ्कः समाप्तिमापत्।

---

१ पुषाग्नि B (a). २ क्रवच? C. ३ मा B (d). ४ ०स्मि। इति नि० B. ५ ३।ते मृच्छक० .....या व्यव० B; इति मृच्छ.....के प्रकरणे D; °कप्रकरणे H. ६ om: BD.

# अथ दशमोऽङ्कः ।

नैतः[1] प्रविशति चाण्डाल[2]द्वयेनानुगम्यमानश्चारुदत्तः ।

उभौ । [3]तक्कि ण [4]कलअ कालण [5]णवंवहबंधणअणे णिउणा ।

[6]अइलेण [7]शीशच्छेअण[8]शूलालोवेशु [9]कुशलम्ह ॥ १ ॥

ओशलध अज्जा, ओशलध । [10]एशे अज्ज[11]चालुदत्ते ।

दि[12]ण्ण[13]कलवीलदामे गहिदे [14]अम्हेहिं [15]वज्झपुलि[16]शेहिं ।

[17]दीवे व्व [18]मन्दणेहे [19]थोअं थोअं खअं [20]जादि ॥२॥ (१)

---

सिन्दूरोद्भासिगण्डः कलयतु पठतां मङ्गलं वक्रतुण्डः ।

उभौ । चाण्डालावित्यर्थः । (१) तक्किं णेति । आर्या छन्दः ।

[तत्किं न कलय कारणं नववधबन्धनगणे (?)निपुणौ]। अचिरेण शीर्षच्छेदनशूलारोपेषु कुशलौ स्वः ॥ १ ॥ अपसरत आर्याः, अपसरत । एष आर्यचारुदत्तः । दिण्णेति । आर्या च्छन्दः । दत्तकरवीरदामा गृहीत आवाभ्यां वध्यपुरुषाभ्याम् । दीप इव मद-(न्द)स्नेहः स्तोकं स्तोकं क्षयं याति । दाम माला ॥ २ ॥

---

१ इति H. २ चण्डाल G. ३ तक्कि० AB (c); तक्किण्ण B, तक्किणं B (a); ताक्किण D. तक्किण G, तक्कि HK. ४ कलअद का० AB (c) G, कललण का० B (a) कलअद कालणं DH. ५ णवंवहबन्धण अणो B (b); ०बन्धअअणे B (a) EK; ०बन्धअं अणे B (d). ६ ऐलेण H. ७ सीस० AB (bc) D; सीसछेदण B (a), शीस० G. सास० B (d) K. ८ सूलालोवेसु AB (bcd) DEK, सूलालल्लोवेसु B (a). ९ कुशलं ह्म B (a). १० एसे C; एश्शे K. ११ चारुदत्ते AB (abcd), ०चारुदत्ते DK. १२ दिण B (a). १३ °कलवीड and बीड AB (abcd) DFEK. १४ ह्माङ्कि B (d) CJ. १५ वज्ज० EK. १६ पुलिसेहिं AB (abcd) CDEK; पुलिळमिक्कं B (b). १७ °जेव्व AB (c) FG. दिवेव H, दिवेवि K. १८ ०णेहो B (d); ०सिणहे D, °सिणेहो H. १९ थोअ थोअ B (a), त्थोअं त्थोअं K. २० जाइ D; जाई EH, जाइं EK.

**चारुदत्तः** । सविषादम् ।

नयनसलिलसिक्तं पांशुरूक्षीकृताङ्गं[1]
पितृवनसुमनोभिर्वेष्टितं मे शरीरम् ।
विरसमिह रटन्तो[2] रक्तगन्धानुलिप्तं
बलिमिव परिभोक्तुं वायसास्तर्कयन्ति ॥ ३ ॥

**चाण्डालौ**[3] । ओशलध अज्जा, ओशलध ।

किं पेक्खध छिज्जन्तं[4] शप्पुलिशं कालपलशुधालाहिं[5][6][7] ।
शुअणशउणाधिवाशं[8][9] शज्जणपुलिशद्दुमं एदं ॥ ४ ॥
आअच्छ[10] ले चालुदत्ता, आअच्छ (२) ।

**चारुदत्तः** । पुरुषभाग्यानामचिन्त्याः[11][12] खलु व्यापाराः ।
यदहमीदृशीं दशामनुप्राप्तः ।

सर्वगात्रेषु विन्यस्तै[13] रक्तचन्दनहस्तकैः ।

---

श्मशानस्य । सुमनोभिः पुष्पैः । विरसं रूक्षं यथा स्यात्तथा रटन्तो वायसाः काकास्तर्कयन्त्युत्प्रेक्षन्त इत्यर्थः ॥ ३ ॥

चाण्डा०–(२) अपसरत आर्याः, अपसरत । किं पेक्खधेति । आर्या छन्दः । किं पश्यत । छिज्जन्तं छिद्यमानम् । सत्पुरुषं कालपरशुधाराभिः । सुजनशकुनाधिवासं सज्जनपुरुषद्रुममेतम् ॥ ४ ॥ आगच्छ रे चारुदत्त, आगच्छ ।

चारु०–सर्वेति । अनुष्टुप् । हस्ता इव हस्तका हस्तचिह्नानि ।

---

१ °रूक्षी° B B (ad) D. २ लरटयन्तो B (b); रठन्तो pr. m. लठन्तो? B (d); लगन्तो G. ३ चण्डालौ GK. ४ शप्पुलिशं वज्झन्तं B B (a). ५ कल B (a). ६ परशु AB (bc) D; पुरुष G. ७ धलाहिं B; धाराएहिं B (b); धाराहिं AB (cd) DF. ८ °सउणा° AB (abc) D. ९ वासं B (d) E. १० आगच्छ रे चारुदत्त आगच्छ B (a); आअच्छ B (d) K. ११ °भावानां K. १२ °मविचिन्त्याः A (bcd) DEFGK. १३ विन्यस्तैः D.

पिष्टचूर्णावकीर्णश्च पुरुषोऽहं पशूकृतः ॥ ५ ॥

अग्रतो निरूप्य । अहो, तारतम्यं नराणाम् । सकरुणम् ।

अमी हि दृष्ट्वा मदुपेतमेत-
न्मर्त्यं धिगस्त्वित्युपजातबाष्पाः ।
अशक्नुवन्तः परिरक्षितुं मां
स्वर्गं लभस्वेति वदन्ति पौराः ॥ ६ ॥

चाण्डालौ । ओशलध अज्जा, ओशलध । किं पेक्खध ।

इन्दे पवाहिअन्ते गोप्पसवे शङ्कमे च तालाणं ।
शुपुलिशपाणविपत्ती चत्तालि इमे ण दट्ठव्वा ॥ ७ ॥ (३)

---

इवार्थे कन् । पिष्टचूर्णाभ्यामवकीर्णो व्याप्तः । पिष्टं तण्डुलानाम् । चूर्णं तिलानाम् । अपशुः सन् पशुर्यथा संपद्यते तथा कृतः पशूकृतः । पशुर्देवीबलिदानाय छागादिः ॥ ५ ॥ तारतम्यं भेदः । अमी हीति । मयोपेतं प्राप्तं तन्निरपराधवधादि दुःखम् । दृष्ट्वा । मर्त्यं मरणधर्माणम् ॥ ६ ॥

चाण्डा०-(३) अपसरत आर्याः, अपसरत । किं पश्यत । इन्दे इति । आर्या छन्दः । इन्द्रः प्रवाह्यमानो(णो ?) गोप्रसव संक्रमश्च ताराणाम् । सुपुरुषप्राणविपत्तिश्चत्वार इमे ( चत्वार्येतानि ) न द्रष्टव्याः(व्यानि) ॥ ७ ॥

---

१ om: B. २ मम देहमेतं B B (a); मम देहमेनं B (d) E. ३ धिगस्ति H. ४ °खेदः B B (ad) E. ५ ओश्शल० B (b). ६ पराहिअंते AB (c) F; पवाहि० BDK; प्पवाहअंते B (a); पदाहि° H. ७ गोप्पसवे pr. m. श B (d). ८ सकमं CJ; गिपशर्न K. ९ शुप्पुरिश AB (c) F; शप्पुत्तिश B (a); शुपुरिश B (bd); शप्पुरिश D.

एकः । हण्ड ओहीन्ता, पेक्खं पेक्खं ।

णअलीपधाणभूदे वज्झीअन्ते कदन्तअण्णाए ।
किं लुअदि अन्तलिक्खे आदु अणब्भे पडदि वज्झे ॥ ८ ॥ (४)

द्वितीयः । अले गोहा,

ण अ लुअदि अन्तलिक्खे णेअ णेअब्भे पडदि वज्झे ।
महिलाशमूहमेहे निवडदि णअणम्बु धाराहिं ॥ ९ ॥

अवि अ ।

वज्झम्मि णीअमाणे जणश्श शव्वश्श लोदमाणश्श ।
णअणशलिलेहिं शित्ते लच्छादो ण उण्णमइ लेणू ॥ १० ॥ (५)

---

एकः– ( ४ ) हण्डे इति सम्बुद्धिराह्वाने । आहीन्ता इति द्वितीयस्य चण्डालस्य नाम । पश्य पश्य । णअलीति । आर्या [छन्दः]। नगरीप्रधानभूते । वज्झीअन्ते वध्यमाने । कृतान्ताज्ञया । किं रोदित्यन्तरिक्षम् । आदु अथवा । अनभ्रं पतति वज्रम् ॥ ८ ॥

द्वितीयः– ( ५ ) अरे गोहा इति प्रथमचाण्डालनाम । ण अ लुअदि(दी)ति । आर्या [छन्दः]। न च रोदित्यन्तरिक्षं नैवानभ्रं पतति वज्रम् । महिलासमूहमेघान्निपतति नयनाम्बु धाराभिः ॥ ९ ॥ अपि च । वज्झम्मीति । आर्या [छन्दः]। वध्ये नीयमाने जनस्य सर्वस्य रोदमानस्य ( रुदतः )। नयनसलिलैः सिक्तो रथ्यातो नोन्नमति रेणुः ॥ १० ॥

---

१ आहींता AB (bc) CJ; आहींडता B (d). २ om. B (b). ३ पधाणभूज्झी अते AB (c); ०भूदं B (a); °भूदेअत्ते D ; अपधाण° K. ४ वज्जीअन्ते B (b); °झिज्जन्ते B (d); वज्झिज्जंते E. ५ ०दत्तअणए B (a); °आण्णाए B. (d); °आणाए DH. ६ वइझे K. ७ अलेले B; अले अले B (a). ८ om. B (b) ९ om. B (a). १० अत्त० AB (c). ११ णे अणब्भे B (a). १२ °समूह° AB (acd) D; °समूहे° B(b). १३ निवडइ BDK.; णिवणंइ E. १४ धालाहिं B. १५ अणश्श DFH. १६ सित्ते AB (abcd) D; सत्ते H. १७ उणमइ AB B (ac); उंणमइ DH. १८ लिणु AB (ac).

**चारुदत्तः ।** निरूप्य सकरुणम् ।

एताः पुनर्हर्म्यगताः स्त्रियो मां
वातायनार्धेन वि[1]निःसृतास्याः ।
हा चारुदत्तेत्यभिभाषमाणा
बाष्पं प्रणालीभिरिवोत्सृजन्ति ॥ ११ ॥

**चाण्डालौ ।** आ[2]अच्छ ले चालुदत्ता, आअच्छ । इमं घो[3]षेणट्ठाणं । आ[4]हणेध डिण्डिमं । घोशे[5]ध घोश[6]णं (६) ।

**उभौ ।** शु[7]णाध अज्जा, शुणाध । एशे शत्थवाह[8]विणअदत्तश्श ण[9]त्तिके शा[10]अलदत्तश्श पु[11]त्तके अज्जचा[12]लुदत्ते णाम । एदिणा किल अकज्जकालिणा गणिआ व[13]शन्तशेणा अ[14]त्थकल्लवत्तश्श का[15]लणादो शुण्णं पुप्फकलण्डअजिण्णुज्जाणं प[16]विशिअ बाहुपाशवलक्कालेण मा[17]लिद त्ति । एशे श[18]लोत्ते गहिदे,

---

चारु०—एता इति । इन्द्रवज्रा छन्दः । 'वातायनं गवाक्षः स्यात्' ॥ ११ ॥

चाण्डा०—( ६ ) आगच्छ रे चारुदत्त, आगच्छ । इदं घोषणस्थानम् । आहत डिण्डिमम् । घोषत(षयत) घोषणाम् ।

उभौ—चाण्डालावित्यर्थः । ( ७ ) शृणुत आर्याः, शृणुत । एष सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य पुत्रक आर्यचारुदत्तो नाम ।

---

१ विनिःसृतास्यः B (d); °स्यः K. २ आअच्छ B (d); °अ‍ॅ E. ३ घोसण° AB (abcd). ४ आहणेण्ठ B (b); आहण्णेध B (d). ५ °सेध DEK. ६ घोसणं EK. ७ सुणाध B (b); शुणध B (d). ८ शत्तवाह° G. ९ णश्तिके B (d); णत्तिके D; णस्तिके E. १० शाअर° BDK. ११ पुस्तके B (b) K; Pr. m. B (d); पुश्तके E; पुत्थके G. १२ °चारु० AB (abc) D. १३ वसन्तसेणा AB (ac) १४ अश्त° E. १५ Om. दो B (d) E. १६ °सिअ B (d). १७ मालिअत्ति AB (bcd) DEFGK. १८ शेलोत्ति AB (c); शलोत्ति B (b), लोत्ते marg. श B (d); शेलोत्त D; एशे लोत्ते E; °शेलोत्ते H.

शअं अ पेडिवण्णे[1] । तदो लण्णा पालएण अम्हे[2] आणत्ता एदं मालेदुं । जदि अवलं ईदिशं[3] उभअलोअविलुद्धं[4] अकज्जं कलेदि[5] तं पि[6] लाआ पालए एव्वं ज्जेव्व शाशदि (७) ।

**चारुदत्तः** । सनिर्वेदं स्वगतम् ।

मखशतपरिपूतं गोत्रमुद्भासितं मे
सदसि निबिडचैत्यब्रह्मघोषैः पुरस्तात् ।
मम मरणदशायां वर्त्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥ १२ ॥

उद्वीक्ष्य कर्णौ पिधाय । हा[7] प्रिये[8] वसन्तसेने,

---

एतेन किलाकार्यकारिणा गणिका वसन्तसेनार्थकल्यवर्तस्य कारणाच्छून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण मारितेति । एष सगोत्रो ( लोप्त्रो ) गृहीतः, स्वयं च प्रतिपन्नः । तदा राज्ञा पालकेन वय( आवा )माज्ञप्ताः ( प्तौ ) एतं मारयितुम् । यद्यपर ईदृशमुभयलोकविरुद्धमकार्यं करोति तमपि राजा पालक एवमेव शास्ति ।

चारु०—मखशतेति । मालिनी छन्दः । सदसि यज्ञस्य महति मण्डपे । निबिडानि घनानि । चैत्यान्यायतनानि । तत्र ब्रह्मणां वेदानां घोषैर्मे गोत्रं कुलमुद्भासितमासीत् । पापैरसदृशैरननुरूपैरयोग्यैश्चाण्डालादिभिर्मनुष्यैर्घोषणायां तन्मम गोत्रं घुष्यत इति महाननर्थ इति भावः । 'गोत्रं नाम्नि कुलेचले' इति कोशः ॥ १२ ॥

---

१ पाविड्डिवण्णे B (d); प ...डिवण्णे H. २ om, B (d). ३ इदिशे AB (bc) इदिसं B (a); इदिसे B (d), ईदिशे DEF. ४ उहअ B; इइअ B (a). ५ कलोदि B(b). ६ वि D. ७ om: AB (c) DF. ८ om. ABB (ac).

शशिविमलमयूखशुभ्रदन्ति[1]
सुरुचिर[2]विद्रुमसन्निभाधरौष्ठि[3] ।
नव वदनभवामृतं निपीय
कथमवशो[4] ह्ययशोविषं पिबामि ॥ १३ ॥

उभौ । ओशलध अज्जा, ओशलध ।

एशे[5] गुणलअणणिही शज्जण[6]दुक्खाण[7] उत्तलणशेदू[8] ।
अशुवण्णं[9] मण्डणअं[10] अवणीअदि[11] अज्ज णअलीदो ॥१४॥

अण्णं च ।
सव्वे[12] क्खु होइ लोए लोए शुह[13]शंण्ठिदाण[14] तत्तिल्ला[15] ।
विणिवडिदाण[16] णलाणं[17] पिअआली दुल्लहो होदि[18] ॥१५॥

---

शशिविमलेति । पुष्पिताग्रा छन्दः । अवशः पराधीनः अयशोरूपं विषम् ॥ १३ ॥

उभौ—चाण्डालावित्यर्थः । (८) अपसरत आर्याः, अपसरत । एशे इति । आर्या छन्दः । एष गुणरत्ननिधिः सज्जनदुःखानामुत्तरणसेतुः असुवर्णं मण्डनमपनीयतेऽद्य नगरीतः । एष चारुदत्तः ॥ १४ ॥

अन्यच्च । सव्वे इति । आर्या छन्दः । सर्वः खलु भवति लोके लोकः सुखसंस्थितानाम् । तत्तिल्ला चिन्तायुक्तः । विनिपतितानां नराणां प्रियकारी दुर्लभो भवति ॥ १५ ॥

---

१ °दन्तं K. २ सविचिर॰ B (b), °द्रुम° B (a). ३ °धरोष्ठि DGH; ° धरोष्ठं K. ४ °वशो ? DF, वंशो H. ५ एश AB (ac) D. ६ सज्जण AB (abcd) CDJ. ७ दुक्खाणा AB (ac). ८ °सेदू AB (abc) DE. ९ अशुवण्णम॰ AB (ac) CDJ; अशुवण्णी॰ B (b). १० मण्डणअं pr. m. B (d); मण्डणो॰ DH. ११ आ॰वणी° B (b), °वणीआदि B (d). १२ शव्वे J. १३ सुह° AB (abcd) DE. १४ संथिदाण AB (c); संत्थिदाण B (a) D; संथिदाण B (b); सण्ठिदाण B. (d); मंत्थिदाण E ; सत्थिदाण K. १५ तत्तिल्ला B (b); तत्तल्लो DH. १६ विवाडि॰ B (b); विनि;···णं F;. ॰द्राणं AB (c). १७ णराण B (a). १८ होदु D.

**चारुदत्तः** । सर्वतोऽवलोक्य ।

अमी हि वस्त्रान्तनिरुद्धवक्त्राः[1]
प्रयान्ति मे दूरतरं वयस्याः ।
परोऽपि बन्धुः समसंस्थितस्य
मित्रं न कश्चिद्विषमस्थितस्य ॥ १६ ॥

**चाण्डालौ** । ओशालणं[2] कदं[3] । विवित्तं[4] लाअमग्गं । ता आणेध[5] एदं दिण्ण[6]वज्झ[7]चिण्हं (९) ।

**चारुदत्तः** । निःश्वस्य[8] । मैत्रेय भोः किमिदमद्य[9] । इत्यादि[10] [पृ० ४०७ स्थितं श्लोकं] पठति ।

नेपथ्ये । हा ताद[11], हा पिअवअस्स (१०) ।

**चारुदत्तः** । आकर्ण्य[12] सकरुणम् । भोः स्वजातिमहत्तर[13], इच्छाम्यहं भवतः सकाशात्प्रतिग्रहं कर्तुम् ।

---

चारु०—अमी हीति । स्पष्टमुत्तरार्धम् । 'सर्वः खलु' इत्यार्यया समानार्थम् ॥ १६ ॥

चाण्डा०— (९) अपसारणं कृतम् । विविक्तो राजमार्गः । तदानयतैतं दत्तवध्यचिह्नम् ।

नेपथ्ये—(१०) हा तात हा प्रियवयस्य ।

चारु०— स्वजातिमहत्तरेति चाण्डालसंबोधनम् ।

---

१ वस्त्रान्तररुद्ध० BDFG. २ °शलणं AB (c) D. ३ किदं B (a). ४ विवित्तं AB (bc), विवित्त किद B (a). ५ अणेध K. ६ दिण B (ad). ७ °वज्ज AB (bcd) K. ८ ० om: B B (a), निश्वस्य B (d). ९ °मिदमित्यादि B. १० For इत्यादि whole ममोपघातो &c., D. ११ तात AB (bcd). १२ om: B (a). १३ स्वस्त्रथ B (b).

चाण्डालौ । किं अम्हाणं अे हत्थादो पडिग्गहं [2]केलेशि (११)।

चारुदत्तः । शान्तं पापम् । [3]नोपरीक्ष्यकारी दुराचारः पालक इव चाण्डालः । [4]तत्परलोकार्थं पुत्रमुखं द्रष्टुमभ्यर्थये ।

चाण्डालौ । एवं [5]कलीअदु (१२) ।

(नेपथ्ये । हा ताद, हा आवुक (१३) । )

चारुदत्तः । श्रुत्वा सकरुणम् । भोः [6]स्वजातिमहत्तर । इत्यादि पठति ।

[7]चाण्डालौ । [8]अले [9]पउला, [10]खणं अन्तलं [11]देधे । एशे अज्ज[12]चालुदत्ते [13]पुत्तमुहं [14]पेक्खदु । नेपथ्याभिमुखम् । अज्ज, [15]इदो इदो । [16]आअच्छ ले [17]दालआ, आअच्छ (१४)।

---

चाण्डा०– (११) किमस्माकं च हस्तात्प्रतिग्रहं करोषि ।

चाण्डा०– (१२) एवं क्रियताम् ।

[नेपथ्ये]–(१३) हा तात हा पितः ।

चाण्डा०– अरे, आगच्छत्वागच्छतु (?) ।

उभौ–(१४) [अरे] प्रचुराः हे जना इत्यर्थः । (पउला पौराः) । क्षणं क्षणमन्तरं ददत (दत्त) । एष आर्यचारुदत्तः पुत्रमुखं पश्यतु । आर्य, इत [इतः?]। आगच्छ रे दारक, आगच्छ ।

---

१ om. J. २ कलेसि B (abc) E, pr. m. B (d). ३ नापरीक्षित° AB (bc) DG; न परी० B (d) E. ४ °कार्थे G. ५ करी० BDE ६ °जातीत्यादि DK. ७ After this word आअच्छदु° अपर —आअच्छदु । उभौ before अले B. In these speeches for आअच्छदु first speech अले आअच्छदु B (bd) GK. In the same speech अले आअम्छदु first speech E. ८ om: B (abd). ९ पउला जणा D १० खणं खणं EK. ११ देव्व AB (c). १२ चारुदत्ते AB (abcd) D. १३ °मुखं AB (bcd) DEK. १४ पोक्खदु B (a). १५ om: AB (bcd) D. १६ आअम्छ B (d); आअश्च E. १७ दारआ B (a).

ततः प्रविशति दारकमादाय

**विदूषकः** । तुवरदु तुवरदु भद्दमुहो । पिदा दे मारिदुं णीअदि (१९) ।

**दारकः** । हो ताद, हा आवुक (१६) ।

**विदूषकः** । हा पिअवअस्स, कहिं मए तुमं पेक्खिदव्वो । (१७) ।

**चारुदत्तः** । पुत्रं मित्रं च वीक्ष्य । हा पुत्र, हा मैत्रेय । सकरुणम् । भोः, कष्टम् ।

चिरं खलु भविष्यामि परलोके पिपासितः ।
अत्यल्पमिदमस्माकं निवापोदकभोजनम् ॥ १७ ॥

किं पुत्राय प्रयच्छामि । आत्मानमवलोक्य । यज्ञोपवीतं दृष्ट्वा । आं, इदं तावदस्ति मम च ।

अमौक्तिकमसौवर्णं ब्राह्मणानां विभूषणम् ।
देवतानां पितॄणां च भागो येन प्रदीयते ॥ १८ ॥

इति यज्ञोपवीतं ददाति

विदू०—(१९) उपरमतु उपरमतु (त्वरतां त्वरतां) भद्रमुखः । पिता ते मारयितुं नीयते ।

दार० – (१६) हा पितर्, हा तात ।

विदू० – (१७) हा प्रियवयस्य, कुत्र मया त्वं द्रष्टव्यः ।

चारु०– चिरमिति । श्लोकः ॥ १७ ॥ अमौक्तिकमिति । श्लोकः । येन यज्ञोपवीतेन ॥ १८ ॥

१ हा आवुक हा ताद AB (bcd) DEG. २ om. D. ३ मये AB (bc). ४ °लोकपिपा० B (a). ५ °भाजनम् DH. ६ पुत्रमपि ? K. ७ °त्रं वीक्ष्य B B.(a); °त्रं विलोक्य B (d) EK. ८ आ AB (bc); आः DG.

चाण्डालः[1] । आअच्छ ले[2] चारुदत्ता[3], आअच्छ[4] (१८) ।

द्वितीयः । अले, अज्जचालुदत्तं णिलुववदेण णामेण आलवेशि । अले, पेक्ख[5] ।

अब्भुदए[6] अवशाणे[7] तह[8] अ लत्तिन्दिवं[9] अहदमग्गा ।
उद्दामे व्व किशोली णिअदी[10] क्खु पडिच्छिदुं[11] जादि ॥१९॥

अण्णं च ।

शुक्खा[12] ववदेशा[13] शे किं[14] पणमिअमत्थएण[15] काअव्वं[16] ।
लाहुगहिदे[17] वि अ[18] चन्देण वन्दणीए[19] जणपदश्श ॥२०॥(१९)

---

चाण्डा०– ( १८ ) आगच्छ रे चारुदत्त, आगच्छ ।

द्विती०–(१९) अरे,आर्यचारुदत्त(त्तम्) । निरुपपदेनार्येत्यादिविशेषणशून्येनेत्यर्थः। नाम्नालपसि । अरे, पश्य । अब्भुअे(दए) इति । आर्या छन्दः । अभ्युदयेवसाने तथा च रात्रिंदिवमहतमार्गा । उद्दामेव किशोरी नियतिः खलु परीक्षितुं याति ॥ १९ ॥ अन्यच्च । शुक्खेति । आर्या च्छन्दः । शुष्का व्यपदेशाः । शे अस्य । किं प्रणमितमस्तकेन कर्तव्यम् । राहुगृहीतोपि च चन्द्रो न वन्दनीयो जनपदस्य ॥ विअ इत्येकं पदं वा । राहुगृहीत इव चन्द्र इत्यर्थः ।

---

१ चाण्डालौ D. २ रे B (a) DH ३ चारु० AB (abc) D. ४ आअम्छ B (d). ५ पेक्ख पेक्ख G. ६ अब्भुदये AB (acd) D, अद्दुदये B (b). ७ अवसाणे D. ८ तहअ AB (abcd) D (= तथा च AB (c) ; तह वि G ; तहआ K ९ रत्तिदि० B (a); लत्तिदिवं D. १० णिअडी G. ११ पडिचिदुं (= परीक्षितुं ) AB (c); पडिक्खिदुं DH , पडिच्छिदं J. १२ शुक्का B (a), शुष्का B (bd); सुक्खा D; शुष्कः E ; मक्का वा ? H. १३ बिबदेशा B (ad) ; वबदेशो B (b); विबदेशा EK १४ om: B (b). १५ मच्चत्थएण B (a); मश्त० B (b) EK; मत्थ marg मश्तु B (d); पणामिअ ˉमत्थए ण J. १६ कादव्वं B B (a) ; काअदव्वं G. १७ °ग्गाहिदे AB (bc) D ; ˉ°ग्गाहिदे B (a). १८ बिचन्दे J. १९ वन्दणीओ EG.

बालकः । अरे[1] रे चाण्डाला[2], कहिं ओवुकं[3] णेध (२०)।

चारुदत्तः । वत्स, 115

अंसेन बिभ्रत्करवीरमालां
स्कन्धेन[4] शूलं हृदयेन शोकम् ।
आघात[5]मद्याहमनुप्रयामि
शामित्रमालब्धु[6]मिवाध्वरेजः[7] ॥२१॥

---

अस्य चारुदत्तस्य । व्यपदेशाः कलङ्काः । वसन्तसेना मारितेत्येवंरूपा अपवादव्यवहाराः । शुष्का वृथैवेत्यर्थः । प्रणमितेन मस्तकेन किं कर्तव्यम् । क्षीणस्यां (स्या)स्य चारुदत्तस्य लज्जयावन(त)मस्तकोपि न त्वमसीति भावः । तत्र राहुगृहीतेन्दुर्दृष्टान्त इत्यवगन्तव्यम् ॥ २० ॥

बाल०–( २० ) अरे अरे चाण्डालाः( ल्लै ), कुत्रावुकं मम पितरम् । णेध नयत( थ ) ।

चारु०– अंसेनेति । इन्द्रवज्रा छन्दः । आघातमधिकरणीयं वधस्थान( म् ) । अध्वरे यज्ञे । अजश्छागो यज्ञपशुः । आलब्धुम् । आलम्भनं( न )मभिमन्त्रणपूर्वकं हननं तत्प्राप्तुम् । शामित्रं यज्ञीयं पशुहननस्थानम् । अनुप्रयाति यथा तथाहमद्याधिकरणीयं वधस्थानमनुप्रयामीत्यर्थः । 'शमिता यज्ञे' इति सूत्रं पाणिनेर्वैदिक्यां प्रक्रियायाम् । शमितरि भवं शामित्रम् । यज्ञे पशुघातस्थानमित्यर्थः ॥ २१ ॥

---

१ अले अले AB (abcd) DEGK. २ चण्डालआ B B (a); चण्डाला B (bd) EGK. ३ अवुकं D; आउकं E. ४ स्कन्देन B (a) H. ५ अघात० H. ६ °मालब्ध° AB (bc); °मालब्ध° इवा B (d). ७ °ध्वरैज. B (a), °त्वरजः B (d) pr. m. ज; om : °ध्वराजं° E.

चाण्डालः । दालआ, '० /\ ।

ण हु अम्हे चाण्डाला चाण्डालउलम्मि जादपुव्वा वि । 
जे अहिभवन्ति शाहुं ते पावा ते अ चाण्डाला ॥२२॥(२१)

दारकः । ता कीस मारेध आवुकं (२२) ।

चाण्डालः । दीहाओ, अत्त लाअणिओओ क्खु अवलज्झदि । ण हु अम्हे (२३) ।

दारकः । वावादेध मं । मुञ्चध आवुकं (२४) ।

चाण्डालः । दीहाओ, एव्वं भणन्ते चिलं मे जीव(२५) ।

---

चारुदत्तसुतेन 'अरे अरे चाण्डाला' इति संबोध्याहूतं आहत्तरं(र)माहुः (?) ।

चाण्डा०–(२१) दारक । ण हु अम्हे इति । आर्या छन्दः । न खलु वयं चाण्डालाश्चाण्डालकुले जातपूर्वा अपि । येभिभवन्ति साधुं ते पापास्ते च चाण्डालाः ॥ २२ ॥

दार०– (२२) तत् । कीस किमर्थम् । मारयत(थः) पितरम् ।

चाण्डा०– (२३) हे दीघा(र्घा)युः, अत्र राजनियोगः खल्वपराध्यति । न खलु वयम् ( आवाम् ) । अवरज्झम्मापराध्याम इति विपरिणम्य विभक्तिमन्वयः ।

दार० – (२४) व्यापादयत( तं ) माम् । मुञ्चत ( तं ) पितरम् ।

चाण्डा०–(२५) हे दीर्घायुः, एवं भणंश्चिरं मे जीव ।

---

१ om· B B (a) , दारअ G. २ चण्डाला BEGK. ३ चण्डाल AB (abcd) GK. ४ हम्मिजलाद० B (a). ५ om· AB (bc) F, वा DH. ६ वा D. ७ साहुं AB (abcd) DE. ८ मालेध AB (bcd) DEF. ९ om : B B (a) १० एत्थ D. ११ ता वावादेध E ; वावदिध K. १२ om: B. १३ एव्वं. १४ मं चिलं B (a).

चारुदत्तः । सास्रं पुत्रं[1] कण्ठे गृहीत्वा ।

इदं तत्स्नेहसर्वस्वं सममाढ्यदरिद्रयोः[2] ।
अचन्दनमनौशीरं[3] हृदयस्यानुलेपनम् ॥ २३ ॥

'अंसेन बिभ्रत्' इत्यादि पुनः पठति[4] । अवलोक्य स्वगतम् । 'अमी हि वस्त्रान्तनि[5]रुद्धवक्त्रा[6]' इत्यादि[7] पठति ।

विदूषकः । भो भद्दमुहा,[8] मुञ्चध[9] पिअवअस्सं चारुदत्तं मं वावादेध (२६) ।

चारुदत्तः । शान्तं[10] पापम् । दृष्ट्वा स्वगतम्[11] । अद्यावगच्छामि[12] । 'सम(सं)स्थिते[13]' इत्यादि पठति । प्रकाशम् । 'एताः पुनर्हर्म्यगताः स्त्रियो माम्[14]' इत्यादि पुनः पठति ।

---

चारु०– इदं तदिति । अनुष्टुप् । इदं पुत्ररूपं वस्तु । तच्छ्रुतिस्मृतिपुराणेषु प्रसिद्धमित्यर्थः । स्पष्टमवशिष्टम् ॥ २३ ॥ अंसेन बिभ्रदित्याद्यनुपदोक्तं (पृ० ४३५ श्लो० २२) पद्यमित्यर्थः । अमी हीति । 'अमी हि वस्त्रान्तनिरुद्धवक्त्राः प्रयान्ति मे दूरतरं वयस्याः । परोऽपि बन्धुः समसंस्थितस्य मित्रं न कश्चिद्विष(म)स्थितस्य' इति पूर्वोक्तं (पृ० ४३१ श्लो० १६ ) पद्यमित्यर्थः ।

विदू०– (२६) भो भद्रमुखाः(खौ), मुञ्चत(तं) प्रियवयस्यं चारुदत्तम् । मां व्यापादयत(तं) । मारयते(तमि)त्यर्थः ।

चारु०–[४२८ पृष्ठे मुद्रितः ११ श्लोकः] ।

---

१ पुत्रकं DH, om: K. २ सममार्थं ? K. ३ अचान्दन० DH, अबन्धन ? K. ४ After पठति 'विंश श्लोक' D. ५ निबद्ध K. ६ वक्त्रा प्रयान्ति मे &c.; whole B (d), प्रयान्ति &c. D. ७ इति B (d). ८ भद्दमहा H. ९ मुञ्चेध BDEGK. १० शान्तं पापं twice B (a). ११ om: B (a). १२ अद्य om: B B (a). १३ समस्थितस्य मित्रं &c., whole followed by इति D. १४ Followed by वातायनार्धेन &c. इति for इत्यादि.

चाण्डालः । ओशलध अज्जा, ओशलध ।

किं पेक्खध शप्पुलिशं अजशवशेण प्पणट्ठजीवाशं ।

कूवम्मि खुडिदपाशं कञ्चणकलशं व्व डुब्बन्तं ॥२४॥ (२७)

चारुदत्तः । सकरुणम् । 'शशिविमलमयूख' इत्यादि पठति ।

अपरः । अले, पुणोवि घोशेहि (२८) ।

चाण्डालः । तथा करोति ।

चारुदत्तः ।

प्राप्तोऽहं व्यसनकृतां दशामनार्यां
यत्रेदं फलमपि जीवितावसानम् ।
एषा च व्यथयति घोषणा मनो मे
श्रोतव्यं यदिदमसौ त्वया हतेति ॥ २९ ॥

---

चाण्डा०–(२७) अपसरत आर्याः, अपसरत । किं पेक्खधेति । आर्या छन्दः । किं पश्यत सत्पुरुषमयशोवशेन प्रनष्टजीवाशम् । कूपे खण्डितपाशं काञ्चनकलशमिव मज्जन्तम् ॥ २४ ॥

चारु०–[४३० पृष्ठे मुद्रितं १३ श्लोकम्] ।

अप०–चाण्डाल इत्यर्थः । (२८) अरे, पुनरपि घोष(य) ।

चारु०– प्राप्तोहमिति । प्रहर्षिणी छन्दः । 'दशा वर्तावबस्थायाम्' इति कोशः । जीवितावसानं जीवितसमाप्तिः । तद्रूपं फलमिदम् । यत्रावस्थायां प्राप्तम् । असौ वसन्तसेना । त्वया चारुदत्तेन ॥ २९ ॥

---

१ पोक्खध B. २ अलिज्जशवेण B (a), अज्जशवशेण K. ३ क्खुडिद० AB (abcd) E. ४ पाशक B (b); ५ कलशव्व B (b) G. ६ शुभ्रदन्ति &c., whole as before for इत्यादि D. ७ घोसेहि D, ग्घोसेहि E. ८ °वमानं DH.

ततः प्रविशति प्रासादस्थो बद्धः

**स्थावरकः** । घोषणामाकर्ण्य[1] सवैक्लव्यम् । कधं अपावे चा-[2]लुदत्ते वावादीअदि । हग्गे[3] णिअलेण शामिणा बन्धिदे । भोदु । आक्कन्दामि[4] । शुणाध अज्जा, शुणाध । अत्थि[5] दाणिं मए पावेण पवहणपडिवत्तेण[6] पुष्फ[7]कलण्डअ[8]जिण्णुज्जाणं वशन्तशेणा णीदा । तदो मम शामिणा मं[9] ण कामेशित्ति कदुअ बाहुपाशाबलक्कालेण[10] मालिदा । ण उण एदिणा अज्जेण । कधं विदूलदाए ण को वि शुणादि । ता किं कलेमि । अत्ताणअं[11] पाडेमि[12] । विचिन्त्य[13] । जइ एव्वं कलेमि तदा अज्जचालुदत्ते[14] ण वावादीअदि । भोदु । इमादो पाशाद[15]बालग्ग[16]पदोलिकादो एदिणा[17] जिण्णगवक्खेण[18] अत्ताणअं णिक्खिवामि[19] । वलं[20] हग्गे[21] उवलदे ।

स्थाव०–( २९ ) कथमपापश्चारुदत्तो व्यापाद्यते । अहं निगडेन स्वामिना बद्धः । भवतु । आक्रन्दामि । शृणुतार्याः, शृणुत । अस्तीदानीं मया पापेन प्रवहणपरिवर्तेन पुष्पकरण्डकजीर्णोद्यानं वसन्तसेना नीता । ततो मम स्वामिना मां न कामयस इति कृत्वा बाहुपाशबलात्कारेण मारिता । न पुनरेतेनार्येण । कथं विदूरतया न कोपि शृणोति । तत्किं करोमि । आत्मानं पातयामि । यद्येवं करोमि तदार्यचारुदत्तो न व्यापाद्यते । भवतु । अस्याः प्रासाद-

१ घोषणमा० B (d). २ चारु० AB (abcd) D. ३ हगे AB (bcd) D. ४ अक्कंदामि BDH. ५ अस्ति AB (bc) EF; pr. m. Corr. अत्थि marg. B (d); अस्थि F, एत्थ J. ६ °पलिव० B; °वडिव० B (a). ७ पुष्फ° B (d). ८ °करंडअ° AB (bcd) D, °कलंडक° B; °करडक° B (a) E. ९ मं ण्ण B (a); मण्ण B (d). १० बलक्कारेण AB (bcd) E. ११ अत्तणअं EG. १२ पातेमि AB (abc) DEFK, पादेमि B (d), पत्तेमि G. १३ om: B (a). १४ °चारुदत्ते AB (ac) D; °चारुदत्तो B (bd) E. १५ Corr. पासाद B (d). १६ °बाडग्ग° B (bd); °वाडग्ग° EK. १७ एदिएण B (b). १८ जिणगवक्खे केण B (d). १९ ण्णिविक्खिव० K. २० अभं B (a); अलं G. २१ हगे AB (bcd) D.

ण उण एशे[9] कुलउत्तविहंगाणं[1] वाशपादवे अज्ज[2]चालुदत्ते[3] । एव्वं[4] जइ[5] विवज्जामि[6] लद्धे मए पललोए[7] । इत्यात्मानं पातयित्वा । ही[8] ही णं उवलदम्हि । भग्गे मे दण्डणिअले[10] । ता चाण्डालघोशं[11] शमण्णेशामि[12] । दृष्ट्वोपसृत्य[13] । हंहो चाण्डाला[14], अन्तलं[15] अन्तलं[16] (२९) ।

चाण्डालौ । अले, के अन्तलं मग्गेदि[17] । (३०) ।

चेटः । शुणाध[18] । इति पूर्वोक्तं पठति ।

---

बालाग्रप्रतोलिकातः एतेन जीर्णगवाक्षेणात्मानं निक्षिपामि । वरमहमुपरतः । न पुनरेष कुलपुत्रविहगानां वासपादप आर्यचारुदत्तः । एवं यदि विपद्ये लब्धो मया परलोकः । ही आश्चर्यं । नोपरतोऽस्मि । भग्नो मे दण्डनिगडः । तच्चाण्डालघोषं समन्वेषयामि । हं हो चाण्डालाः, अन्तरमन्तरम् ।

चाण्डा०– (३०) अरे, कोऽन्तरं याचते ।

चेटः—शृण्वन्त्वित्यादिः कवेरनुवादः । सुणाध अज्जा, सुणाधेत्यादेश्चेटवाक्यस्य पूर्वोक्तस्येति बोध्यम् ।

१ °विहंगाणं B (a). २ आज्जो B (b). ३ चारुदत्ते AB (bcd) D; चारुदत्तो B (a) E. ४ एवं. ५ यदि B (b) K, जदि BD (d) D. ६ विबजामि B (a), विविज्जामि H. ७ परलोए B (a), वललोए E. ८ om AB (bcd) DEK. ९ ण उण B B (ad) णं D. F. १० डड० AB (c), दण्डाणि° B H, डंडाणिअडे B (bd) GK; डंडणिअडे DF which has णी, दण्डणिअडे E. ११ °घोसं AB (abcd) DEK. १२ समण्णेसामि AB (abcd) DE. १३ दृष्ट्वाप० B (b). १४ चण्डाला B; चाण्डाल AB (c) D; चण्डाल B (abd). १५ अन्तरं AB (abcd) DEF. १६ अंतलअं AB (cd) DEF; अंतलअत B (b) १७ मग्गेदि E १८ शृण्वन्तु इति BEGK; शुणध अज्जा इति D. This is followed by the words अस्यैव निरङ्कुपत्रस्य अधस्थाद्वितीयपङ्क्तिरिथतं.

चारुदत्तः। अयं,

कोऽयमेवंविधे काले कालपाशस्थिते मयि।
अनावृष्टिहते शस्ये द्रोणमेघ इवोदितः॥ २६॥

भोः, श्रुतं भवद्भिः।

न भीतो मरणादस्मि केवलं दूषितं यशः।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत्॥ २७॥

अन्यच्च।

तेनास्म्यकृतवैरेण क्षुद्रेणाप्यल्पबुद्धिना।
शरेणेव विषाक्तेन दूषितेनापि दूषितः॥ २८॥

चाण्डालौ। थावलअ, अवि शच्चं भणाशि (३१)।

चेटः। शच्चं। हग्गे वि मा कश्श वि कधइश्शशि त्ति पाशादबालग्गपदोलिकाए दण्डणिअलेण बन्धिअ णिक्खित्ते (३२)।

---

चारु०– कोऽयमेवमिति॥ २६॥ न भीत इति॥ २७॥ तेनेति। तेन शकारेण। न कृतं वैरं येन सह मा(म)येत्यर्थः। विषाक्तेन विषमिश्रेण। 'अञ्जू म्रक्षणे' इति धातुः। अनुष्टुप् छन्दः सर्वत्र॥ २८॥

चाण्डा०– (३१) स्थावरक, अपि सत्यं भणसि।

चे०– (३२) सत्यम्। अहमपि मा कस्यापि कथयिष्यती(सी)ति प्रासादबालाग्रप्रतोलिकायां दण्डनिगडेन बद्ध्वा निक्षिप्तः।

---

१ सस्यं DE. २ ०स्थित BB (ad) K. ३ मारणाद० DFG, मरणेव विष.क्तेन mistake B (a). ४ शरेणैव AB (bc). ५ थावलय B (a) K; थावलआ B (d) G. ६ सच्चं AB (abcd) DE. ७ भणासि AB (abcd) E. ८ सच्चं AB (abcd) D ९ हगे AB (bcd) D. १० पाशग्गवालग्ग K. ११ पदोलिआए B B (a). १२ दण्डा० BB (abd) G; दण्डनिअ० E, डण्डा० K. १३ णिखित्ते AB (bcd).

प्रविश्य

शकारः । सहर्षम् ।

मंशेण[1] तिक्खोविल्केण[2] भत्ते
शाकेण शूपेण शेमच्छकेण[3] ।
भुत्तं मए अँत्तणअश्श[4] गेहे
शालिश्श[5] कूलेण गुलोदणेण[6] ॥ २१ ॥

कर्णं दत्त्वा । भिण्णकंशखङ्खणाए[7] चाण्डालवाआए[8] शालशंजोए । जधा अ एशे उरकालिदे[9] वज्झडिण्डिमशद्दे पडहाणं[10] अ[11] शुणीअदि तधा तक्केमि दलिद्दचालुदत्ताके वज्झट्ठाणं णीअदि त्ति । ता पेक्खिश्शं[12] । शत्तुविणाशे[13][14] णाम[15]

---

श०–( ३३ ) मंशेणेति । इन्द्रवज्रा छन्दः । मांसेन तिक्ताम्लेन । भक्तमोदनः । शाकेन सूपेन समत्स्यकेन । भुंक्त (भुक्तं) मयात्मनो गेहे शाले(लेः) कूलेण ओदनेन । गुडौदनेन ॥ २१ ॥ भिण(ण्ण)कंस(श)खंखणाऐ(ए) भिन्नकांस्यवत्खङ्खणायाः कटुविकृतस्वरायाः चाण्डालवाचायाः स्वरसंयोगः । यथा चैष उरकालिदे उद्गीतो वध्यडिण्डिमशब्दः पटहानां च श्रूयते तथा तर्कयामि दरिद्रचारुदत्तको वध्यस्थानं नीयत इति । तत्प्रेक्षिष्ये द्रक्षा(क्ष्या)मीति वा ।

---

१ मंसेण K. २ तिक्खा—D; ०विक्केण K. ३ समच्छ० AB (abcd) K; शमक्खकेण E. ४ अत्तणअस्स AB (bcd) DEG; अत्तणकस्स B (a). ५ शालिश्शकूलेण (=साद्दश्यकूरेण) B, (=शाल्या कूरेण) D. ६ गुडो० B (a); गुणोद० E; गुलोदलेण H. ७ भिन्नखसखङ्ख० AB (bc), भिन्नखङ्खणा० B (a); भिन्नकंसख० B (d); ०कंसख० DE; भिन्नकखसखं० G; भिन्नकंस० H, भिन्नकसखङ्क० K. ८ ०वायाए AB (abcd); चण्डाल° B, चण्डालवाचाए E. °वावाडयाए H. ९ वका-लिदे B (a); उक्खालिदे J. १० पडहाण BD. ११ णंअ om. B (a). १२ पेक्खिस्सं AB (bc) E. १३ शत्तु० JK. १४ ०विणाशेण महन्ते AB (c) F; °विणाशेण समहन्ते B (d); ०विणाशेण महमहन्ते D, °विणाशे महमहन्ते H. १५ णाम twice B (a).

महन्ते हेलक्करश[1] पलिदोशे[2] होदि । शुदं अ[3] मए जे वि किल शत्तुं वावादअन्तं[4] पेक्खदि तश्श अण्णाश्शिं[5] जम्मन्तल्ले[6] अक्खिलोगे ण होदि । मए क्खु विश[7]गण्ठि[8]गब्भ[9]पविश्टेण[10] विअ कीडएण किं पि[11] अन्तलं मग्गमाणेण उप्पाडिदे[12] ताह दलिद्दचालुदत्ताह विणाशे[13] । शंपदं[14] अत्तण[15]केलिकाए पशाद[16]वालग्गपदोलिकाए[17] अहिलुहिअ[18] अत्तणो पलक्कमं[19] पेक्खामि । तथा कृत्वा[20] दृष्ट्वा च । ही[21] ही एदाह दलिद्दचालुदत्ताह वज्झं[22] णीअमाणाह[23] एशे[24] वड्डे जणशम्मद्दे[25] । जं[26] वेलं अम्हालिशे[27] पवले[28] वलमणुश्शे[29][30]

---

शत्रुविनाशो नाम महान् हृदयस्य परितोषो भवति । श्रुतं च मया योपि किल शत्रुं व्यापाद्यमानं पश्यति तस्यान्यस्मिञ्जन्मान्तरे( न्मनि )क्षिरोगो न भवति। वावादयमाणमिति वक्तव्ये वावादयन्तं व्यापादयन्तमात्मानं मारयन्तमित्यर्थिकेयमुक्तिरर्थस्य तथाभावितया शकारवधं द्योतयतीति ध्येयम् । मया खलु विष[ग्रन्थि]गर्भप्रविष्टेनेव कीटकेन किमप्यन्तरं मार्गमाणेनोत्पादितं(तः) तस्य

---

१ हलअश्श BDEFK; लअहश्श G. २ पडिदोशे AB (abcd) E; पडितोशे D. ३ च BDEF. ४ ०दयन्तं AB (bc) DK. ५ अणाश्शि AB (c). ६ जम्मतलं E. ७ विष AB (abcd) DH. ८ गन्दि AB (c); गडि B (a). ९ गप्फ ? C. १० पविट्ठेण AB (abcd) CDK. ११ वि AB (abcd) D. १२ उप्पालिदे B (ad) EK. १३ विणासे B (a). १४ संपदं B (a). १५ अत्ताण० B (b). १६ पासाद° B (a); पशाद° B (b). १७ पदोलिआए AB (bc) D. १८ आहि०? E. १९ पडक्कमं AB (abcd) EFG. २० om. DH. २१ ही (one) om. AB (bcd) FGK; हा for हीही E. २२ वज्झ AB (ac) D; वडं B (b) G. २३ ०मणाह CJ. २४ एशे वुड्ढे D, एसे वड्ढे E, एवड्ढे J; यावदे K. २५ °समूहे B (a); समद्दे D; ०संमदे K. २६ जे वेल B (a) EK, जं om. B (b); ओवलं ? B (d). २७ अह्मारिसे B (a). २८ पवड्डे AB (abcd) DEFGK. २९ वड० AB (abcd) DEFGK. ३० °माणुश्शे AB (abc) DG; °माणुशे EFK.

वज्झं णीअदि तं वेलं कीदिशं भवे। निरीक्ष्य। कधं ऐशे[1] शे णववलिवद्दके[2] विअ मण्डिदे दक्खिणं[3] दिशं णीअदि । अध किं णिमित्तं मम केलिकाए पाशादबालग्गपदोलिकाए[4] शमीवे[5] घोशणा[6] णिवडिदा णिवालिदा[7] अ । विलोक्य। कधं थावलके,[8] चेडे[9] वि णत्थि इध। मा णाम तेण इदो[10] गदुअ मन्तभेदे कडे भविश्शादि[11]। ता जाव णं अण्णेशामि (३३)। इत्यवतीर्योपसर्पति।

चेटः। दृष्ट्वा। भट्टालका,[12] एशे शे आगडे[13] (३४)।

---

दरिद्रचारुदत्तस्य विनाशं (शः)। साम्प्रतम्। अत्तणकेलिकाए आत्मीयायाम्। प्रासादबालाग्रप्रतोलिकायामधिरुह्यात्मनः पराक्रमं पश्यामि। ही वितर्के। एतस्य दरिद्रचारुदत्तस्य वधं नीयमानस्यैव वृद्धो (एतावान्) महान्वृद्धिं प्राप्त इत्यर्थः। जनसंमर्दः। जे वेलं यस्यां वेलायामस्मादृशः प्रवरो वरमानुषो वध्यं नीयते तस्या(स्यां) वेलाया(यां) कीदृशं (शी) भवेत्। वध्यं वधस्थानम्। कथमेष स नवबलीवर्द इव मण्डितो दक्षिणां दिशं नीयते। अथ किंनिमित्तं मदीयायाः प्रासादबालाग्रप्रतोलिकायाः समीपे घोषणा निपतिता निवारिता च। कथं स्थावरकचेटोपि नास्तीह। मा नाम तेनेतो गत्वा मन्त्रभेदः कृतो भविष्यति। तद्यावदेनमन्वेषयामि।

चे०– (३४) भट्टारकाः, एष स आगतः।

१ तेशे CJ २ °वलइक° AB (bc); °वल्लीवद्दबिअ D, °वलवद्द विअ H. ३ दक्षिण AB (bc); दक्षिणं दीशं K. ४ °लिआए B (a). ५ समीबे AB (abc) D. ६ घोषणा AB (bc) D, घोसगा B (ad). ७ निवालिदा CJ. ८ थावडके AB (bc) D, थावलक BK, थावडक B (d) E. ९ चेड B (a). १० इदा गदुअ? AB (c); इदोदुअ? D. ११ भवीआदि BDK, भवायदि B (b) pr. m B (d)? सर्वायदि E, भविआद्दि F. १२ भट्टालका AB (abcd) CDJK. १३ आगदे B B (a).

चाण्डालौ।

ओशलध देध[1] मग्गं[2] दालं ढंकेध[3] होध तुण्हीआ[4]।
अविणअतिक्खविशाणे[5] दुट्टबइल्ले[6] इदो एदि ॥३०॥ (३५)

शकारः। अले अले[7], अन्तलं अन्तलं देध। उपसृत्य। पुत्थका[8] थावलका[9] चेडा, एहि गच्छम्ह (३६)।

चेटः। ही[10] अणज्ज, वशन्तशेणिअं मालिअ ण पलि[11]-तुट्टेशि। शम्पदं पणइजणकप्पपादवं अज्जचालु[12]दत्तं मालि[13]-इदुं ववशिदे[14] शि (३७)।

---

चाण्डा०– ओशलधेति। आर्या छन्दः। (३५) अपसरत ददत (दत्त) मार्गं द्वारं पिदधत (धत्त) भवत तूष्णीकाः। अविनयतीक्ष्णविषाणो दुष्टबलीवर्द इत एति ॥ ३० ॥

शा०– (३६) अरे अरे, अन्तरमन्तरं ददत (दत्त)। पुत्रक स्थावरक चेट, एहि गच्छावः।

चे०– (३७) ही अनार्य, वसन्तसेनिकां मारयित्वा न परितुष्टोसि। साम्प्रतं प्रणयिजनकल्पपादपमार्यचारुदत्तं मारयितुं व्यवसितोसि।

१ देव्व AB (c), दोव्व ? H. २ मग्जं E. ३ ढंक्केध B (a). ४ तुएहीआ AB (c); तुणहीआ B (b). ५ विशाणं AB (abc) D. ६ °बइल्लो K. ७ ले B B (ad). ८ पुत्तका AB (c) J, पुन्थका B (ad) K; पुस्तका B (b) E; पुत्तआ D. ९ थावडका AB (bc) DEK. १० ही ही अ° J. ११ पलितुट्टे AB (abcd) J; पडितुट्टे० K. १२ °चारु०• DE. १३ माल्यइदुं B (b). १४ °शिदो० K.

शकारः । ण हि लअणकुम्भशलिशे हग्गे इत्थिअं वावादेमि (३८) ।

सर्वे । अहो, तुए मालिदा । ण अज्जचारुदत्तेण (३९) ।

शकारः । के एव्वं भणादि (४०) ।

सर्वे । चेटमुद्दिश्य । णं एसो साहू (४१) ।

शकारः । अपवार्य सभयम् । अविदमादिके अविदमादिके । कधं थावलके चेडे शुट्ठु ण मए शञ्जदे । एशे क्खु मम अकज्जश्श शक्खी । विचिन्त्य । एव्वं दाव कलइश्शं । प्रकाशम् । अलिअं भट्टालका हो एशे चेडे शुवण्णचोलिआए

शा०– (३८) न हि रत्नकुम्भसदृशोऽहं स्त्रियं व्यापादयामि ।

सर्वे– (३९) अहो, त्वया मारिता । नार्यचारुदत्तेन ।

शा०– (४०) क एवं भणति ।

सर्वे– (४१) नन्वेष साधुः ।

शा०– (४२) अविदमादिके अविदमादिके । खेदेऽव्ययम् । कथं स्थावरकचेटः सुष्ठु न मया संयतः । एष खलु ममाकार्यस्य साक्षी । एवं तावत्करिष्यामि । अलीकं मिथ्या । भट्टारकाः । हो अहो । एष चेटः सुवर्णचोरिकायाः । हेतौ पञ्चमीयम् । सुवर्ण-

१ लदण AB (bc) G; ओदण marg. जोल० B (d), जोदण० E, ण्दण० F; लोदण० K. २ शालिशे B (b). ३ हगे AB (bcd) DE; ४ इत्थिअ AB (abcd) CDJK. ५ वावादेहि AB (bc) (=व्यापादयामि) AB (c); वाबादेदि B (d) E. वावादेहिमि DH; वाबादेम्मि G. ६ मालिदा AB (acd) DE; माहिदा B (b). ७ किं? K. ८ साहु AB (bc) D. ९ om. B B (a); मादिके om. D. १० थावडअ AB (cd); DFG; थावडय B (b) K, थावडए E. ११ सुट्ठु AB (abcd) FK. १२ सक्खी AB (abcd) D. १३ कलइशं? D. १४ भट्टालका AB (abc); भट्टाल० B (d) CDJK. १५ चेले AB (bc) DEK.

मए गहिदे, पिट्टिदे[1], मालिदे, बद्धे[2] अ । ता किदवेले[3] एशे जं[4] भणादि[5] किं शव्वं[6] शच्चं । अपवारितकेन चेटस्य कटकं प्रयच्छति । स्वैरकम् । पुत्थका[7] थावलका[8] चेडा, एदं गेण्हिअ अण्णधा[9] भणाहि (४२) ।

चेटः । गृहीत्वा । पेक्खध पेक्खध[10] भट्टालका[11] हो, शुवण्णेण[12] मं पलोभेदि (४३) ।

शकारः । कटकमाच्छिद्य । एशे शे शुवण्णके जश्श कालणादो[13] मए बद्धे[14] । सक्रोधम् । हंहो चाण्डाला[15], मए क्खु एशे शुवण्णभण्डाले[16] णिउत्ते[17] शुवण्णं[18] चोलअन्ते मालिदे, पिट्टिदे[19] । ता जदि ण पत्तिआअध[20] ता पिट्टिं[21] दाव पेक्खध[22] (४४) ।

---

चोरिकाहेतोरित्यर्थः । मया गृहीतस्ताडितो मारितो बद्धश्च । तत्कृतवैर एष यद्भणति किं सर्वं सत्यम् । स्वैरम् । पुत्रक स्थावरक चेट, एतद्गृहीत्वान्यथा भण ।

चे०—(४३) पश्यत भट्टारकाः अहो, सुवर्णेन मां प्रलोभयति ।

श०—(४४) एतत्तत्सुवर्णकं यस्य कारणाय(त्) मया बद्धः । हंहो इति संमानपूर्वं संबोधनम् । चाण्डाला, मया खल्वेष सुवर्णभाण्डारे नियुक्तः सुवर्णं चोरयन्मारितस्ताडितः । तद्यदि न प्रत्ययध्वं (?) तदा पृष्ठं तावत्पश्यत ।

---

१ पिट्टिदे AB (ac) K, पिट्टि° B (bd) CDJ. २ om. B B (a); ३ किदे° E. ४ om. B (d). ५ भणाधि B (a); भदाणि ? D. ६ शत्थं सव्वं E; शचं सव्वं K. ७ पुत्तका AB (c) CDJK; पुत्थका B (a), पुशत्तका B (b); पुस्तका B (d) E. ८ थावडक AB (bcd) DFK. ९ अनधा AB (c), अंणधा H. १० om. AB (bcd) DEGK ११ भट्टा° AB (abcd) CDEGJK. १२ सुवण्णेण AB (abcd) D. १३ कारणा om. दो AB (bcd) DEFK. १४ वड्डे AB (bc), बड्डे CDJ. १५ चंडालआ B (d); चंडाला DEH. १६ °भंडालो B (a) १७ णिवुत्ते D. १८ शुवण्ण AB (c); शुवण्णअं D. १९ पिट्टिदे AB (abcd) CDFJK. २० पत्तिआ ? AB (ac). २१ पिट्ठि AB (c), पिट्ठिं B (abd) CD; पिट्ठिं JK. २२ पेक्खधं B (a).

चाण्डालौ । दृष्ट्वा । शोहणं भणादि । विडत्ते चेडे किं ण प्पडवदि ( ४९ ) ।

चेटः । हीमादिके ईदिशे दाशभावे जं शच्चं कंपि ण पत्तिआअदि । सकरुणम् । अज्ज चालुदत्त, एत्तिके मे
235 विहवे ( ४६ ) । इति पादयोः पतति ।

चारुदत्तः । सकरुणम् ।

उत्तिष्ठ भोः पतितसाधुजनानुकम्पि-

न्निष्कारणोपगतबान्धव धर्मशील[10] ।

चाण्डा० – ( ४९ ) शोभनं भणति । विडत्ते चेडे किं ण प्पडवदि । वितप्रश्चेटः किं न प्रतपति इत्यर्थः । ताडनादिना वितप्रश्चेटः किं न प्रतपति संतापेन किं किं स्वामिविरुद्धं नाचरति । न वदति । येन स्वामिविनाशः स्यादपि तु सर्वमेवाचरति वदतीति निर्गलितार्थः ।

चे० – ( ४६ ) हीमादिके खेदे । ईदृशो दासभावो यत्सत्यकमपि न प्रत्याय्यते । प्रत्ययो बोधः । न बोधविषयो भवतीत्यर्थः । प्रशस्तं सत्यं सत्यकम् । प्रशंसायां कन् । आर्य चारुदत्त, एतावान्मे विभवः । सामर्थ्यमित्यर्थः ।

चारु०–उत्तिष्ठ भो इति । वसन्ततिलका छन्दः । न संवदति ।

---

१ सोहणं. B (abcd) DE. २ विडिन्ते D. ३ and °षदि BCDEFGK, प्पतबदि J. ४ ही मादिके B. ५ दास° B (ab) E. ६ सच्चकं ण पत्ति° B (a) ; शच्चकं पि ण पत्ति° B (d) E. सच्चं कंपि° DG ; सच्चकं पि ण K. ७ पत्तिआ इअदि AB (bcd) DEFGK, पत्तिआएदि B. ८ चारुदत्त AB (abcd) D. ९ om. B, B (a). १० °शील DH.

यत्नः कृतोऽपि सुमहान्मम मोक्षणाय
दैवं न संवदति किं न कृतं त्वयाद्य ॥ ३१ ॥

चाण्डालौ । भट्टके, पिट्टिअ एदं चेडं णिक्खालेहि ( ४७ ) ।

शकारः । णिश्शल ले । इति निष्कामयति । अले चाण्डाला, किं विलम्बेध, मालेध एदं ( ४८ ) ।

चाण्डालौ । जदि तुवलशि ता शअं ज्जेव्व मालेहि ( ४९ ) ।

रोहसेनः । अले चाण्डाला, मं मालेध, मुञ्चध आवुकं ( ५० ) ।

---

संवादः प्रामाण्यमिति तान्त्रिकाः । दैवं न प्रमाणतां प्रयातीत्यर्थः ॥ ३१ ॥

चाण्डा०— (४७) भट्टक, ताडयित्वैतं चेटं निष्काश(स)य ।

शका०— (४८) निस्सर रे । अरे चाण्डालाः(लौ), किं विलम्बध्वम् (म्बेथाम्) । मारयतैतम् (तमेतम्) ।

चाण्डा०— ( ४९ ) यदि त्वरयसे तदा स्वयमेव मारय ।

रोह०— ( ५० ) अरे चाण्डाला (लौ), मां मारयत (तम्), मुञ्चत( तं ) पितरम् ।

---

१ सुमहन्म०? AB (c). २ भश्टके EK. ३ चेडअं AB (bcd) DGK. ४ णिक्कालेहि BB (ad). ५ णिष्कम B (d), णिक्कल CJ, ले is followed by णिश्शल D; णिश्शमं E; निश्शम K; णिक्कम (?). ६ निर्वासयति AB (bcd) DFK, निवारयाति E ७ शकार.–अले &c. ८ चण्डाला B B (ab). ९ विलंवधं AB (c) E ; विलंबध B (bd) DH. १० मालेध twice B (d). ११ यदि AB (abc) FJK. १२ तुवलेशि B B (a), तुवलसि DFHK. १३ शयं AB (bc) EK. १४ अरे B. This and the next speech omitted G. १५ चण्डाला B (d) E. चण्डालआ B B (a). मारेध मं B B (a); मालेध DH. १७ मुञ्च K.

शकारः । शपुत्तं ज्जेव एदं मालेध ( ५१ )।

चारुदत्तः । सर्वमस्य मूर्खस्य संभाव्यते। तद्गच्छ पुत्र, मातुः समीपम् ।

रोहसेनः । किं[1] मए गदेण कादव्वम् ( ५२ ) ।

चारुदत्तः ।

आश्रमं वत्स गन्तव्यं गृहीत्वाद्यैव मातरम् ।
मा पुत्र, पितृदोषेण त्वमप्येवं[2] गमिष्यसि ।।३२।।

तद्वयस्य, गृहीत्वैनं व्रज ।

विदूषकः । भो वअस्स, एव्वं[3] तुए जाणिदं[4] तुए विणा[5] अहं पाणाइं[6] धारेमि त्ति ( ५३ ) ।

---

शका०– ( ५१ ) सपुत्रमेवैतं मारयत(तम्) ।

रोह०– ( ५२ ) किं मया गतेन कर्तव्यम् ।

चारु०–आश्रममिति । अनुष्टुप् छन्दः । नगरीमिमामुज्जयिनीं परित्यज्य कस्यापि मुनेराश्रमं गन्तव्यं गृहीत्वा मातरम् । तत्राप्यद्यैव गन्तव्यं न तु श्वः । अत्राह मा पुत्रेत्यादि । पितृदोषेण वसन्तसेनामारणापवादरूपापराधेनेत्यर्थः ।। ३२ ।।

विदू०– ( ५३ ) भो वयस्य, एवं त्वया ज्ञात ( तं ) त्वया विनाहं प्राणान्धारयामीति ।

---

१ किंपि DH. २ °प्यवगमिष्यसि H; त्वयाप्येवं ? K. ३ om. B (d); एववे ? E. ४ जाणिदं C. ५ विण K. ६ पाणाइं H.

चारुदत्तः। वयस्य, स्वाधीनजीवितस्य न[1] युज्यते तव प्राणपरित्यागः।

विदूषकः। स्वगतम्। जुत्तं णेदं। तधा वि ण सक्कुणोमि पिअवअस्सविरहिदो[2] पाणाइं धारेदुं त्ति[3]। ता बम्हणीए[5] दारअं समप्पिअ[6] पाणपरिच्चाएण[7] अत्तणो पिअवअस्सं[8] अणुगमिस्सं। प्रकाशम्। भो वअस्स, पराणेमि एदं लहुं[9] (५४)। इति सकण्ठग्रहं[10] पादयोः पतति। दारकोऽपि रुदन्पतति।

शकारः। अले, णं भणामि शपुत्ताकं चालुदत्ताकं[11] वावादेध[12] त्ति (५५)।

चारुदत्तः। भयं नाटयति।

---

चारु०— न पु(यु)ज्यते इत्यादि। एवमेवात्मघातस्य महापातकत्वादिति भावः।

विदू०— (५४) युक्तं नेदम्। इदं स्वाधीनजीवितस्य प्राणपरित्यागादि योग्यं नेत्यर्थः। किं तु स्नेहशृङ्खलाबन्धनमोचनस्याशक्यत्वादाह। तधा वीत्यादि। तथापि न शक्नोमि प्रियवयस्यविरहितः प्राणान्धर्तुमिति। तद्ब्राह्मण्यै दारकं समर्प्य प्राणपरित्यागेनात्मनः प्रियवयस्यमनुगमिष्यामि। भो वयस्य, परानयाम्येतं लघु।

शका०— (५५) अरे, ननु भणामि सपुत्रकं चारुदत्तकं व्यापादयतेति(तमिति)।

---

१ तव नयुज्यते प्रा० BB (a) २ °विरहिदे AB (bc). ३ धारेदुत्ति D. ४ om. K. ५ बह्मणं B (a). ६ Twice B (b). ७ ०चायेण K. ८ वअस्समग्गं K. ९ लहु AB (c) D. १० ग्रहणं B (d). ११ चारु० B (a); om. D. १२ वावाधत्ति B (a).

चाण्डालौ[1] । अले[2], णह्नि अम्हाणं ईदिशी लाआणत्ती[3] जधा शपुत्तं[4] चालुदत्तं[5] वावादेध त्ति । ता णिक्कम[6] ले दालआ, णिक्कम[7] (५६) । इति निष्क्रामयतः ।

चाण्डालौ । इमं तइअं घोशण[8]ट्ठाणं[9] । ताडेध डिण्डिमं (५७) । पुन[10]र्घोषयतः ।

शकारः । स्वगतम्[11] । कधं एशे[12] ण पत्तिआअन्ति पौला[13] । प्रकाशम्[14] । हंहो चालुदत्ता[15] वडुव्वका[16], ण पत्तिआअदि[17] एशे पौलजणे[18] । ता[19] अत्तणकेलिकाए[20] जीह्नाए भणाहि[21] मए वशन्तशेणिआ[22] मालिदेत्ति[23] (५८) ।

चारुदत्तः । तूष्णीमास्ते ।

---

चाण्डा० – (५६) अरे, नह्यस्माकमीदृशी राजाज्ञप्तिर्यथा सपुत्रं चारुदत्तं व्यापादयतेति(तमिति) । तन्निष्क्र( ष्क्रा )म रे दारक ।

चाण्डा० – (५७) इदं तृतीयं घोषणास्थानम् । ताडयत डिण्डिमम् ।

शका० – (५८) कथमेते न प्रत्ययन्ते पौराः । हंहो चारुदत्त बटुबक, न प्रत्ययते एष पौरजनः । तत् अत्तणकेलिकाए आत्मीयया । जिह्वया भण मया वसन्तसेनिका मारितेति ।

---

१ om D. २ णह्नि J. ३ लाअणत्ति D. ४ शपुत्तक B. ५ चारुदत्तं AB (bcd), om· B. ६ णिक्खम AB (bc) DEK; णिष्कम B (d). ७ om: AB (bcd) DEF. ८ घोसण AB (bcd) DEH. ९ थाणं AB (c); छाणं B (b), ठाणं B (d); त्थाणं DH. १० पूर्वोक्तं घोष० B B (a). ११ om: B (a). १२ शे B B (abd) EK. १३ पउला DH. १४ om· B (a). १५ चारु० AB (bcd). १६ वड्डुवुड्ढका AB (c); वडुड्का B (b); वडुवड्ढुका DH. १७ पत्तआअदि AB (c); पत्तअंआदि D, पतअंदि H. १८ पउल० DH. १९ तो E. २० केलिआए DH. २१ भणेहि BB (a) DH. २२ °शेणा BB (a) DH; वसतसेणिआ E. २३ वावादिदेत्ति BB (a).

शकारः । अले चण्डाले गोहे, ण भणादि चालुदत्तवुड्डु-व्वके ! ना भणावेध डुमिणा जज्जलवंशखण्डेण शल्लेलण तालिअ नालिअ ( ५९ ) ।

चाण्डालः । प्रहारमुद्यम्य । भो चालुदत्त, भणाहि (६०) ।

चारुदत्तः । सकरुणम् ।

प्राप्यैतद्व्यसनमहार्णवप्रपातं
न त्रासो न च मनसोऽस्ति मे विषादः ।
एको मां दहति जनापवादवह्नि-
र्वक्तव्यं यदिह मया हता प्रियेति ॥ ३३ ॥

शकारः । पुनस्तथैव ।

---

शका०– (५९) अरे चाण्डाल गोह, न भणति चारुदत्तवृद्ध-बकः । बुडुव्वकः इतीयं भाषा । बुडवक इति प्रलपन्ति च लोकाः । तद्भणयतानेन जर्जरवंशखण्डेन संखलेन ताडयित्वा । संखलेन वध्यपटहडिण्डिमवादनदण्डेनेत्यर्थः ।

चाण्डा०– ( ६० ) भो चारुदत्त, भण ।

चारु०–प्राप्यैतव्यसनेति । एतद्व्यसनं वसन्तसेनामारणापवादरूपं दुःखं तदेव महार्णवस्तत्र प्रपातं प्राप्येत्यन्वयः । प्रिया वसन्तसेना ॥ ३३ ॥

शका०– पुनस्तथैव । भणेति शेषः ।

---

१ चण्डालआ० B; चण्डाला B (d) E. २ चारु० AB (bcd). ३ वडुचके AB (bc); वुद्धवडके D; वुद्धवडुके H. ४ खंखमिणा BB (ad); खंश्वमिणा EK. ५ जर्जर AB (bcd) K; जज्जर B (a) D. ६ सखलेण B (ad). ७ om: AB (bc) DEF; °लिअ B (d). ८ अज्जचालु० BB (a); चारुदत्त AB (abcd) K. ९ महार्णवं F. १० प्रयातं AB (c) D; प्रणतं B (a).

चारुदत्तः । भो भोः पौराः, 'मया खलु नृशंसेन'-इत्यादि पुनः पठति ।

शकारः । वावादिदा (६१) ।

चारुदत्तः । एवमस्तु ।

चाण्डालः । अले, तेव अत्त वज्झवालिआ (६२) ।

द्वितीयः । अले, तव (६३) ।

प्रथमः । अले, लेक्खअं कलेम्ह (६४) । इति बहुविधं लेखकं कृत्वा ।

प्रथमः । अले, जदि मम केलिका वज्झवालिआ ता चिट्ठदु दाव मुहुत्तअं (६५) ।

द्वितीयः । किं णिमित्तं (६६) ।

[चारु०– नवमाङ्कः । पृ० ४०९।४१७ च श्लो० ३०।३८च ।]

शका०– (६१) व्यापादिता ।

चाण्डा०– (६२) अरे, तव वध्यपालिका ।

द्विती०– (६३) अरे, तव ।

प्रथ०– (६४) अरे, लेखं कुर्मः (र्वः) ।

प्रथ०–(६५) अरे, यदि मम केलिका मदीया । वध्यपालिका तदा तिष्ठतु तावन्मुहूर्तम् । चारुदत्त इति शेषः । प्रक्रान्तं वा ।

द्विती०– (६६) किं निमित्तम् ।

---

१ भो भोः पौरा om: DH. २ Whole verse see before for इत्यादि D. ३ अत्त om AB (cd) DK, तवद्धबालिया B (b). ४ वद्ध° AB (c) FG. ५ अले अले B (a); ६ लेखअं AB (c) D; अलेक्खअं B (d); लेक्खकं E. ७ कलम्ह B (d). ८ वद्ध० AB (ac). ९ °वाडिदा and over दा the letter य B (d), वाडिदा E १० चिट्ठ B (b) D; चिट्ठदुम्हएव ? H.

प्रथमः । अले, भणिदो म्हि पिदुणा[१] शग्गं गच्छन्तेण जधा[२] पुत्त वीरअ, जइ तुह वेज्झवाली[३] होदि मा शहशत्ति[४] वावादअशि[५] वज्झं ( ६७ ) ।

द्वितीयः । अले, किं णिमित्तं ( ६८ ) ।

प्रथमः । कदावि कोवि शाहू[६] अत्थं दइअ[७] वज्झं[८] मोआवेदि । कदावि[९] लण्णो पुत्ते[१०] भोदि । तेणं[११] वड्ढावेण[१२] शव्ववज्झाणं मोक्खे[१३] भोदि[१४] । कदावि हत्थी बन्धं खण्डदि । तेणं[११] शम्भमेण[१५] वज्झे[१६] मुक्के[१७] भोदि । कदावि लाअपलिवत्ते[१८] भोदि । तेण शव्व-[१९]वज्झाणं मोक्खे[१३] भोदि ( ६९ ) ।

---

प्रथ०– ( ६७ ) अरे, भणितोस्मि पित्रा स्वर्गं गच्छता । म्रियमाणेन पित्रा मरणसमये मह्यं कथितमित्यर्थः । तदेवाह । जधेत्यादिना । यथा पुत्र वीरक, यदि तव वध्यपाली भवति मा सहसत्ति सहसैवेत्यर्थः । व्यापादयसि वध्यम् ।

द्विती०– ( ६८ ) अरे, किं निमित्तम् ।

प्रथ०– ( ६९ ) कदापि कोपि साधुरर्थं दत्त्वा वध्यं मोचयति । कदापि राज्ञः पुत्रो भवति । तेन वद्धावेन बड्ढावेनेति देशी केवलं भाषा । वृद्धिमहोत्सवेनेत्यर्थः । महोत्सववृद्धचेति यावत् । सर्ववध्यानां मोक्षो भवति । कदापि हस्ती बन्धं खण्डयति । 'बन्धं

---

१ पिदुरुणा E. २ यथा AB (bc), जहा D; जहर (?), H. ३ वज्ज० AB (ac). ४ महसत्ति AB (bcd) K; शहशा वावा० B; सहशत्ति DH, शहसत्ति E. ५ वावादीअशि BEK, वावादीअशी DH. ६ शाधू AB (bcd) DEF; साहू J. ७ दइय B (a). ८ om: B (a). ९ कदावे E. १० पुत्तो DH ११ तेन C. १२ om B B (a); वड्ढावेण B (d); वद्धावएण DH; वड्ढावेण E; वदावेण K. १३ मोक्खो AB (abcd) DJK. १४ होदि AB (bcd) DFGJK. १५ संभमेण. १६ वज्झो B (d) H. १७ मुत्ते AB (bc) D; मुत्तो B (d) E. १८ °पडिव० AB (abcd) DEF. १९ शव° J.

शकारः[1] । किं किं लाअपलिवत्ते[2] होदि ( ७० ) ।

चाण्डालः[1] । अले[3], वज्झवालिआए[4] लेक्खअं[5] कलेम्ह ( ७१ ) ।

शकारः । अले, शिग्घं मालेध चालुदत्ताकं ( ७२ ) ।

इत्युक्त्वा चेटं गृहीत्वैकान्ते स्थितः ।

चाण्डालः । अज्ज चालुदत्त, लाअणिओओ[6] क्खु अवलज्झदि[7] । ण क्खु[8] अम्हे चाण्डाला[9] । ता शुमलेहि[10] जं[11] शुमालिदव्वं[12] ( ७३ ) ।

---

खुट्टदि' इति पाठः क्वचित् । बन्धं छिन्नती( नत्ती )त्यर्थः । तेन संभ्रमेण वध्यो मुक्तो भवति । कदापि राजपरिवर्तो भवति । तेन सर्ववध्यानां मोक्षो भवति ।

शका०— (७०) किं किं राजपरिवर्तो भवति । राज्ञः परिवर्तः परिवर्तनम् । अन्यो राजेत्यर्थः ।

चाण्डा०— ( ७१ ) अरे, वध्यपालिकाया लेखं कुर्मः । लेखं कियत्यः पालिकास्तत्र मम च कियत्य आसन्नावाभ्यामुपभुक्ता वा काः का इत्येवं गगनरूपं लिखितदर्शनरूपं च व्यवहारमित्यर्थः । पूर्वमिह च बोध्यः ।

शका०— ( ७२ ) अरे, शीघ्रं मारयत चारुदत्तकम् ।

चाण्डा०— ( ७३ ) आर्य चारुदत्त, राजनियोगः खल्वपराध्यति । न खलु वयं चाण्डालाः । तत्स्मर यत्स्मर्तव्यम् ।

---

१ Speeches of चाण्डा० and शकार om K. २ °प्पडि० AB (bc) D; °पडि० B (a), प्पलि० B (d). ३ अलेलं B, अले अले B (a). ४ °वाड्डिआए AB (bcd) EF, °वालिआलं० D, °बाढ्ढिआल० H. ५ लेखअं AB (c) DE. ६ लाअणिओ B (a); लाअअणिओओं B (d) ७ ०रज्झादि BDG: ०रशादि E. ८ खु AB (c), om. B, हु B (cd) EG. ९ चाण्डाल AB (c). १० सुमलेहि AB (bcd) DE, सुमरेहि B (a). ११ om. B (a), जं B (b); जा B (d). १२ सुमलि० D.

चारुदत्तः ।

प्रभवति यदि धर्मो दूषितस्यापि मेऽद्य
प्रबलपुरुषवाक्यैर्भाग्यदोषात्कथंचित् ।
सुरपतिभवनस्था यत्र तत्र स्थिता वा
व्यपनयतु कलङ्कं स्वस्वभावेन सैव ॥३४ ॥

भोः, क्व तावन्मया गन्तव्यम् ।

चाण्डालः । अग्रतो दर्शयित्वा । अले, एदं दीशादि दक्खिणमशाणं । जं पेक्खिअ वज्झा झत्ति पाणाइं मुञ्चन्ति । पेक्ख पेक्ख ।

अद्धं कलेवलं पडिवत्तं कड्ढन्ति दीहगोमाओ ।
अद्धं पि शूललग्गं वेशं विअ अट्टहाशश्श ॥३५॥(७४)

---

चारु०— प्रभवतीति । मालिनी छन्दः । प्रबलानां न्यायाधीशाना-मधिकरणिकादीनां पुरुषाणां वाक्यैर्दूषितस्याद्य मे भाग्यदोषाद्विदूषक-कक्षतःसुवर्णालंकारनिपातरूपाद्दूषितत्वे( स्ये )त्यन्वयः । स्वर्गस्था भूमिस्थिता वा सैव वसन्तसेनैव । इमं कलङ्कं दूरीकरोतु ॥ ३४ ॥

चाण्डा० –( ७४ ) अरे, एतद्दृश्यते दक्षिणश्मशानम् । यत्प्रेक्ष्य वध्या झटिति प्राणान्मुञ्चन्ति । पश्य । अर्द्धेति। आर्या छन्दः । अर्धं कलेवरं प्रतिवृत्तं कर्षन्ति दीर्घगोमायवः । अर्धमपि शूललग्नं

---

१ प्रबल B B (ad) EK. २ भुवनस्था B B (ad). ३ तत्रा° B (b). ४ स्वस्ति० G. ५ सैषा E. ६ हरिकेण ? K. ७ °मसाणं B (a). ८ °अज्ज वज्झा B (a); पेक्खिवज्झा D. ९ झत्ति CJ; ज्झति E, ओत्ति K. १० मुञ्चति AB (c); मुञ्चेति B (a); मुञ्चदि D. ११ om: AB (bc) DFG. १२ अद्धकलेवरप-डिवत्त B (abd) °वुत्तं DEH; ०वत्तं AFGK, पलिवत्तं B. १३ कड्ढत्ति AB (c) E; कटान्ति B (ab); कड्ढति B (d); कड्ढन्ति H, कड्ढिति K १४ गोमाअओ DH. १५ वि AB (abcd) DF, °ह्मिवि ? E, अर्धं वि K १६ शूलग्गं B (a), शूललग्गं E; ०ललग्गं J. १७ वेशमिव B (abd), वेशंमिव EK १८ °हासस्य B (a).

चारुदत्तः । हा हतोस्मि मन्दभाग्यः । इति सावेगमुपविशति ।

[1]शकारः । ण दाव गमिश्शं । चा[2]लुदत्तकं वावादअ[3]न्तं दाव पेक्खामि । परिक्रम्य दृष्ट्वा । कधं उ[4]वविश्टे (७९) ।

[5]चाण्डालः । चा[6]लुदत्ता, किं भी[7]देशि (७६)।

चारुदत्तः । सहसोत्थाय । मूर्ख, 'न भी[8]तो मरणादस्मि के[9]वलं दूषितं यशः' [10]इत्यादि पुनः प[11]ठति ।

[12]चाण्डालः । अज्ज चा[13]लुदत्त, गअण[14]दले प[15]डिवशन्तो[16] चन्दशुज्जा[17] वि विप[18]त्तिं लहन्ति । किं उ[19]ण जणा[20] म[21]लण-

वेशमिवाट्टहासस्य । प्रतिवृत्तमर्धं कलेवरमित्यर्थः । गोमायुः शृगालः । वेशमिवेत्यादेर्हास्यास्य(स्प)दमित्यर्थः ॥ ३९ ॥

शका० – (७९) न तावद्गमिष्यामि । चारुदत्तं व्यापाद्यमानं तावत्पश्यामि । कथमुपविष्टः ।

चाण्डा० – (७६) चारुदत्त, किं भीतोसि ।

[चारु० – पृ० ४४१ श्लो० २७]

चाण्डा० – (७७) आर्य चारुदत्त, गगनतले प्रतिवसन्तः

१ नेपथ्ये before शकार B (abd) E. २ चारु० AB (bcd) E. ३ °अन्ता B (d). ४ उवविड्ढ AB (abc) CDHJK; उववि्ट्ठो B (d). ५ चाण्डालौ B (a). ६ चालुदत्त CJ. ७ भूंद० B (a); भिदे० B (d). ८ om: B (a). ९ भीरुर्म० BDEFGK. १० केवलं......यश· om. B B (a); ११ Whole verse repeated to दूषित with इति for इत्यादि D. १२ om· B (a) H. १३ चारु० AB (abcd) E. १४ °तले B (a). १५ परि० B (d) E. १६ वसन्ता AB (abcd) E. १७ °सुज्जा AB (abcd) D. १८ om AB (bc) D. १९ पुण BDEG. २० जाण B (b), जाण pr. m. corr. जणा B (d), जण G. २१ मअल० DH.

भी[1]लुआ मा[2]णवा वा । लोए कोवि उट्ठिदो प[3]डेदि, कोवि पडि-दोवि उ[4]ट्ठेदि ।

उ[5]ट्ठन्तं पडन्ताह व[6]शणपा[7]डिआ श[8]वश्श उण अ[9]त्थि ।
एदाइं हिअए क[10]दुअ शन्धालेह्नि अत्ताणअं ॥ ३६ ॥ 340

चाण्डालं प्रति । एदं च[11]उट्ठं घो[12]शणट्ठा[13]णं । ता उ[14]ग्घोशम्ह । (७७)।
पुनस्तथैवोद्घोष[15]यतः ।

**चारुदत्तः** । हा प्रिये वसन्तसेने, 'शशि[16]शकलमयूख'
इत्यादि पु[17]नः पठति ।

---

( न्तौ ) चन्द्रसूर्याः ( र्यौ ) विपत्तिं लभन्ते (भते) । किं पुनर्जना मरणभीरुका मानवा वा । लोके [कोप्युत्थितः पतति], कोपि पतितो-प्युत्तिष्ठते (ति) । उट्ठन्त इति । उत्थितः पतनं च(?) । वसनपातिका शवस्य पुनरस्ति । वसनपातिका वस्त्रपतनम् । वस्त्रं प्रसारितं यथा निपतति पुनरुत्पतति च तथा शवोपि जीवति कदाचित् । किं पुनर्जी( र्जी )वन्म( वन्म )नुष्यः पतितः पुनरुत्तिष्ठत( ति ) इति वाच्यमिति भावः । एतानि हृदये कृत्वा स (?) संधारयात्मा-नम् ॥३६॥ एतच्चतुर्थघोषणास्थानम् । तदुद्घोषामः ( षयामः ) ।
[चारु°– पृ° ४३० श्लो° १३]

---

१ भीरुआ B (a); भीतुआ B (b). २ माणवा. वालो. ण-कोन्बि B (a); मा वा वा लो ण del. all. वा and ण corr in ए B (d); माण... . लोए B. ३ पलदि AB (abcd) DEFG. ४ उड्डदि B (d). ५ Not a verse BCD उड्डत B (d); उत्थन्त G; ६ वशएण B (b). ७ पालिआ B. ८ शत्तश्श B (ad). ९ अस्थि E. १० संधालेहि AB (abcd) CDJ. ११ °उत्थं ABB (bcd); चउत्थअं B (a); १२ घोसण° B (ad); घोषणा B (b) E; घोसणा DH. १३ °त्थाणं B (a); ञाणं B (b); ठाणं H. १४ °सम्ह AB (abcd) DE, घोसम्ह K १५ °घोषयाति AB (bc) FG; For पुनस्तथैव &c. उभौ शुणाध ... शासदि इति उद्-घोषयति D. १६ शशिविमल° B (d); whole verse repeated for इत्यादि D, शशिशकलभूषेत्यादि K. १७ om: B.

ततः प्रविशति ससंभ्रमा वसन्तसेना भिक्षुश्च ।

भिक्षुः । हीमाणहे अ[1]ट्ठाणपलि[2]द्दशन्तं शमश्शाशी[3]अ व[4]शन्तशेणिअं ण[5]अन्ते अणुग्गहि[6]दम्हि पव्वज्जाए । उवाशिके, कहिं तुमं णइश्शं (७८) ।

वसन्तसेना । अज्ज, चारुदत्त[7]स्स ज्जेव[8] गेहं । तस्स दंसणेण मअलाञ्छणस्स विअ कुमुदिणिं[9] आणन्देहि मं[10] (७९) ।

भिक्षुः । स्वगतम् । कदलेण मग्गे[11]ण पविशा[12]मि । विचिन्त्य । लाअ[13]मग्गेण ज्जेव पविशामि । उवाशिके, एहि[14] । इमं लाअमग्गं । आकर्ण्य । किं णु हु एशे[15] लाअमग्गे महन्ते कलअले[16] शुणीअदि[17] (८०) ।

---

वसन्तसेना भिक्षुश्च । इमौ तौ पूर्वोक्तौ [पृ० ३६८–३७१] ।

भिक्षुः –(७८) हीमाणहे आश्चर्ये । अस्थानपरिश्रातां(न्ताम्) । समाश्वास्य वसन्तसेनिकां नयन्ननुगृहीतोस्मि । प्रव्रज्यया संन्यासेनेत्यर्थः । प्रव्रज्या संन्यासः । उपासिके, कुत्र त्वां नेष्यामि ।

वस० – ( ७९ ) आर्य, चारुदत्तस्यैव गेहम् । तस्य दर्शनेन मृगलाञ्छनस्येव कुमुदिनीमानन्दय माम् ।

भिक्षुः–( ८० ) क(त)रेण मार्गेण प्रविशामि । राजा(ज)-मार्गेणैव प्रविशामि । उपासिके, एहि । इमं राजमार्गम् (अयं)

---

१ पत्थाण A B (c) F H, अत्थाण B (ab) K; पट्ठाण D; अड्डाण E: अछाण G. २ पडिश्शं° B (abcd) [ श्शन्ति B (a) E; श्शन्ति B (bc); शन्ति FG; श्शति corr. श्शतं B (d) D H K.] ३ °सिअ D. ४ वसन्त° A B (abc). ५ णयन्ते AB (c) D; णअन्तो B (ad) G; णयतो B (b); णयन्तो EK. ६ °ग्गिहिदाम्रि° AB (bcd) G; अणग्गिहि° E. ७ चालुदत्तश्शे जेव्व AB (c); चालुदत्तस्त B (a); चालुदत्तश्शाव्व B (b); चालुदत्तस्सेव्व EK. ८ °लंछणस्स BEG. ९ °णीं DEH. १० णं E, मां K. ११ मग्जेण ? E १२ गच्छामि BB (a). १३ राअ° B (d). १४ एहि एहि B B (a); एदिएक्षं E. १५ पश्शे B (d). १६ कलकले B (a); कल्यंलआले ? B (b). १७ सुणीअदि AB (c).

**वसन्तसेना** । अग्रतो निरूप्य । कधं पुरदो महाजणसमूहो । अज्ज, जाणाहि दाव किण्णेदं त्ति । विसम[1]भरक्कन्ता विअ [2]वसुन्धरा [3]एअवासोण्णदा उज्जइणी वट्टदि (८१) ।

**चाण्डालः** । इमं अ [4]पच्छिमं [5]घोषणट्ठाणं । ता [6]तालेध डिण्डिमं । [7]उग्घोशेध [8]घोशणं । तथा कृत्वा । भो [9]चालुदत्त, [10]पडिवालेहि । मा भाआहि । लहुं ज्जेव [11][12]मालीअशि (८२) । 360

**चारुदत्तः** । भगवत्यो देवताः ।

**भिक्षुः** । श्रुत्वा ससंभ्रमम् । [13]उवाशिके, तुमं किल [14]चालुदत्तेण मालिदाशि त्ति [15]चालुदत्ते मालिदुं णीअदि (८३) ।

---

राजमार्गः ) । किं नु खल्वेष राजमार्गे महान्कलकलः श्रूयते ।

वस० – ( ८१ ) कथं पुरतो महाजनसमूहः । आर्य, जानीहि तावत्किं नेदमिति । विषमभरक्रान्तेव वसुंधरा एकवासोन्नतोज्जयिनी वर्तति( ते ) ।

चाण्डा० – (८२) इदं च पश्चिमं घोषणस्थानम् । तत्ताडयत डिण्डिमम् । उद्घोषत घोषणाम् । भो चारुदत्त, प्रतिपालय । क्षमस्वेत्यर्थः । मा बिभेहि(भीहि) । लघु शीघ्रमेव मार्यसे ।

भिक्षुः— श्रुत्वेति । घोषणां श्रुत्वेत्यर्थः । (८३) उपासिके, त्वं किल चारुदत्तेन मारितासीति चारुदत्तो मारयितुं नीयते ।

---

१ भवक्कंता B (a); भरक्कांता D. २ वसुंधराए D. ३ एआवासो AB (c) D; एआवासो pr. m. corr. एअआ°; B (d) एअवासा° H. ४ पश्चिमं ABC (a), पक्षिमं B (b). ५ घोसण° B (ad). ६ ताडेध B B (a). ७ °ग्घोसेध B (ad). ८ घोषणं AB (bc) E; घोसणं B (ad) D. ९ चारु° B (ad). १० पडु D; पलि° F. ११ वालेहि ·· ·· भाआहि om· AB (bc) DG. १२ मालीअसि. DEG. १३ उवाशिक B (d). १४ चारु° B (a). १५ चालुदत्तो AB (abcd) CJ.

**वसन्तसेना** । ससंभ्रमम् । हद्धी[1] हद्धी कधं मम मन्दभाइणीए कदे अज्जचारुदत्तो[2][3] वावादीअदि । भो, तुरिदं तुरिदं आदेसेहि मग्गं ( ८४ ) ।

**भिक्षुः** । तुवलदु[4] तुवलदु[5] बुद्धोवाशिआ[6] अज्जचालुदत्तं[7] जीअन्तं[8] शमश्शाशिदुं[9] । अज्जा, अन्तलं अन्तलं देध (८५) ।

**वसन्तसेना** । अन्तरं अन्तरं[10] ( ८६ ) ।

**चाण्डालः** । अज्ज चालुदत्त[11], शामिणिओओ[12][13] अवलज्झदि[14] । ता शुमलेहि[15] जं शुमालिदव्वं[16] ( ८७ ) ।

**चारुदत्तः** । किं बहुना । 'प्रभवति' इत्यादि श्लोकं[17] पठति ।

---

वस०—(८४) हद्धी हद्धी । भये वीप्सा । कथं मम मन्दभागिन्याः कृत आर्यचारुदत्तो व्यापाद्यते । भोः, त्वरितं त्वरितमादिश मार्गम् ।

भिक्षुः — (८५) त्वरतां त्वरतां बुद्धोपासिकार्यचारुदत्तं जीवन्तं समाश्वस्तुम् ( श्वासयितुम् ) । आर्याः, अन्तरमन्तरं ददत ( दत्त ) ।

वस० —( ८६ ) अन्तरमन्तरम् ।

चाण्डा०— ( ८७ ) आर्य चारुदत्त, स्वामिनियोगोपराध्यति । तत्स्मर यत्स्मर्तव्यम् ।

[चारु०— पृ० ४५७ श्लो० ३४]

---

१ हद्धि हद्धि D. २ अज्ज om: B (a). ३ चालुदत्तो AB (abc) DH. ४ तुलिद तुलिद B (a). ५ ओचलदु ओचलदु G. ६ बुद्धोवाशिका CJ; ०सिका D; उद्धोवासिआ G. ७ चारु० B (a). ८ जीवतं B (a); जीअतं B (d). ९ ०श्शादिदुं AB (bc); ०श्शादिदु B (a); ०श्शाशिदुं DG. १० अन्तलं अन्तलं AB (abcd) DEF. ११ चारु० AB (bc); १२ सामि० AB(abcd) D. १३ णिओदक्खु B (a). १४ ०रज्झदि BDE; ०रज्झति B (b). १५ सुमलेहि AB (bcd) D; सुमरेहि B (a). १६ सुमालि० AB (bcd) D; सुमरि० B (a) १७ श्लोकद्वयं BB (a); om: G; whole verse for इत्यादि D.

चाण्डालः। खड्गमाकृष्य। अज्ज [1]चालुदत्त. उत्ताणे भविअ [2]शमं [3]चिट्ठे। एक[4]पहालेण [5]मालिअ तुमं [6]शग्गं णेम्ह (८८)।

[7]चारुदत्तः। तथा तिष्ठति।

चाण्डालः। प्रहर्तुमीहते। खड्गपतनं हस्तादभिनयन्। ही कधं।

[8]आअट्टिदे [9]शलोशं [10]मुट्ठीए मुट्ठिणा [11]गहीदे वि।
[12]धलणीए कीश पडिदे [13]दालुणके [14]अशणिशण्णिहे खग्गे ॥३७॥

जधा एदं [15]शंवुत्तं [16]तधा तक्केमि [17]णं [18]विवज्जादि अज्ज[19]चालुदत्ते त्ति। भअवदि [20]शज्झ[21]वाशिणि, पशीद पशीद। अवि णाम [22]चालुदत्तश्श [23]मोक्खे भवे। तदो [24]अणुगहिदं तुए [25]चाण्डालउलं भवे (८९)।

---

चाण्डा० – (८८) आर्य चारुदत्त, उत्तानो भूत्वा समं तिष्ठ। एकप्रहारेण मारयित्वा त्वां स्वर्गं नयामः।

चाण्डा० – (८९) ही विस्मये। कथम्। आअट्टिदे इति। आर्या छन्दः। आकृष्टः सरोषं मुष्टौ मुष्टिना गृहीतोपि। धरण्यां किमर्थं पतितो दारुणकोऽशनिसंनिभः खड्गः ॥ ३७ ॥ यथैतत्संवृत्तं तथा तर्कयामि न विपद्यत आर्यचारुदत्त इति। भग-

---

१ चालुदत्ता AB (c) DGK, चारुदत्त B (ab). २ समं AB (abcd) DJ. ३ चिष्ठ C. ४ ०पहालेण BD. ५ मछिलिअ B (a). ६ सग्गं B (a); शग्जं E. ७ 'om AB (bc) DG. ८ आअछिदे B (a). ९ सलोशे B (d) १० मुट्ठिए E. ११ गिर्हदे B (d); गीहिदे E. १२ धरणीए B (a) K. १३ दालुणए BB (a). १४ अशणिहे E १५ संवुत्तं A B (abcd) DJ. १६ तथा B (d). १७ णा D. १८ विज्जति B (a); विवज्झादि B(d) १९ °चारु० AB (abc); ०दत्त त्ति D २० सह्य, AB (bc) FG; सत्थ० B (ad) K; शत्थ DE; स्मत्थ H. २१ वाइणि B (a); वाशिणि text, marg. हि B (d); वासिणी F; वासिनि GK. २२ चारु° AB (abc) D. २३ मोक्खो AB(abcd) UK. २४ °गिहिदं AB (abcd) EK; ग्गिहिदं D. २५ चण्डाल० B B (bd).

अपरः । जेआणत्तं[1] अणुचिट्ठम्ह[2] ( १० ) ।

प्रथमः । भोदु[3] । एव्वं कलेम्ह ( ११ ) । इत्युभौ चारुदत्तं शूले समारोपयितुमिच्छतः ।

चारुदत्तः । 'प्रभवति' इत्यादि[5] पुनः पठति ।

भिक्षुर्वसन्तसेना च । दृष्ट्वा[6] । अज्जा, मा दाव मा दाव । अज्जा, एसा अहं मन्दभाइणी जाए[8] कारणादो[9] एसो[10] वावादीअदि ( १२ ) ।

चाण्डालः । दृष्ट्वा ।

तुलिदं क्रा उण एशाँ अंशपडन्तेण[11] चिउलभालेण[12] ।
मा मेत्ति वाहलन्ती उद्विदहत्था[13] इदो एदि ॥३८॥ (१३)

---

वति सह्यवासिनि, प्रसीद । सह्यः पर्वतस्तत्र वर्तमानां दुर्गां देवीं प्रार्थयते । प्रार्थनामेवाहात्रि णामेत्यादिना । अपि नाम चारुदत्तस्य मोक्षो भवेत् । तदानुगृहीतं त्वया चाण्डालकुलं भवेत् ।

अपरः – ( १० ) यथाज्ञप्तमनुतिष्ठावः ।

प्रथमः – ( ११ ) भवतु । एवं कुर्वः ।

चारु०—प्रभवतीति पद्यमन्तकाले स्मरणरूपमिति तदेव पुनः पुनः पठतीति ध्येयम् ।

भिक्षुर्वस०–(१२) आर्याः, मा तावत् । आर्याः, एषाहं मन्दभागिनी यस्याः कारणादेष व्यापाद्यते ।

चाण्डा० – ( १३ ) तुलिदमिति । आर्या छन्दः । त्वरितं

---

१ जआणत्तं B (bd). २ ०चिट्ठह्म C. ३ भोदु भोदु G. ४ उच्छ्रित G. ५ Followed by तृतीयपङ्क्तिस्थं D. ६ om AB (c) DF. ७ om : G. ८ जस्सा AB (bcd) DEFK; जस्स G. ९ कारणा BGK; marg. दो B (d), कारणाए E. १० एस B(a). ११ पलंतेण AB (abcd) DE १२ चिहुल B (ab) K ; चुहुल G. १३ उच्छिद AB (bc) FG, उत्थिद्ध° D.

वसन्तसेना । अज्ज चारुदत्त, किण्णेदं (१४) । इत्युरसि पतति ।

भिक्षुः । अज्ज चालुदत्त, किण्णेदं ( १५ )। इति पादयोः पतति ।

चाण्डालः । सभयमपसृत्य । कधं वशन्तशेणा । णं क्खु अम्हेहिं शाहू ण वावादिदे ( १६ ) ।

भिक्षुः । उत्थाय । अले, जीवदि चालुदत्ते ( १७ ) ।

चाण्डालः । जीवदि वस्सरसदं ( १८ )।

वसन्तसेना । सहर्षम् । पच्चुज्जीविदम्हि ( १९ ) ।

---

का पुनरेषांसपतता चिकुरभारेण । मा मेति व्याहरन्त्युत्थितहस्तेत एति ॥ ३८ ॥

वस० – ( १४ ) आर्य चारुदत्तं( त्त ), किं नेदमिति ।

भिक्षुः – ( १५ ) आर्यचारुदत्त, किं नेदम् ।

चाण्डा० – (१६) कथं वसन्तसेना । ननु खलु(?)खल्वस्माभिः साधुर्न व्यापादितः ।

भिक्षुः – ( १७ ) अरे, जीवति चारुदत्तः ।

चाण्डा० – ( १८ ) जीवति वत्सरशतम् ।

वस० – ( १९ ) प्रत्युज्जीवितास्मि । निर्गतजीवस्य पुनर्जीवनं

---

१ om. B (a). २ चालुदत्त B (d). ३ °णेदंत्ति AB (abcd); °णेदंति DE. ४ चारुदत्तस्स AB (c) DF; चारुदत्त B (a); चारुदत्तत्तम्म B (b). ५ °उपसृत्य AB B (abc) CDFJK. ६ वसंतसेणा AB (abcd) E. ७ णं कखु repeated once more EGK. ८ साहु AB (c) DG; साहू B (abd) E. ९ अज्जचालु० B; अज्जचारु० B (a) E. १० वरिससदं B (a); वम्मरसदं B (b); वस्सशद B (d); वश्शरशदं D; वस्ससदं EK. वश्शशदं J. ११ ०चुबजीवि० B (d); सुच्चजीवि० K.

चाण्डालः । ता जाव [1]एदं [2]वुत्तंतं [3]लाइणो जेण्णवाडगं[4]-दश्शा णिवेदेम्ह ( १०० ) । इति निष्क्रमतः ।

शकारः । वसन्तसेनां दृष्ट्वा सत्रासम् । हीमादिके केण गब्भदाशी[6] जीवाविदा[7] । उक्कन्ताइं[8] मे पाणाइं । भोदु । पला-इश्शं[9] ( १ ) । इति पलायते ।

चाण्डालः । उपसृत्य । अले, णं अम्हाणं ईदिशी[11] लोआ-णत्ती[12] जेण शा[13] वावादिदा तं मालेधत्ति[14] । ता लट्ठिअशालअं ज्जेव अण्णेशम्ह[15] (२ ) । इति निष्क्रान्तौ ।

---

प्रत्युज्जीवनम् । गतजीविता पुनरागतजीवितास्मीत्यर्थः । अत्र जी-वस्थानीयश्चारुदत्त एवेत्यवधेयम् ।

चाण्डा० – ( १०० ) तद्यावदेतं वृत्तान्तं राज्ञो यज्ञवाटगत-स्य निवेदयावः ।

शका० – ( १ ) हीमादिके खेदे । केन गर्भदासी जीवाविदा जीवदवस्थां प्रापितेत्यर्थः । उत्क्रान्ता मे प्राणाः । भवतु । पलायिष्ये ।

चाण्डा० – उपसृत्येति । द्वितीयचाण्डालस्य समीपं गत्वे-त्यर्थः । ( २ ) अरे, नन्वस्माकमीदृशी राजाज्ञप्तिर्येन साव्यापादि-ता तं मारयत । तद्राष्ट्रियश्यालमेवान्वेषयावः ।

---

१ जधाशंवुत्तं B B (a); °उत्तत्तं G; वुत्तं J. २ राइणो AB (c) CDGJ; लइणो B (a); लाईणो E. ३ जण० B (d). ४ °गदस्स AB (abc) D. ५ णिवेदह्म EG. ६ °दासी AB (bcd) CJ. ७ जीविदा DH. ८ क्कंताईं B (a); उक्कंताइ B (d), उक्कमाइं E. ९ ०विश्शं H. १० om. B B (a). ११ ईदिश/ AB (bc); om: B; इदिशी B (d). १२ लायाणत्ति K. १३ सा AB (abcd) DEG; ०णाणिआ B B (abd). after शा. १४ त्ति om. BDEG. १५ अण्णेसह्म DE.

**चारुदत्तः** । सविस्मयम् ।

> के[१]यमभ्युद्यते शस्त्रे मृत्युवक्त्रगते मयि ।
> अनावृष्टिहते [२]शस्ये [३]द्रोणवृष्टिरिवागता ॥ ३९ ॥

अवलोक्य च ।

> वसन्तसेना किमियं द्वितीया
> समागता सैव दिवः किमित्थम् ।
> भ्रान्तं मनः पश्यति वा ममैनां
> वसन्तसेना न मृताथ सैव ॥४०॥

अथवा ।

> किं नु[४] स्वर्गात्पुनः प्राप्ता मम जीवातु[५]काम्यया ।
> तस्या रूपानुरूपेण किमुतान्येयमागता ॥४१॥

**वसन्तसेना** । सास्रमुत्थाय पादयोर्निपत्य । अज्ज चारुदत्त, सा ज्जेव्व अहं पावा जाए [६]कारणादो [७]ईअं तुए असरि[८]सी अवत्था पाविदा ( ३ ) ।

---

चारु० — केयमिति । अनुष्टुप् ॥ ३९ ॥ वसन्तसेनेति । स्पष्टम् । [ उपजातिच्छन्दः ] ॥ ४० ॥ किं न्विति । श्लोकः । जीवातोर्जीवनौषधस्य काम्ययेच्छया । 'जीवातुर्जीवनौषधम्' इत्यमरः । काम्येच्छा । तस्या वसन्तसेनाया रूपस्यानुरूपेण सादृश्येन विशिष्टेत्यर्थः । विशेषणे तृतीया ॥ ४१ ॥

वस० — ( ३ ) आर्य चारुदत्त, सैवाहं पापा यस्याः कारणादियं त्वयासदृश्यवस्था प्राप्ता ।

---

१ केयं समु० K. २ सस्ये DE. ३ सम्यग्वृष्टिरिवा० AB (bcd) DEFGK. ४ तु B (d). ५ °नुकाम्यया B (b) E; °नुकम्पया B (d). ६ कारणा B (b) EG; marg. दो B (d). ७ om. K. ८ °रिसा E.

नेपथ्ये । अच्चरिअं अच्चरिअं । जीवदि वसन्तसेणा ( ४ ) ।

इति सर्वे पठन्ति ।

**चारुदत्तः** । आकर्ण्य सहसोत्थाय स्पर्शसुखमभिनीय निमीलिताक्ष एव हर्षगद्गदाक्षरम् । प्रिये, वसन्तसेना त्वम् ।

**वसन्तसेना** । सा ज्जेव्वाहं मन्दभाआ ( ५ ) ।

**चारुदत्तः** । निरूप्य सहर्षम् । कथं वसन्तसेनैव । सानन्दम् ।

कुतो बाष्पाम्बुधाराभिः स्नपयन्ती पयोधरौ ।
मयि मृत्युवशं प्राप्ते विद्येव समुपागता ॥ ४२ ॥

प्रिये वसन्तसेने,

त्वदर्थमेतद्विनिपात्यमानं
देहं त्वयैव प्रतिमोचितं मे ।
अहो प्रभावः प्रियसङ्गमस्य
मृतोऽपि को नाम पुनर्ध्रियेत ॥ ४३ ॥

अपि च । प्रिये, पश्य ।

रक्तं तदेव वरवस्त्रमियं च माला
कान्तागमेन हि[१२] वरस्य यथा विभाति ।

---

[ नेपथ्ये ]–( ४ ) आश्चर्यमाश्चर्यम् । जीवति वसन्तसेना ।

वस० – ( ५ ) सैवाहं मन्दभाग्या ।

चारु०–कुत इति । अनुष्टुप् छन्दः। विद्यात्र मृतसंजीवनी बोध्या ॥४२॥ त्वदर्थमिति ।[उपेन्द्रवज्राच्छन्दः]। एतद्देहमिति । 'कायो देहः क्लीबपुंसोः, इत्यमरः । पुनर्ध्रियेत पुनर्जीवे[दि]त्यर्थः॥४३॥ रक्तमिति ।

---

१ अछरिअं B (b) K. pr. m. B (d). २ °सेना J. ३ सस्पर्शसुखनिमीलि° AB (c) F ; स्पर्शसुनिमी° B (bd); संस्पर्शसुखनिमी° DH ; स्पर्शसुखनिमी° E. ४ निलिताल? B (a). ५ om. B B (a). ६ वाप्याम्बु° AB (c) FG ; बाष्पम्बु H. ७ स्नापयन्ती D. ८ प्रतिमा° K. ९ प्रभातः H. १० ध्रियंत? H. ११ पश्य पश्य B (a). १२ विहरस्य? H.

एते च वध्यपटहध्वनयस्तथैव
जाता विवाहपटहध्वनिभिः समानाः॥४४॥

**वसन्तसेना** । अदिदक्खिणदाए[१] किं ण्णेदं[२] ववसिदं अज्जेण ( ६ ) ।

**चारुदत्तः** । प्रिये, त्वं किल मया हतेति ।

पूर्वानुबद्धवैरेण शत्रुणा प्रभविष्णुना ।
नरके पतता तेन मनागस्मि निपातितः ॥ ४५ ॥

**वसन्तसेना** । कर्णौ[३] पिधाय । सन्तं[४] पावं । तेण म्हि[५] राअसालेण वावादिदा ( ७) ।

**चारुदत्तः** । भिक्षुं दृष्ट्वा । अयमपि कः ।

---

अत्र वाच्यार्थः स्पष्टः । व्यङ्ग्यार्थस्तु तावदेतावतीमिमां (मा) मापदमुपभुज्यापि यदि तवाहं दरिद्रतया न दयितस्तदानर्थ इति । विवाह इवेति किं वाच्यम् । तव च मम चायं विवाह एवासीदितः परं कदापि मा मामत्याक्षीरिति चावसेयः ।[वसन्ततिलकं वृत्तम्]॥४४॥

वस० – (६) अतिदक्षिणतया किं नेदं व्यवसितमार्येण । दक्षिणतोदारता समर्थता वा । किं नेदमित्यानुपूर्वी वितर्के इत्यसकृदुक्तम् ।

पूर्वेति । श्लोकः । शत्रुणा शकारेण ।

चारु०–प्रभविष्णुना राजश्यालतया प्रभुणेत्यर्थः । यतो मुक्तोतो मनागिति ॥ ४५ ॥

वस० – ( ७ ) शान्तं पापम् । प्रतिहतममङ्गलम् । तेनास्मि राजश्यालेन व्यापादिता ।

---

१ दक्खिणदाए B (ab). २ °नेन AB (abc) DFG. ३ कर्णौ पिधाय om. B (a). ४ शान्तं AB (bcd) CDJ; शान्तं पावं twice G. ५ हि D.

वसन्तसेना । तेण अणज्जेण वावादिदा । ऐदिणा[1] अज्जेण जीवाविदम्हि ( ८ ) ।

चारुदत्तः । कस्त्वमकारणबन्धुः ।

भिक्षुः । ण पच्चभिआणादि[2] मं अज्जो । अहं शे अज्जश्श चलणशंवाह[3]चिन्तए[4] शंवाहके[5] णाम[6] जूदिअलेहिं गहिदे एदाए उवाशिकाए अज्जश्श[7] केलकेत्ति[8] अलंकाल[9]पणणिक्किदेम्हि[10] । तेण अ जूदणिव्वेदेण शक्कशमणके शंवुत्ते[11]म्हि । एशा वि अज्जा पवहणविपज्जाशेण[12] पुप्फकलण्डक[13]जिण्णुज्जाणं गदा[14] । तेण अ[15] अणज्जेण ण मं बेदु[16] मण्णेशि[17]त्ति बाहुपाशबलक्कालेण मालिदा । मए[18] दिट्ठा ( ९ ) ।

---

वस० – ( ८ ) तेनानार्येण व्यापादिता । एतेनार्येण जीवं प्रापितास्मि ।

भिक्षुः०–( ९ ) न प्रत्यभिजानाति मामार्यः । अहं स आर्यस्य चरणसंवाहचिन्तया संवाहको [ नाम ] द्यूतकरैर्गृहीत एतयोपासिकया अज्जस्श केलकेति आर्यस्यात्मीय इत्यलंकारपणनिष्क्रीतोस्मि । तेन च द्यूतनिर्वेदेन शाक्यश्रमणकः संवृत्तोस्मि । एषाप्यार्या प्रवहणविपर्यासेन पुष्पकरण्डकजीर्णोद्यानं गता । तेन चानार्ये-

---

१ एहिणा K. २ °आणादि B (ad) K; पच्चहिआणादि G. ३ °संवाह AB (bc); शंवाहचिन्तए om. D. ४ चिन्तएज्जा ? B (a). ५ संवाहके D. ६ om. AB (bcd). DEGK. ७ अज्जस्स B (a); अज्जश B (d). ८ केरके° B (a). ९ °कारएण B (a). १० णिक्किदे B (a). ११ संवुत्ते° E; संवुत्तह्मि G. १२ °विअज्जाशेण AB (c) D; °विपशेण ? B (a); °वितिविज्जाशेण B (b); °विवज्जासेण EK. १३ करण्डअ AB (c) D; करण्डक B (a) E; करण्ड B (bd). १४ गदो ? B (a). १५ om: B B (a) D. १६ वुहु ? A. १७ मणेशि° AB (bc) D, मणेशि B (d); वणेशि ? H. १८ मए दिट्ठा om. B B (a).

नेपथ्ये । कलकलः ।

जयति [1]वृषभकेतुर्दक्षयज्ञस्य हन्ता
तदनु जयति भेत्ता षण्मुखः क्रौञ्चश[2]त्रुः[3] ।
तदनु जयति कृत्स्नां शुभ्रकैलासके[4]तुं
वि[5]निहतवर[6]वैरी चार्यको गां[7] विशालाम् ॥ ४६ ॥

प्रविश्य सहसा

शर्विलकः ।

हत्वा तं कुनृपमहं हि पालकं भो-
स्तद्राज्ये द्रुतम[8]भिषिच्य चार्यकं तम् ।
तस्याज्ञां शिरसि निधाय शेषभूतां
मोक्ष्येहं व्यसनगतं च चारुदत्तम् ॥ ४७ ॥
हत्वा रिपुं तं बलम[9]न्त्रहीनं
पौरान्[10]समाश्वास्य पुनः प्र[11]कर्षात् ।

---

ण न मां बहु मन्यस इति बाहुपाशबलात्कारेण मारिता । मया दृष्टा ।

जयतीति । वृषभकेतुः शिवः । हन्ता भेत्ता । (भेत्ता हन्ता) क्रौञ्चशत्रुरिति प्रभूतप्रभावाभिप्रायम् । आर्यकः पूर्वोक्तः । सिद्धादिष्टराज्यलाभवान्यः सः । शुभ्रकैल(ला)सध्वजाम् । गां पृथिवीम् । कृत्स्नां संपूर्णाम् । जयति स्वायत्तीकरोतीत्यर्थः । [मालिनी च्छन्दः] ॥ ४६ ॥

शर्वि०—विनिहतवरवैरीति यदुक्तं तदाह । हत्वेति । स्पष्टम् । शेषभूतां चरमाम् । इत्यनेन सर्वं कर्तव्यमन्यत्कृतमिति ध्वनिः । [प्रहर्षिणी वृत्तम्] ॥ ४७ ॥ हत्वा रिपुमिति । बलं सैन्यम् । मन्त्रश्च । आभ्यां हीनम् । प्रकर्षात्स्वकीयप्रतापादेः

१ वृषभहन्तुर्दक्ष°? G. २ °शत्रो. DH. ३ om. B (a). ४ केतुः AB (cd) D. ५ विनिहित AB (bc) DF. ६ °वैरा AB (abc) F; °वैरां DH. ७ गं? K. ८ °मभिकृत्स्नांच्य B (a). ९ °मित्र° B, °मत्र° B (d). मान्त्रि° J. १० समाश्वस्य AB (bc) F. ११ प्रकर्षान् AB (bc) DF.

प्राप्तं समग्रं वसुधाधिराज्यं
राज्यं बलारेरिव शत्रुराज्यम् ॥ ४८ ॥

अग्रतो निरूप्य । भवतु । अत्र तेन भवितव्यं यत्रायं जनपदसमवायः । अपि नामायमारम्भः क्षितिपतेरार्यकस्यार्यचारुदत्तस्य जीवितेन सफलः स्यात् । त्वरिततरमुपसृत्य । अपयात जाल्माः । दृष्ट्वा सहर्षम् । अपि ध्रियते चारुदत्तः सह वसन्तसेनया । संपूर्णाः खल्वस्मत्स्वामिनो मनोरथाः ।

प्रभावात् । [न]गरस्थान् । कुतोपि यूयं मा भैष्टेति विश्वासमुत्पाद्येत्यर्थः । वसुधाया आधिराज्यं स्वाम्यं यस्मिन्नीदृशं संपूर्णं शत्रुराज्यं शत्रोः पालकस्य राज्ञो राज्यम् । 'अखण्डाज्ञाविषयो हि राज्यम्' इति लक्षणलक्षितं राज्यमित्यर्थः । प्राप्तम् । किमिव शत्रुराज्यम् । (व)बलारेरिन्द्रस्य राज्यमिव । ऐन्द्रं पदमिवेत्यर्थः । अयमुपमानवाक्यार्थः । उपमेये रिपुराज्ये विशेषणमिति ज्ञेयमज्ञैः ॥ ४८ ॥

यत्रायं जनपदेति लक्षणया जनपदवृत्तिजनपरम् । तेषां जनानां समवायः समूहः । अत्र तेन चारुदत्तेनेत्यर्थः । भवत्वित्यन्तरसंवाद इत्युक्तम् । अयमारम्भो राज्ञः पालकस्य हननरूप उद्योगोपि नाम सफलः स्यादिति संभावना । 'जाल्मोसमीक्ष्यकारी स्यात्' । अविचार्य कारिणो जाल्मा यूयम् । अपयात दूरं गच्छतेत्यर्थः । ध्रियते जीवति । अस्मत्स्वामिन आर्यकस्य नूतनमहाराजस्येत्यर्थः ।

१ °धिसाज्यमा० ? H. २ आढ्यं DH. ३ मुरारेरिव B B (a). ४ भवत्वत्र B; भविष्यत्तेन A which B has shown as भविष्यत्तन B (c)? भविष्य तेन अत्र om. D. ५ °यंवारम्भ : AB (c) F; नामारम्भ B (a) K. ६ आर्य om. B B (a). ७ अप ..... ल्मा : twice G. ८ भो: हर्षम् K. ९ संपूर्ण B (d). १० सत्वरं for खल्वस्मत् AB (c) D. ११ मनोरथः॰B (d).

दिष्ट्या भो व्यसनमहार्णवादपारा-
दुत्तीर्णं गुणभृतया सुशीलवत्या ।
नावेव[1] प्रियतमया चिरान्निरीक्षे[2]
ज्योत्स्नाढ्यं[3] शशिनमिवोपरागमुक्तम्[4] ॥ ४९ ॥

तत्कृतमहापातकः कथमिवैनमुपसर्पामि । अथवा । सर्वत्रार्जवं शोभते । प्रकाशमुपसृत्य बद्धाञ्जलिः । आर्य चारुदत्त,

चारुदत्तः । ननु को भवान्[5] ।

शर्विलकः ।

येन ते भवनं भित्त्वा न्यासापहरणं कृतम् ।
सोऽहं कृतमहापापस्त्वामेव शरणं गतः ॥ ५० ॥

चारुदत्तः । सखे, मैवम् । त्वयासौ प्रणयः[7] कृतः । इति कण्ठे गृह्णाति ।

---

दिष्ट्या भो इति । प्रहर्षिणी छन्दः । दुःखसमुद्राद्दुर्धरादुत्तीर्णम् । केनोपायेनोत्तीर्णं तत्राह । नावेव । प्रियतमयेति वसन्तसेनयेत्यर्थः । गुणो रज्जुर्लोकप्रसिद्धोऽनुरागादिश्च । उपरागो ग्रहणम् ॥ ४९ ॥ आर्जवमृजुत्वं सरलता । सा चेयं सविनया स्वच्छेत्यादि नानारूपा बोध्या ।

शर्वि० — येनेति । श्लोकः । न्यासो वसन्तसेनादत्तसुवर्णभाण्डरूपस्तस्यापहरणम् । स्वर्णस्तेयस्य शास्त्रोक्तमहापातकत्वादाह । कृतमहापाप इति ॥ ५० ॥

---

१ तावेव AB (abc) DF. २ निरीक्ष्ये AB (abc) CDJ ; निरीक्ष्यो K. ३ त्स्वोर्ध्वार्यां? K. ४ ०वापराग AB (ac) F. ५ om. B (a). ६ °ऽत्रभवान् B B (a). ७ स प्रणयः B (d).

शर्विलकः । अन्यच्च ।

आर्यकेणार्यवृत्तेन कुलं मानं च रक्षता ।
पशुवद्यज्ञवाटस्थो दुरात्मा पालको हतः ॥ ६१ ॥

चारुदत्तः । किम् ।

शर्विलकः ।

त्वद्यानं यः समारुह्य गतस्त्वां शरणं पुरा ।
पशुवद्वितते यज्ञे हतस्तेनाद्य पालकः ॥ ६२ ॥

चारुदत्तः । शर्विलक, योसौ पालकेन घोषादानीय निष्कारणं कूटागारे बद्ध आर्यकनामा त्वया मोचितः ।

---

शर्वि०—भूतपूर्ववृत्तान्तमुक्त्वा साम्प्रतवृन्तत(त्तान्त)माह । अन्यच्चेत्यादिना । आर्यकेणेति । श्लोकः । यज्ञवाटो यज्ञस्थानम् । इदं चापरिच्छिन्न (?) जनसंमर्देन प्रमादस्थानम् । तत्र च शस्त्राघातहननादेः संभावनापि नेत्याशयेनाह । यज्ञवाटस्थ इति । पालको राजा पशुवद्धत इत्यन्वयः ॥६१॥ शर्विलकेनैवमुक्तेपि न सम्यग्बुद्धं चारुदत्तेनेति पुनः स्पष्टयति । त्वद्यानमिति । श्लोकः । तव चारुदत्तस्य यानं प्रवहणं रथम् । य आर्यकः । त्वां चारुदत्तम् । तेनार्यकेण पालकः पशुवद्धत इत्यन्वयः ॥ ६२ ॥

चारु०—घोषादाभीरग्रामात् । निष्कारणं निरपराधमित्यर्थः । अन्यथा सिद्धादेशस्यायमार्यकः श्रीमान्राजा भविष्यतीत्याकारस्य कारागारबन्धनकारणस्य सत्त्वात् । कूटागारे बन्धनगृहे । त्वया

१ Twice AB (c), कि कि. अन्यच्च G. २ दुकूलं ? K ; कुलमानं B (a). ३ गोष्ठागारे B (a), गूढागारे Com. ४ बन्धने बद्धः AB (cd) DEGK.

**शर्विलकः ।** यथाह तत्रभवान् ।

**चारुदत्तः ।** प्रियं [1]नः प्रियम् ।

**शर्विलकः ।** प्रतिष्ठितमात्रेण तत्र सुहृदार्यकेणोज्जयिन्यां [2]वेणातटे कुशावत्यां राज्यमतिसृष्टम् । तत्प्रतिमान्यतां प्रथमः सुहृत्प्रणयः । परिवृत्य । अरे रे, आनीयतामयं [5]पापो राष्ट्रियशठः ।

नेपथ्ये । यथाज्ञापयति [6]शर्विलकः ।

**शर्विलकः ।** आर्य, नन्वयमार्यको [7]राजा [8]विज्ञापयति । इदं मया युष्मद्गुणोपार्जितं [9]राज्यम् । तदुपयुज्यताम् ।

**चारुदत्तः ।** अस्मद्गुणोपार्जितं राज्यम् ।

नेपथ्ये । अरे रे राष्ट्रियश्यालक, एह्येहि । स्वस्याविनयस्य फलमनुभव ।

---

शर्विलकेन मोचितः । निगडं बन्धनं रक्षां च भित्त्वा मोचितः ।

शर्वि०—तत्रभवानित्येकं पदम् । पूज्य इत्यर्थः । राज्यमतिसृष्टं दत्तम् । अतिसर्गो दानम् । द्विजेभ्यः संकल्प्य दत्तमित्यर्थः । युष्मद्गुणोपार्जितं युष्माकं पूज्यानां शिष्टतया सिद्धानामिव चारुदत्तशर्विलकादीनां गुणा उपकाराः प्रवहणावतरणरक्षणबन्धनभेदनसिद्धादेशनादयस्तैरुपार्जितं । राज्यं यतस्तत्तत उपयुज्यतामुपयोगविषयीक्रियताम् । चारुदत्तचन्दनशर्विलकादिभिः सर्वै (र्वै) रुपयोगः सार्थकता राज्यस्य यथा भवति तथानुष्ठीयतामित्यर्थः ।

---

१ न-प्रियम् om. B (d); प्रिय last omit G; प्रियं न प्रियं न K. २ वेणीतटे E. ३ ०वत्या B (d). ४ del. न्य B (d). ५ पापीय F. ६ om. AB (bcd) D. ७ om. K. ८ विज्ञायति? B (b). ९ om. AB (c) DF.

ततः प्रविशति पुरुषैराधिष्ठितः पश्चाद्बाहुबद्धः

शकारः । ह्रीमादिके ।

एव्वं[१] दूलम[२]दिक्कन्ते उद्दामे विअ[३] गद्दहे ।

आणीदे[४] क्खु हगे[५] बद्धे हुडे अण्णे[६] व्व दुक्कले[७] ॥५३॥

दिशोऽवलोक्य ।

शमन्तदो[८] उवट्ठिदे[९] एशे लट्ठिअबन्धे[१०] । ता[११] कं दाणिं[१२] अशलणे[१३] शलणं[१४] पवज्जामि । विचिन्त्य । भोदु[१५] । तं ज्जेव्व अब्भुववण्ण[१६]शलणलक्खणं गच्छामि[१७] । इत्युपसृत्य[१८] । अज्ज[१९] चालुदत्त[२०], पलित्ताआहि[२१] पलित्ताआहि (१०) । इति पादयोः पतति ।

नेपथ्ये । अज्ज चालुदत्त[२२], मुञ्च मुञ्च । वावादेम्ह एदं(११) ।

---

शका०–(१०) ह्रीमादिके खेदेऽव्ययम् । एव्वं दूलमिति । श्लोकः । एवं दुरमतिक्रान्त उद्दाम इव गर्दभः । आनीतः खल्वहं बद्धः । हुडे श्वा कुक्कुरः । अण्णे अन्यः । व्व इव । दुक्कले दुष्करो दुर्धर इत्यर्थः ॥ ५३ ॥ समन्तत उपस्थितः स राष्ट्रियबन्धः । तत्कमिदानीमशरणः शरणं प्रव्रजामि । भवतु । तमेवाभ्युपपन्नशरणरक्षणं [ शरणं ] गच्छामि । आर्यचारुदत्त, परित्रायस्व परित्रायस्व ।

नेपथ्ये–(११) आर्य चारुदत्त, मुञ्च मुञ्च । व्यापादं(द) यामैतम् ।

---

१ एव B (a). २ अविक्कन्ते Corr. B (d). ३ गद्दहे विअ B (a). ४ अणीदे H. ५ हग्गे B (a). ६ अव्व B (a); अणोव AB (c) D; अण्णे व B (b); अणेव B (d). ७ दुकूले D. ८ समंतदो AB (bcd); शयंतदो B (a). ९ °ट्ठिदेशे ABB (acd); °ट्ठिदेशे लट्ठिदे &c. D; °ड्डिदेश K. १० लट्ठिअ° B (ab) J; °बन्ध AB (c). ११ ताकं? E. १२ दाणि AB (bc). १३ अशरणे AB (bcd) E; अशलणं D; असरणे K. १४ शलण? B (d); om. D. १५ om. B (d). १६ शलक्खणं K. १७ शलणं गच्छामि B B (a). १८ इति om. B B (a). १९ शकारः before अज्ज B (abd) EK. २० चारु° B (d). २१ पलित्ताशहि AB (bcd) DG; पलित्ताहि B; पडित्ताएहि K. २२ चारुदत्त B; चारुदत्तं B (d).

शकारः । चारुदत्तं प्रति[1] । भो अशलणशलणे[2], पलित्ताआहि[3] (१२) ।

चारुदत्तः । सानुकम्पम् । अहह । अभयमभयं शरणागतस्य ।

शर्विलकः । सावेगम् । आः[4], अपनीयतामयं[5] चारुदत्तपार्श्वात्[6] । चारुदत्तं प्रति । ननूच्यतां[7] किमस्य पापस्यानुष्ठीयतामिति ।

आकर्षन्तु[8] सुबद्ध्वैनं[9] श्वभिः संखाद्यतामथ[10] ।
शूले वा तिष्ठतामेष[11] पाट्यतां क्रकचेन वा ॥ ५४ ॥

चारुदत्तः । किमहं यद्ब्रवीमि तत्क्रियते ।

शर्विलकः । कोऽत्र संदेहः ।

शकारः । भट्टालआ[12] चालुदत्त[13], शलणागदे म्हि । तौ[14]

---

शका०—(१२) भो अशरण[शरण], परित्रायस्व ।

शर्वि०—किमस्येत्यादिवाक्येन पृष्ठं(ष्टं) विकल्पयति । आकर्षन्त्विति । श्लोकः । एनं शकारम् । सुबध्य (?) सुष्ठु बद्ध्वा पादे रज्जुम् । चाण्डाला आकर्षन्तु । श्वभिः कुक्कुरैः । क्रकचेनाराख्येन (?) शस्त्रेण विदार्यतां वा ॥ ५४॥

शका०—(१३) भट्टारक चारुदत्त, शरणागतोऽस्मि । तत्परि-

---

१ चारुदत्तं प्रति om. B B (a). २ अशलणे० B (a) ; अशलणे om.; शलणे B (bd). ३ °एहि AB (c) D ; पलित्ताअ B (b) G पलित्ताआएदि del ए B (d); पडित्ताआहि K. ४ आ B. ५ °मसौ B B (a). ६ चारुदत्तः पश्यति AB (c) DF; चा० पाश्चात्पश्यति B (b). ७ न मुच्यतां AB (c) F ; तनुच्यंता B (b); ननुच्यतां G. ८ आकर्षंतु AB (c) DE. आकार्षंतु B (b). ९ °वध्यैनं ? C. १० °यते? D. ११ भियतामे० B (d) E. १२ भट्टालआ AB (bcd) J, om. B (a). १३ चालुदत्ता G. १४ om. B B (a).

पलित्ताआहि पलित्ताआहि । जं तुए शोलिशं तं कलेहि । पुणो ण ईदिशं कलिइश्शं (१३) ।

नेपथ्ये

पौराः । वावादेध । किं णिमित्तं पादकी जीवावीअदि । (१४)

वसन्तसेना । वध्यमालां चारुदत्तस्य कण्ठादपनीय शकारस्योपरि क्षिपति ।

शकारः । गब्भदाशीधीए, पशीद पशीद । ण उणो मालइश्शं । ता पलित्ताआहि (१५) ।

शर्विलकः । अरे रे, अपनयत । आर्य चारुदत्त, आज्ञाप्यतां किमस्य पापस्यानुष्ठीयताम् ।

चारुदत्तः । किमहं यद्ब्रवीमि तत्क्रियते ।

शर्विलकः । कोत्र संदेहः ।

चारुदत्तः । सत्यम् ।

---

त्रायस्व । यत्तव सदृशं तत्कुरु । पुनर्नेदृशं करिष्यामि ।

पौराः–(१४) व्यापादयत । किंनिमित्तं पातकी जीव्यते ।

शका०–(१५) गर्भदासीपुत्रि, प्रसीद । न पुनर्मारयिष्यामि । तत्परित्रायस्व ।

---

१ पहित्ताएहि AB (bc) D, पलित्ताआएहि del. ए B (d); पडित्तायाहि once D.; पडित्ताएहि G. २ तुज्झ B B (abd) K. ३ सलिसं K. ४ ईहिएं कारिग्शं AB (c); दूशाडश्शं B; दूषइश्शं B (a) K; ईहिषशं कारिश्शं B (b); इषइश्शं B (d); एदि or रिअं कारिश्शं D; णा इषइश्शं E; एहिअं कारिश्शं G. ५ पातकी BD; पातका (की)? E. ६ चारुदत्तस्य कण्ठाद्वध्यमालामप० B (a). ७ °दासीधीदे AB (bc) CEG; गब्भदाशि om· धीए B; °धीदे EK. ८ Once only AB (bc) DF. ९ पुणो BDEF: For ण पुणो &c. पश्य पुणो माल० K. १० पडित्ता० AB (abc) E; twice B (d); °एहि D. ११ यत् om. B (d).

शर्विलकः । सत्यम् ।

चारुदत्तः । यद्येवं शीघ्रमयम् ।

शर्विलकः । किं हन्यताम् ।

चारुदत्तः । नहि नहि । मुच्यताम् ।

शर्विलकः । किमर्थम् ।

चारुदत्तः ।

शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः ।
शस्त्रेण न हन्तव्यः...................

शर्विलकः । एवं तर्हि । श्वभिः खाद्यताम् ।

चारुदत्तः । नहि ।

............उपकारहतस्तु कर्त्तव्यः ॥ ५५ ॥

शर्विलकः । अहो आश्चर्यम् । किं करोमि । वदत्वार्यः ।

चारुदत्तः । तन्मुच्यताम् ।

शर्विलकः । इति मुक्तः ।

शकारः । हीमादिके पँच्चुज्जीविदेम्हि (१६) ।

इति पुरुषैः सह निष्क्रान्तः ।

---

चारु०—शत्रुरिति । आर्याछन्दः । उपकारेत्यादिश्चतुर्थश्चरणः॥५५॥

शाका०—( १६ ) हीमादिके प्रत्युज्जीवितोस्मि ।

---

१ Speech om G. २ om. K. ३ नहि नाहि BB (a). ४ °रस्तु K. ५ वदत्वार्य· AB (c) CDJ, वदत्वात्यार्यं. del त्वा B (d). ६ om. BB (abd). ७ पच्चुबर्जा० B, पचब. .. दह्मि B (a), पच्चुप ..दह्मि B (d). ८ Followed by इतःपरं नीलकण्ठेनापूरि AB (bc) G from नेपथ्ये &c. to शर्विलक –आर्ये वसन्तसेने. p ४८७ om. BB (ad) E K.

अथ मृच्छकटिकस्योधिको ग्रन्थः ( पृ० ४८६ पर्यन्तम् )।

नेपथ्ये कलकलः।

पुनर्नेपथ्ये । एसा[1] अज्जचा[2]लुदत्तस्स वहुआ अज्जा धूदा पदे वेसणञ्चले[3] विलग्गन्तं दारअं आक्खिवन्ती वाहभरिदणअणेहिं जणेहिं णिवारिज्जमाणा पज्जालिदे पावए पविसदि ( १७ ) ।

शर्विलकः । आकर्ण्य नेपथ्याभिमुखमवलोक्य । कथं चन्दनकः। चन्दनक, किमेतत् ।

च[4]न्दनकः । प्रविश्य । किं ण पेक्खदि अज्जो महारो[5]अप्पासादं दक्खिणेण महन्तो जणसंमद्दो वट्टदि[6] । एसेत्यादि पुनः पठति । कधिदं अ मए तीए जधा अज्जे मा साहसं करेहि । जीवदि अज्जचारुदत्तो त्ति। परन्तु दुक्खवावुडदाए को सुणेदि । को पत्तिआएदि[7] ( १८ ) ।

---

यत्पुस्तकं दृष्ट्वास्माभिरियं कृता व्याख्या तत्र द्विशतवर्षजीर्णे पुस्तके दृश्यते—'इतः परं नीलकण्ठेनापूरीति प्रति(?)प्रतिज्ञाय—" नेपथ्ये कलकलः । पुनर्नेपथ्ये । एषा अज्जचालुदत्तस्स वहुआ अज्जा धूदा" इत्यारभ्याग्रे—शर्वि०—दिष्ट्या जीवितसुहृद्वर्ग आर्यः। चारु० —"युष्मत्प्रसादेन"—इत्यन्तं समाप्य— 'यत्सूर्योदयभयतः कविनोचितपात्रमेलनं न कृतम् । सुन्दरयुक्तिभिररचयदाचन्दनकोक्ति नीलकण्ठस्तत् ॥' इति निजनिर्मितिसूचिकामार्यां विरच्य समापितोयमधिको ग्रन्थः । पुस्तकान्तरे तु न दरीदृश्यते । अस्माभिस्तु मूलकृत्कवितानुरूपामपीमां कवितामालोच्यापि ग्रन्थोयं प्रकृतग्रन्थसंलग्न इवेति व्याख्यायत इत्यवधेयम् ।

पुनर्नेपथ्ये—(१७) एषार्यचारुदत्तस्य वधूरार्या धूता पदे वसनाञ्चले विलगन्तं दारकमाक्षिपन्ती बाष्पभरितनयनैर्जनैर्निवार्यमाणा प्रज्वलिते पावके प्रविशति ।

चन्द० – ( १८ ) किं न पश्यत्यार्यो महाराजप्र(प्रा)सादं

---

१ एशा AB (c). २ °चारु. ३ ०नञ्चले AB (bc) J. ४ प्रविश्य चन्दनकः AB (c) G; चन्दनकः Twice B (b). ५ महाआल (लाअ?) प्पसादं ? B (b); महाआलप्पासाद० G. ६ वट्टइ तत्था B (b); वट्टइ तत्थ G. ७ पत्तियाएदि AB (c) D.

चारुदत्तः । सोद्वेगम् । हा प्रिये, जीवत्यपि मयि किमेतदध्यवसितम् । ऊर्ध्वमवलोक्य दीर्घं निःश्वस्य च ।

न महीतलस्थितिसहानि भव-
च्चरितानि चारुचरिते यदपि ।
[1]उचितं तथापि परलोकसुखं
न पतिव्रते तव विहाय पतिम् ॥ ५६ ॥

इति मोह[2]मुपागतः ।

शर्विलकः । अहो प्रमादः ।

[3]त्वरया स[4]र्पणं तत्र मोहमार्यात्र चागतः ।
हा धिक् प्रयत्नवैफल्यं दृश्यते सर्वतोमुखम् ॥ ५७ ॥

दक्षिणेन महाजनसंमर्दो वर्तते ( ते ) । तत्र(?) एतेत्याद्यनुपदोक्तं ज्ञेयम् । महाराजः पालकः । कथितं च मया तस्यै यथार्ये मा साहसं कुरुष्व । जीवत्यार्यचारुदत्त इति । परंतु दुःखव्याप्तत्तया कः शृणोति । कः प्रत्ययते ।

चारु०—न महीतलेति [ प्रमिताक्षरा वृत्तम् ] । हे चारुचरिते । यदपि यद्यपि । भवत्याश्चरितानि पातिव्रत्यसुशीलतादिलक्षणानि । महीतलस्थितिसहानि न सन्ति । भूतले स्थातुं न शक्नुवन्तीत्यर्थः । पदार्थमत्युग्रं न धर्तुं समर्था भूरिति भावः । तथापि स्वर्गसुखं मया विना न त्वया भोक्तुं युक्तं पतिव्रतात्वादिति सर्वार्थः ॥ ५६ ॥

[ शर्वि०—त्वरयेति । स्पष्टम् ॥ ५७ ॥ ]

---

१ उचित AB (c). २ ०मुपगत. F. ३ त्वरायाः AB (c) DFGH. ४ सर्पयस्तत्र AB (c) F; समयस्तत्र DGH.

वसन्तसेना । समस्ससिदु अज्जो । तत्त गदुअ जीवावेदु अज्जा । अण्णधा अधीरत्तणेण अणत्थो संभावीअदि ( १९ ) ।

चारुदत्तः । समाश्वस्य सहसोत्थाय । हा प्रिये, क्वासि । देहि मे प्रतिवचनम् ।

चन्दनकः । इदो इदो अज्जो ( २० ) ।

इति सर्वे परिक्रामन्ति ।

ततः प्रविशति यथानिर्दिष्टा धूता चेलाञ्चलमाकर्षन् विदूषकेणानुगम्यमानो रोहसेनो रदनिका च ।

धूता । सास्रम् । जाद, मुञ्चेहि मं । मा विग्घं करेहि । भीआमि अज्जउत्तस्स अमङ्गलाकण्णणदो ( २१ ) । इत्युत्थायाञ्चलमाकृष्य पावकाभिमुखं परिक्रामति ।

रोहसेनः । हा अज्जुए, पडिवालेहि मं । तुए विणा ण सक्कुणोमि जीविदं धारेदुं ( २२ ) । इति त्वरितमुपसृत्य पुनरञ्चलं गृह्णाति ।

---

वस० – ( १९ ) समाश्वसित्वार्यः । तत्र गत्वा जीवयत्वार्याम् । अन्यथाधीरत्वेनानर्थः संभाव्यते ।

चन्द० – ( २० ) इत इत आर्यः ।

धूता – ( २१ ) जात, मुञ्च माम् । मा विघ्नं कुरुष्व । बिभेम्यार्यपुत्रस्यामङ्गलाकर्णनात् ।

रोह० – ( २२ ) हा आर्ये, प्रतिपालय माम् । त्वया विना न शक्नोमि जीवितं धर्तुम् ।

---

१ समस्ससदु twice G. २ तत्थ AB (c) G. ३ अज्जं G. ४ om. DH. ५ भाआमि DH , भोआमि F; भीआहि G. ६ ०कण्णादो AB (c) ; कण्णणादो B. (b) DH. ७ दाव ०AB (c); दाअज्जए B (b); दाव अज्जे DH; माद अज्जए J. ८ ०वालेसु AB (c) DFG. ९ सक्कणोमि AB(c) ; सक्कुणोमि DH.

विदूषकः । भोदि, मा दाव । बम्हणीए भिण्णत्तणेण चिदाधिरोहणं पावं उदाहरन्ति रिसीओ ( २३ ) ।

धूता । वरं पावाचरणं । ण उण अज्जउत्तस्स अमङ्गलाकण्णनं (२४) ।

शर्विलकः । पुरोऽवलोक्य । आसन्नहुतवहार्या । तत्त्वर्यतां त्वर्यताम् ।

चारुदत्तः । त्वरितं परिक्रामति ।

धूता । रअणिए, अवलम्ब दारअं जाव अहं समीहिदं करेमि ( २५ ) ।

चेटी । सकरुणम् । अहं पि पधोवदेसिणिम्हि भट्टिणीए (२६ ) ।

धूता । विदूषकमवलोक्य । अज्जो दाव अवलम्बेदु ( २७ ) ।

---

विदू० – ( २३ ) भवति, मा तावत् । ब्राह्मण्या भिन्नत्वेन चिताधिरोहणं पापमुदाहरन्ति ऋषयः । क्षत्रियादीनां भिन्नत्वेनापि चितारोहणाधिकारस्मरणादुक्तं ब्राह्मण्या इति भिन्नत्वेनेति च ।

धूता– ( २४ ) वरं पापाचरणम् । न पुनरार्यपुत्रस्यामङ्गलाकर्णनम् ।

धूता– (२५) रदनिके, अवलम्बस्व दारकं यावदहं समीहितं करोमि ।

चेटी– (२६) अहमपि य(प)थोपदेशिन्यस्मि भट्टिन्याः ।

धूता– (.२७ ) आर्यस्तावदवलम्बताम् ।

---

१ भोदीए दाव AB (c) CDF; भोदी मा दाव B (b), भीदीए दाव J. २ पावाचरणं DGH. ३ Om. AB(c)DG. ४ रभणीअ J. ५ वि. D. यथोव० AB(bc)DF; जधोव J.

विदूषकः । सावेगम् । संमीहिदसिद्धिए पउत्तेण बम्हणो अग्गदो कादव्वो । अदो भोदीए अहं अग्गणी होमि ( २८ ) ।

धूता । कधं पच्चादिट्ठम्हि दुवेहिं । बालकमालिङ्गय । जाद, तुमं ज्जेव्व पज्जवट्ठावेहि अत्ताणं अम्हाणं तिलोदअदाणाअ । अदिक्कन्ते किं मणोरहेहिं । सनिःश्वासम् । ण हु अज्जउत्तो तुमं पज्जवट्ठाविस्सदि ( २९ ) ।

चारुदत्तः । आकर्ण्य सहसोपसृत्य । अहमेव पर्यवस्थापयामि बालिशम् । इति बालकं बाहुभ्यामुत्थाप्य वक्षस्यालिङ्गति ।

धूता । विलोक्य । अम्मेहे । अज्जउत्तस्स ज्जेव्व सरसञ्जोओ । पुनर्निपुणं निरूप्य सहर्षम् । दिट्ठिआ अज्जउत्तो ज्जेव एसो । पिअं मे पिअं मे[११] (३०) ।

बालकः । विलोक्य सहर्षम् । अम्मो । आवुत्तो मं परिस्सजदि । धूतां प्रति । अज्जए, वड्ढीअसि । आवुत्तो ज्जेव मं पज्जवट्ठावेदि ( ३१ ) । इति प्रत्यालिङ्गति ।

---

विदू०— (२८) समीहितसिद्ध्यै प्रवृत्तेन ब्राह्मणोऽग्रतः कर्तव्यः । अतो भवत्या अहमग्रणीर्भवामि ।

धूता— ( २९ ) कथं प्रत्यादिष्टास्मि द्वाभ्याम् । जात, त्वमेव पज्जवट्ठावेहि पर्यवस्थापयात्मानमस्माकं तिलोदकदानाय । अतिक्रान्ते(?) किं मनोरथैः । न खल्वार्यपुत्रस्त्वां पर्यवस्थापयिष्यति ।

धूता— ( ३० ) आश्चर्यम् । आर्यपुत्रस्यैव( स्येव ) स्वरसंयोगः । दिष्ट्यार्यपुत्र एवैषः । प्रियं मे प्रियं मे ।

बालकः— (३१) आश्चर्यम् । पिता मां परिष्वजति (ते) । आर्ये, वर्धसे । जनक एव मां पर्यवस्थापयति ।

---

१ संमोहिद० AB (c); संसोहिद DFH. २ उत्तेण B ( b ). ३ अग्गली F ४ कहं DG. ५ पच्चादिट्ठम्हि B (b) ६ पज्जाधविहि AB (c) F, पज्जट्ठावेहि B (b) G, पज्जवधावेहिD. ७ अह्मानं G. ८ पज्जवधाविस्सदि AB (c) DF; पज्जवत्थाविस्सदि B(b). ९ वत्स B (b) G. १० WholeopeechD ११ om. J १२अह्मो AB (c). १३ आवुत्त AB (c); आवुतु B (b)आवुत्ते H. १४ ०परिष्वजदि AB(c); संपरिस्स० D; ०परिव्व? (ष्व?) F परित्यजदि H. १५ वधावीअसि AB(c) DH, वड्ढाबीअसि B (b). वड्ढावीअसि F. १६ ०आवुत्तA B ( c ) D, आवुतु B (b) G, १७ पज्जवधावेदि AB (c )Df; ०ट्ठावेदि B (b).

चारुदत्तः । धूतां दृष्ट्वा ।

> हा प्रेयसि प्रेयसि विद्यमाने
> कोऽयं कठोरो व्यवसाय आसीत् ।
> अम्भोजिनीलोचनमुद्रणं किं
> भानावनस्तंगमिते करोति ॥ ९८ ॥

धूता । अज्जउत्त, अदो ज्जेव्व सा अचेदणेत्ति चुम्बीआदि (३२)।

विदूषकः । दृष्ट्वा सहर्षम् । ही ही भो एदेहिं ज्जेव अच्छीहिं पिअवअस्सो पेक्खीअदि । अहो सदीए पहावो जदो जलणप्पवेशव्ववसाएण ज्जेव पिअसमागमं पाविदा । चारुदत्तं प्रति । जेदु जेदु पिअवअस्सो ( ३३ ) ।

चारुदत्तः । एहि मैत्रेय । इत्यालिङ्गति ।

चेटी । अहो संविधाणअं । अज्ज वन्दामि (३४) । इति चारुदत्तस्य पादयोः पतति ।

चारुदत्तः । पृष्ठे करं दत्त्वा । रदनिके, उत्तिष्ठ । इत्युत्थापयति ।

---

चारु०—हा प्रेयसीति । प्रेयसीति प्रथमं संबोधनम् । द्वितीयं सप्तम्यन्तम् । लोचनमुद्रणमिति मुकुलीभावं लक्षयति । [इन्द्रवज्रा छन्दः ॥९८॥

धूता— (३२) आर्यपुत्र, अत एव साचेतनेति चुम्ब्यते ।

विदू०— ( ३३ ) आश्चर्यम् । एताभ्यामेवाक्षिभ्यां प्रियवयस्यः प्रेक्ष्यते । अहो सत्यः प्रभावो यतो ज्वलनप्रवेशव्यवसायेनैव प्रियसमागमं प्रापिता । जयतु जयतु प्रियवयस्यः ।

चेटी— (३४) अहो संविधानम् । समीचीनं विधानं घटनम-

---

१ अचेतणात्ति AB (c) DG. २ उच्चीअदि (=उच्यते) G ३ Om. AB (c) DF. ४ भो · AB (c) DF. ५ एदे ज्जेव्व B (b). ६ पिय० B? (b). ७ Om. DH. ८ जलन० C. ९ संविभाण अज्ज B (b). १० उत्थापयति B (b).

धूता । वसन्तसेनां दृष्ट्वा । दिट्ठिआ कुसलिणी बहिणिआ ( ३५
वसन्तसेना । अहुणा कुसलिणी संवुत्तम्हि ( ३६ ) । इत्यन्योन्य-
640 मालिङ्गतः ।

शर्विलकः । दिष्टया जीवितसुहृद्वर्ग आर्यः ।

चारुदत्तः । युष्मत्प्रसादेन ।

---

नयोर्दंपत्योरित्यहो आश्चर्यमित्यर्थः । अन्यथानयोर्द्वयोरपि नाश-समवधानस्य (?) संभवादिति भावः । आर्य वन्दे ।

धूता– (३५) दिष्टया कुशलिनी भगिनी ।

वस०– (३६) अधुना कुशलिनी संवृत्तास्मि ।

शर्वि०–दिष्ट्या दैवेन । जीविनः सुहृदार्यकवसन्तसेनाधूतादीनां मित्राणां वर्गः समूहो यस्य तादृश आर्यः । दिष्टया दैवेन न त्वन्येन केनापि कारणेनेत्यर्थः । नाहं दैवेन जीवितसुहृद्वर्गः किं तु युष्मत्प्रसादेनेत्युत्तरं ददौ चारुदत्तः ।

एतावत्पर्यन्तमेवायमधिको ग्रन्थः ।

पुस्तकान्तरे तु " शका०– हीमादिके पच्चुज्जीविदेम्हि इति पुरुषैः सह निष्क्रान्तः" (पृ० ४७९ अन्तिमा पङ्क्तिः) इत्यनन्तरं "शर्वि०–आर्ये वसन्तसेने परितुष्टो राजा भवतीं बन्धु(वधू)शब्देनानुगृह्णाति । राजार्यकः " इत्येव दृश्यते ग्रन्थः । एवंविधपूर्वापरीभावमावहन्न त्वन्योयमधिकः कृत्रिम इतीदमिहावधेयम् ।

---

१ Followed by a verse यन्सूर्योदयभयत कविनोचितपात्रमेलनं न कृतम् । सुन्दरयुक्तिभिरखयुदाचन्दनकोक्ति नीलकण्ठस्तत् ॥ AB (bc) CDG.

शर्विलकः । आर्ये वसन्तसेने, परितुष्टो राजा भवतीं वधूशब्देनानुगृह्णाति ।

वसन्तसेना । अज्ज कदत्थम्हि (३७) ।

शर्विलकः । वसन्तसेनामवगुण्ठ्य चारुदत्तं प्रति । आर्य, किमस्य भिक्षोः क्रियताम् ।

चारुदत्तः । भिक्षो, किं तव बहुमतम् ।

भिक्षुः । इमं ईदिशं अणिच्चत्तणं पेक्खिअ दिउणे मे पव्वज्जाए बहुमाणे शंवुत्ते (३८) ।

---

वस०–(३७) आर्य कृतार्थास्मि ।

शर्वि०– वसन्तसेनामवगुण्ठ्येति प्रावारकेण वसन्तसेनामाच्छाद्येत्यर्थः । निर्मोकमिव वेश्यात्वं व्यवच्छिद्य वर्णान्तरेणेव वधूपदाभिधेयत्वेन वसन्तसेनाभुजंगीमलंचकारेति भावः । अस्य भिक्षोः प्रागुक्तस्य संवाहकनाम्नो भिक्षुभूतस्येत्यर्थः ।

भिक्षुः– (३८) इदमीदृशम्(?) । अणिच्चत्तणमनित्यत्वम् । प्रेक्ष्य द्विगुणतरो मम प्रव्रज्याया(यां) बहुमानः संवृत्तः । इदमीदृशमनित्यत्वं क्व राजा पालकः शकारस्तत्कृतो वसन्तसेनाचारुदत्तादीनां वधः ? । क्व चायमार्यक आभीरः क्षणादेव भूमिदेवः श्रीमहाराजश्चैवंविधमित्यर्थः ।

---

१ वंधु० AB (bc) D, बंधू FG. २ ०सेनावगु० ? AB (bc). ३ om. B B (a). ४ इदिसं AB (c); इंदिसं B (a) D; ईंदिसं B (b), इदिश B (d). ५ दिउणदले AB (bc) DEG; दिउणदले dcl. दले B (d). ६ पव्वज्जाय AB (abc); पवज्जा B (d). ७ ०माणो K. ८ संवुत्ते AB (abc) CDJ; संवुत्ते B (d); सजुत्ते K.

चारुदत्तः । सखे दृढोस्य निश्चयः । तत्पृथिव्यां सर्व-विहारेषु [1]कुलपतिरयं क्रियताम् ।

शर्विलकः । यथाह आर्यः ।

भिक्षुः । [2]प्रियं नः प्रियम् ।

[3]वसन्तसेना । [4]सम्पदं [5]जीवाविदम्हि ( ३९ ) ।

[6]शर्विलकः । स्थावरकस्य किं क्रियताम् ।

चारुदत्तः । [7]सुवृत्तोयमदासो भवतु । ते चाण्डालाः सर्वचाण्डालानामधिपतयो भवन्तु । [8]चन्दनकस्य [9]पृथिवीदण्ड-[10]पालकता भवतु । तस्य राष्ट्रियश्यालस्य यथैव क्रिया पूर्वं [11]वर्त्तमानो तथैवास्तु ।

---

चारु०—अस्य भिक्षोः।निश्चयो निखिलं जगदिदमनित्यमिति वैराग्यलक्षणो निर्णयः।सर्वेषु विहारेषु सौगतदेवालयेषु। 'विहारो नास्तिकालये' इति कोशः । कुलपतिरध्यक्षः। सर्वस्वामीत्यर्थः । कुलं गृहम् ।

वस०—( ३९ ) साम्प्रतं जीवनसाफल्यं प्रापितास्मीत्यर्थः । दशभिः सुवर्णैर्मोचितेन निष्क्रीतेनेव संवाहकेन निर्वेदाद्भिक्षूभूतेन वसन्तसेना सलिलसेचनादिना जीवदवस्थां प्रापितेति महानुपकार आसीत् । इदानीं सकलविहारकुलपतित्वाधिकारवितरणेन प्रत्युपकारप्रतीकार आसीदिति 'सम्पदं जीवाविदम्हि' इत्यस्याशयः ।

[ चारु० ]—सुवृत्तः सदाचारोयमदासो भवतु । इतः परं कस्यापि दास्यं नानुभवत्वित्यर्थः । पृथिवीदण्डपालता । पृथिव्यां पृथिव्या वा यो दण्डः शासनं तं पालयतीति पृथिवीदण्डपालस्तस्य भावः । सर्वपृथिव्यां कोष्ठपालाधिकारो भवत्वित्यर्थः । दण्डपाल एव ग्राम-

---

१ कुलपतियं? B (d) २ om AB (bc) DEF; प्रियं न प्रियं नि K. ३ Whole speech om. AB (c) DK. ४ संपदे B (b). ५ ज्जीवा० B (a). ६ om. D? ७ सुवृत्त अदासो AB B (bc) CDEGJ; सुववृत्त अदा० B (a);ससुवृत्त B (d); सुसुवत्त &ca. K. ८ चन्दनकः AB (c) CDJ. ९ पृथ्वी B B (a) १० °पालकी AB (c) CDJ. ११ वर्तमाने CJ.

**शर्विलकः** । एवम् । यथाह आर्यः ।[1] पश्यैनं[2] मुञ्च मुञ्च । व्यापादयामि ।

**चारुदत्तः** । अभयं शरणागतस्य । 'शत्रुः कृतापराधः' [3] इत्यादि पठति ।

**शर्विलकः** । तदुच्यतां किं ते भूयः प्रियं [4] करोमि ।

---

कूटक (?) इति नागरिक इति चाभिधीयते । स्फुटं चेदं दशकुमारादौ । तस्येत्यादि । तस्य राजश्यालस्य शकारस्य पूर्वं तद्भगिनीपतेः पालकस्य राज्ञो राज्य इत्यर्थः । यथैव वर्तमाना क्रिया तथैवास्त्वित्यन्वयः । क्रिया दानादानसंमानस्नानवसनभोजनाङ्गनाद्यैश्वर्योपभोगलक्षणः सर्वव्यापार इत्यर्थः । सज्जनशिरोमणिना चारुदत्तेनातिशौण्डीर्यादेवमभिहितेऽपि शर्विलकेन पूर्वं यथैव वर्तमाना क्रियेत्यादेर्मारणरूपा क्रिया बुद्धेति तथैवाशयेन परमोत्साहेन शर्विलकः प्राह । पश्यैनमिति ।

**शर्वि०**—एनं शकारं मुञ्च मुञ्च । एनमहं व्यापादयामि । स्वयं मारयामीति पश्य त्वमिति कथनेन समुचीयते परमोत्साहः ।

**चारु०**— 'शत्रुः कृतापराधः शरणमुपेत्य पादयोः पतितः । शस्त्रेण न हन्तव्य उपकारहतस्तु कर्तव्यः' इत्यार्या (पृ० ४७९ श्लो० ५५) स्मर्तव्यानुपदमेवोक्ता । आशीराशिशंसनलक्षणां (?) ग्रन्थसमाप्तिं ग्रन्थकारस्तावदवतारयति ।

**शर्वि०**—तदुच्यतां किं ते भूयः प्रियं करोमीति । ते चारुदत्तस्य । एकवारं त्विदमनेकधा प्रियं कृतम् । भूयः पुनः किं करोमि प्रिय-

---

१ परमेनं ..... पठति शर्वि० om : AB (c) DF ; पश्यैनं B (b) G ; परमेनं J.
२ Once B (d) K. ३ इति पुनः B. ४ उपकरोमि B (a).

चारुदत्तः । अतः परमपि प्रियमस्ति ।

लब्धा चारित्र्यशुद्धिश्चरणनिपतितः शत्रुरप्येष मुक्तः
प्रोत्खातारातिमूलः प्रियसुहृदचलामार्यकः शास्ति राजा ।
प्राप्ता भूयः प्रियेयं, प्रियसुहृदि भवान्संगतो मे वयस्यो
लभ्यं किं चातिरिक्तं यदपरमधुना प्रार्थयेहं भवन्तम् ॥५९॥

मिति प्रश्नेन वीररसस्थायिभावस्य परमोत्साहस्य परमाविभार्वः-(र्भावः) प्रतीतिपथमवतरतीति साक्षिणः सहृदयाः ।

स्वीयभाग्यप्रियवयस्यप्रतापप्रभावसंपादितां प्रियपरंपरां चारुदत्तः प्राह । लब्धेति । स्रग्धरा छन्दः । चरित्रमेव चारित्र्यम् । स्वार्थे ष्यञ् । वसन्तसेनामारणापवादादिरूपस्य चारित्र्यस्य शुद्धिरित्यर्थः । एष राजश्यालः शकारः संस्थाननामकः शत्रुरपि मामिदानीमेव शातयन्घातयन्नपि मुक्तः । कुतः । यतश्चरणयोर्निपतितोतो मुक्त इत्यर्थः । प्रोत्खातमरातीनां शत्रूणां मूलं येन स तथा । एतेनाराति‌वंशाङ्कुरपुनरुदयारम्भगन्धोप्यपास्तः । अस्मदादीनां प्रियस(सु)हृदार्यक आभीरः पूर्वोक्तो राजा भूत्वेति शेषः । अचलां भूमिं शास्ति । दुष्टनिग्रहसहितः शिष्टानुग्रहः शासनम् । प्रिये सुहृदि मित्रे मयि चारुदत्ते इयं प्रिया वसन्तसेना भूयः पुनः प्राप्ता संगतेत्यर्थः । भवान् शर्विलको मे मम वयस्यः संगतो मिलितः । अपूर्वलाभवदिति भावः । तुर्यः पादः स्पष्टः । भवन्तं शर्विलकम् ॥५९॥

१ परं प्रिय० BDEF; पराप्रिय० B (a) G; परमस्ति प्रियम् K. २ रित्र्य om. चा? B (a); चारित्र° J. ३ बुद्धि B (d). ४ °दबला० B (a); दवनी० B (d) E. ५ °सुहृदभवा० ? B (d). ६ सङ्गतो B (b). ७ च यस्यो– AB (c) F. ८ लभ्यं AB (c) DF; वक्ष्यं B (d). ९ चातिक्तं B (d). ०रिक्तं om : G.

कांश्चि[1]त्तु[2]च्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं

कांश्चि[3]त्पा[4]तविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् ।

अन्योन्यं [5]प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय-

न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥६०॥

[6]तथापीदमस्तु । 675

क्षीरिण्यः सन्तु गावो, भवतु वसुमती सर्व[7]सम्पन्नस[8]स्या

पर्जन्यः कालवर्षी सकलजनमनोनन्दिनो वान्तु वाताः ।

---

सकलग्रन्थार्थं निगमयन्नप्रस्तुतप्रशंसालंकारेण प्राह । कांश्चिदिति । तुच्छयति तुच्छान्करोति । अन्योन्यं प्रतिपक्षाणां बाध्यबाधकानां विद्धानामित्यर्थः । धनित्वनिर्धनत्वराजत्वरङ्कत्वादीनां संहतिः समूहो यस्यामीदृशीं संहतिरूपामिति वा लोकस्थितिं लोकव्यवहारम् । उत्पत्तिस्थितिप्रलया इति क्रमात् । विधिर्दैवम् । कूपे यन्त्रं घटीयन्त्रम् । तत्र घटिकाः स्वल्पा घटास्तासां न्याये प्रसक्तः । घटीयन्त्रे चलति घटिकाश्च मालायां क्रमादुच्चनीचभावे जलमानयन्ति त्यजति(न्ति) यथा तथा विधिरपि स्वक्रमायातमधनत्वसधनत्वादिकमनुभावयतीत्यर्थः । [शार्दूलविक्रीडितं छन्दः ॥ ६९ ॥]

आशीरात्मकं भरतवाक्यम् । क्षीरिण्य इति । उक्तं [५९ पद्ये] छन्दः । क्षीरशीलाः । ताच्छील्ये णिनिः । गावः सन्तु । गवां सकीर्त्तनं शकुनरूपमिति ज्ञेयम् । तत्रापि हव्यकव्यक्रियामि(नि)दानं क्षीरवत्त्वेन त्वधिकं बोध्यम् । भूः सर्वं संपन्नं सस्यं यस्यां सा भवतु । पर्जन्यो मेघः स्वसमयवर्षी भवतु । अनिलाः कोमलाः वान्तु गच्छन्तु ।

---

१ Is preceded by स्वगतम् B (d) EGK. २ दूषयति AB (c) DF; त्वुष्ययति B (b); °तोषयति G; °क्षुस्छयति ? K. ३ om. K. ४ पान° B (a) ५ प्रतिदाक्ष ? B (b). ६ Preceded by प्रकाशं B (a) G; तथा ईद° B (b). ७ सर्वपत्र B (a) ८ °शस्या J.

मोदन्तां जन्मभाजः, सततमभिमता ब्राह्मणाः सन्तु सन्तः
श्रीमन्तः, पान्तु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः॥६१॥

इति निष्क्रान्ताः सर्वे।

संहारो नाम दशमोऽङ्कः।

॥ समाप्तोऽयं ग्रन्थः ॥

---

न तु झञ्झावाताः। जन्मिनः सदा मोदन्ताम्। अभिमता द्विजाः सन्तश्चान्ये श्रीमन्तः सन्तु। शान्तं (न्त) शत्रवो भूया(पा) श्च। धर्मे निष्ठा भक्तिर्येषां तादृशा भूत्वा पृथ्वीं पान्त्विति प्रकृतसर्वप्रबन्धार्थसंवलितेयमाशीरिति शिवम्॥६१॥

इति श्रीमृच्छकटि(क)प्रकरणव्याख्यायां सुवर्णालंकरणाख्यायां संहारो नाम दशमोऽङ्कः समाप्तिमभजत्। संपूर्णं चेदं मृच्छकटिकप्रकरणविवरणं सुवर्णालंकरणं नाम॥ शुभं भूयात्॥ संवत् १८७८ मिति आश्विन कृष्ण १०॥

---

१ पृथ्वीं प्रशमित del. marg. सर्वान् प्रतिहत B (d). २ ब्रह्मनिष्ठा DF. ३ इति मृच्छकटिकायां संहा॰ B; इति मृच्छकटिकप्रकरणे संहा॰ D; संवारो॰ F. ४ समाप्ता चेयं मृच्छकटिका BEG, ends with शुभमस्तु B.

# पृथ्वीधरकृता टीका।

## उपोद्घातः ।

श्रीगणेशाय नमः ॥ [१]शेमुषीप्रौढजीवातुर्[२]विवृतिर्[३]मृच्छकटिके । [४]पृथ्वीधरैश्चिकीर्षद्भिर्गणेशो [५]गण्यते गुरुः ॥१॥ तथा । [६]बालानां सुखबोधाय गुरूणां वचनं शुभम् । लिख्यते गहनेष्यत्र [७]हेरम्बावनतिस्थि[८]रैः ॥२॥ प्रकरणं चेदम् । [९]तस्य च लक्षणम् । 'यत्र कविरात्मबुद्ध्या वस्तु शरीरं च नायकं चैव । विरचयति समुत्पाद्य तज्ज्ञेयं प्रकरणं नाम ॥ १ ॥ चतस्रो वृत्तयः पञ्च संधयोष्टरसादयः । [१०]प्रकरणतो नाटकं विहाय नृपनायकम्(?) ॥ २ ॥' आदिशब्दात्[११]षड्रसादिग्रहणम् । नाटकादौ बहुप्रकारप्राकृतप्रपञ्चेषु चतस्र एव भाषाः प्रयुज्यन्ते—शौरसे[१२]न्यवन्तिकाप्राच्यामागध्यः । अपभ्रंशप्रपञ्चेषु चतस्र एव भाषाः प्रयुज्यन्ते—शकारीचाण्डालीशाबरी[१३]ढक्कदेशीया (:?)। मृच्छकटिके तु शबरपात्राभावाच्छाबरी नास्ति । प्राकृते—'[१४]मागध्यवन्तिजा प्राच्या शौरसेन्यर्धमागधी । बाल्हीका दाक्षिणात्या च [१५]सप्त भाषाः प्रकीर्तिताः ॥' महारा[१६]ष्ट्र्यादयः काव्य एव प्रयुज्यन्ते । अपभ्रंशे—'शकाराभीरचाण्डालशबरद्राविडो[१७]ड्ड्जाः । हीना वनेचराणां च विभाषाः सप्त कीर्तिताः ॥' विविधा भाषा वि[१८]भाषाः । हीनपात्रप्रयोज्यत्वाद्धी[१९]नाः । वनेचराणां चेति ढक्कभाषासंग्रहः । तत्रास्मिन्प्रकरणे प्राकृतपाठकेषु सूत्रधारो नटी रदनिका वसन्तसेना तन्[२०]माता चेटी कर्णपूरक चा(श्चा)रुदत्तब्राह्मणी शोधनकः [२१]श्रेष्ठी एते एकादश (?) शौर[२२]सेनी भाषापाठकाः । सूत्रधारोप्यत्र प्राकृती । कार्यवशादिति वक्ष्यते । अवन्तिभाषापाठकौ वीरकचन्दनकौ । प्राच्यभाषापाठको विदूषकः । 'संवाहकः शकारवसन्तसेनाचारुदत्तानां चेटकत्रितयं भिक्षुश्चारुदत्तदा[२३]रकः' । एते षण्मागधीपाठकाः ।

---

१ मृच्छकटिकप्रकरणे यद्दुर्बोधं पदं किञ्चित् । विवृतिस्तस्य स्वधिया क्रियते सद्भिर्विलोकनीयैषा ॥ १ ॥ प्रकरणं चेदम् &c. E F. G. २ विवृत्तिमृ° B C. ३ corr. काटिके; I erased A; केटके B; कटेके C. ४ पृथ्वीवरैः B. ५ गुण्यते A B; गुरायते C. ६ बालाजी° BC. ७ हेरम्भाव° B. ८ निस्थिरैः C. ९ तथा च तल्लक्षणं E F G. १० B प्रकरणत्वात्प्रसिद्धनायकं विहाय कल्पितवणिङ्नायकम् । विविधाश्चात्र रसाः नाटकादौ E F G. ११ छस्तू इत्यादि B; छस्तुइत्यादि° C. १२ आवन्तिका E F. १३ ठक्कदेशीया A B टक्क° C. G. H. १४ मागध्यवन्तिका BC. १५ समभाषाः B. १६ °राष्ट्रादयः. १७ °डोण्ड्जाः B °डोण्ड्जाः C. १८ विभाषा B C. १९ हीना B C. २० एतन्माता A. २१ श्रेष्ठी B C. २२ सौरसेनी° B C. २३ हाटकः B; दाटकः C.

अपभ्रंशपाठकेषु शकारीभाषापाठको राष्ट्रियः[1] । चण्डालीभाषापाठकौ चण्डालौ[2]। ढक्कभाषापाठकौ[3] माथुरद्यूतकरौ । तथा—'शौरसेन्यवन्तिजा[4] प्राच्या' एतासु दन्त्यसकारता[5]। तत्रावन्तिजा रेफवती[6] लोकोक्तिबहुला । प्राच्या स्वार्थिककाकारप्राया । मागधी तालव्यशकारवती । शकारीचाण्डाल्योस्तालव्यशकारता । रेफस्य च लकारता । वकारप्राया ढक्कविभाषा[7] । संस्कृतप्रायत्वे दन्त्यतालव्य[8]सशकारद्वययुक्ता च[9]। 'अपार्थमक्रमं व्यर्थं पुनरुक्तं हतोपमम् । लोकन्यायविरुद्धं च शकारवचनं विदुः ॥' अपार्थं[10] निरर्थकम् । व्यर्थं विरुद्धार्थम् । यद्वा । निश्चितानन्वयं[11] पदजातं वाक्यजातं चापार्थकम्[12]। व्यर्थं निरर्थकमेव । हतोपमं व्याहतोपमम्[13] । 'शकारप्रायभाषित्वाच्छकारो राष्ट्रियः स्मृतः। एकविद्यो विटश्चान्यो हास्यकृच्च विदूषकः ॥' स्वार्थिकः ककारः सर्वत्र । द्विवचनं चतुर्थीविभक्तिश्च नास्त्येव । द्वित्वे तु बहुवचनम् । चतुर्थ्यर्थे षष्ठी । परस्मैपदात्मनेपदविपर्ययः । पूर्वनिपातानियमश्च । बहुलं छन्दसो निदर्शनमप्रसिद्धच्छन्दोज्ञानार्थम् । पाठविप्लवनिरासार्थं[14] च ॥

## प्रथमोऽङ्कः[16] ।

पर्यङ्केत्यादि । पर्यङ्कः पर्यस्तिका । तस्य बन्धनेन द्विगुणितो यो भुजङ्गस्तस्य सम्बन्धेन स्थगितं जानु यस्य । आत्मनि शरीर एवोपरतं करणमिन्द्रियं यथा स्यादेवं तत्त्वदृष्ट्यानारोपितज्ञानेन शून्येक्षणे निराकारालोचने घटितोऽत्यन्तसंबद्धो[15] यो लयस्तत्प्रवणताविशेषस्तेन ब्रह्मणि परमे रूप आसक्तःसमाधिर्ध्यानमीशस्य वो युष्मान् रक्षतु ॥ १ ॥ आर्याम्मान्यान् मिश्रानभ्यस्तबहुशास्त्रान् । चारुदत्तपुत्ररोहसेनक्रीडनार्थं षष्ठेऽङ्के उक्तं मृच्छकटमत्रास्ति । 'अत इनि ठनौ'[17] इति ठन् । मृद् शकटिकास्मिन्निति वा बहुव्रीहिः । द्विजमुख्यतमः क्षत्रजातिश्रेष्ठः[18]। 'त्रयो वर्णा द्विजातयः' इति स्मृतेः क्षत्रियेऽपि द्विजप्रयोगः ॥ ३ ॥ वेशोऽत्र कात्स्न्येन वेश्यापरः । तत्र भवा विद्यमाना । अध्यात्मादित्वाट्ठक् । यद्वा[19] वेशो अग्निवेशाख्यो राजा तेन कृताम् । कलां चतुःषष्टिकलाप्रतिपादकं प्रबन्धम् । शर्वो महादेवः । लब्ध्वा चायुः शताब्दमग्निं प्रविष्ट इति जातकादि-

१ राष्ट्रियः B C. २ चाण्डाली B C. ३ ढक्क or ठक्क भाषा A B G H; टक्क C. ४ वन्तिका B C. ५ शकारता B. ६ रेफलकारवती corr. marg. B. ७ टक्का विभाषा B C. ८ °व्यशकार B C. ९ युक्तता च B C. १० °पार्थः B. ११ °नन्वयपद° B C. १२ चापार्थकः B. १३ om. F. १४ पाठ°......सार्थं om. B C. १५ °तोन्यत्र संबन्धो B C. १६ प्रथमेऽङ्के B; प्रथमके C. १७ इन् ठनौ E F G. १८ क्षत्रियजा F, From यद्वा...प्रबन्धं marg. D. १९ Add marg. 'यद्वा ------ कृ- बन्धम्'. A; om. E F G.

गणितद्वारा ज्ञात्वा। आगामिसूत्रधारवचनापेक्षया 'अग्निं प्रविष्टः' इत्यादिभूतकालप्रत्ययो न विरुद्ध इति मर्मज्ञाः। अग्निप्रवेशोऽपि सर्वस्वारनामके यज्ञविशेषे। यथा शरभङ्गेन(ण) कृतस्तथा बोद्धव्यम् ॥ ४ ॥ ककुदं चिह्नभूतं प्रवीणो वा। तथा चामरः। 'प्रावीण्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्' इति। वारणो हस्ती ॥ ५ ॥ अवन्तिपुरी उज्जयिनी। अस्यां च तत्कृतौ। अवन्त्यां त्यादावास्तिद्वयानुषङ्गः ॥ ६ ॥ नयो नीतिस्तस्य प्रचारो व्यवहारस्तं नय(य)प्रचारं स्वहित(तं EG)व्यवहारः (?) ॥ ७ ॥ चिरशून्यमिति कर्मधारयः। चिरं दीर्घः कालो निरवधिः समयः। शून्यमभिमतकार्यरहितम्। सन्मित्रस्य हि ससहायत्वेन कार्योत्पत्तेः। सदा पूर्ण इव समयोऽवभासते ॥८॥ (P. 6, L. 46) खडित्यव्यक्तानुकरणम्। सङ्गीतकेन चक्षुषी खटखटायेते इत्यसंबद्धप्रलापेन भाविनः शकारासंबद्धभाषणस्य सूचनम्। प्रातराशः कल्यभोजनम्। कार्यवशात्प्रयोगवशाच्चेति। कार्ये बोध्यायाः स्त्रियो झटिति ज्ञानम्। यदुच्यते—'स्त्रीषु ना प्राकृतं वदेत्' इति सुकुमारत्वेन सुप्रयोगत्वं प्राकृतस्य। यदुक्तम्—'पुरिसा सक्कअजप्पा पाउअगुम्फो वि होइ सुउमारो'। तथा षष्ठेऽङ्के प्रवहणविपर्यासे वीरकचन्दनकयोः कलहे संभ्रमागतवचनसंवरणार्थं भाषाव्यत्यासाच्चन्दनकस्य पाठः संस्कृतेन। तथा पञ्चमाङ्के दुर्दिने कार्यवशाद्वसन्तसेनायाः श्लोकपाठः संस्कृतेन। चारुदत्तस्य दारिद्र्यवर्णनासूचनयोग्यप्राकृतपरिग्रह(?)। यदाहु—'कार्यतश्चोत्तमादीनां कार्यो भाषाव्यतिक्रमः' इति। एतत्सर्वमनेन सूचितमिति। (P. 7, L. 49) अविद अविदेति निर्वेदे। कष्टं कष्टमित्यर्थः। 'अदृष्टाश्रुतसंग्रामावविदाविदभोः पदम्' इति च प्राञ्चः। मिलाणाइँ म्लानानि। हीमाणहे विस्मये। किं नु खल्वस्माकं गृहेऽन्यदिव संविधानकं वर्तते। आयामी दीर्घस्तन्दु(ण्डु)लप्रक्षालनजलप्रवाहो यत्र तादृशी रथ्या। लोहस्य कटाहो भाजनविशेषः। तत्परिवर्तनेन मार्जनेन। कृष्णसारा कृततिलका। युवतीवद्भूमिरधिकं शोभते। कृष्णसारा भूमिरित्यनेन चतुर्थाङ्के भवनकोष्ठकस्य विशेषसूचनम्। (P. 8, L. 56) सिणिद्धगन्धेण स्निग्धगन्धेन। उद्दीविअन्ती विअ उद्दीप्यमानेव।

---

१ बोध्यम् F. २ प्रावीणी वा BC, प्रावीण्यं वा D, प्राणं वा EFG marg. note प्रावीण्यमिति पुस्तकान्तरे दृश्यते तस्य प्रवीण इत्यत्र तात्पर्यम्। मूलानुरोधात् FG. ३ वास्यास्ववतत्कृतौ B; वास्या स्ववनत् कृतौ C. ४ °त्यादिवस्निभ्याशयानुषङ्गः B C. ५ सन्मित्रस्य E F G. ६ चक्षुः खटखटायते B C. ७ पाउअ गुम्भोइ सुकुमारे F. ८ सुउमारे E G. ९ सुक्खपोखरणालाइं इति शुष्कपुष्करनालानि [मिलाणाइं & c EF G. १० युवतीव EF G. ११ कोलकस्य B; कोष्ठकस्य C.

तत्किं पूर्वार्जितं निधानं बहुसंख्यं धनमुत्पन्नं भवेत्। आदु अथवेत्यर्थः। अहमेव बुभुक्षातोन्नमयम्। पाठान्तरे ओदनमयम्। जीवलोकं संसारं पश्यामि। नास्ति किल प्रातराशोस्माकं गेहे। प्राणाधिकं प्राणेभ्वधिकं यथा स्यादेवम्। मं माम्। बुभुक्षा बाधते। इह सर्वं नवं संविधानकं वर्तते। एका वर्णकं कस्तूर्यादिकं समालम्भनं पिनष्टि। अपरा सुमनसः पुष्पाणि ग्रश्नाति। इत्यनेनापि कोष्ठकस्यैव सूचनम्। असिद्व्वमन्नरूपं द्रव्यम्।(P.10,L.73) घिअं घृतम्। अत्तव्वं रसाअणमिति। प्रायेणात्तव्यं रसायनमस्तीत्येवं तव देवा आशासन्तामिति सन्दिग्धवाक्योपन्यासः। आर्य, अस्त्यापणे वणिग्वीथ्याम्। एवं तवाशा छेत्स्यति। अभावं च गमिष्यसीत्यनेन वसन्तसेनायाः प्रवहणविपर्यासमोटनयोः सूचनम्। (P. 11, L. 80) वरण्डो दीर्घकाष्ठं तस्य लम्बुकस्तत्प्रान्तनिबद्धो मृत्तिकास्थूणः। स हि द्रोण्यां पानीयोद्धारे दूरमुत्थाप्याधः पात्यते। केचिदाहुः। वरे (र?)ण्ड इष्टकागृह उन्नतीभूतो दीर्घो भित्तिप्रदेशस्तत्र लम्बुकोवयवभूत इष्टकासंघः। सोपि हि संयोजनार्थं दूरमुत्थाप्यते। अनन्तरं निपतत्यपीति। मर्षतु मर्षत्वार्यः। परिहासः खल्वेषः। उपवास उपवासरूपं व्रतमित्यर्थः। अधिकरणघञन्तोयम्। (P. 12, L. 89) अहिरूअवदी णाम अभिरूपपतिर्नाम। पारलौकिक इत्यनेन पालकव्युदासेन नायकान्तरलाभसूचनम्। ममकेरकेण मदीयेन। भत्तु(त्त EFG) परिव्वएण भक्तपरिव्ययेनौदनव्ययेनेत्यर्थः। यद्वा। भर्तृपरित्यागेन पारलौकिको भर्त्तान्विष्यते। त्वमेव जन्मान्तरे भविष्यसीति। (P. 13, L. 97) अयमुपवासः केन तवोपदिष्टः। आर्यस्यैव प्रियवयस्येन जूर्णवृद्धेन। आः आक्षेपे। छय आदुत्या आकारान्तादेशे कृते जूर्णवृद्धा इति। एवं च दूआ तीआ (अङ्क २, पृ० ९६, पं० १९, २०) इत्यादौ च बोद्धव्यम्। कुपितेन राज्ञा पालकेन कप्पिज्जन्तं कल्प्यमानं छेद्यमानम्। वधूपक्षे कल्प्यमानं संसज्ज्यमानम्। कदा नु खलु त्वां प्रेक्षिष्यामि (?)। नववधूकेशहस्तमिव वासितं सुगन्धम्। वज्जन्तमिति पाठे वध्यमानम्। अनेन संहाराङ्के चारुदत्तनिग्रहसूचनम्। (P.13,L.102) प्रसीदत्वार्यः। आर्यस्यैव पारलौकि-

१ From नास्ति . . . गेहे om. B C. २ सन्निधानकं E F G. ३ समालम्भलं B C. ४ om. Here and place after न्यासः घअं घृतं B C. ५ आशासन्ताम् B C. ६ गमिष्यसीत्य° F. ७ वरण्ड E F; रेण्ड corr रण्ड G. ८ अनन्तरं om. B C F. ९ आं F G. १० °डुत्या G. ११ दुआ E F. १२ कज्जन्तं छेद्यमानम् B C. १३ कल्प्यमानं om. E F G. १४ वधू .... ज्यमानम् om. E F G. १५ कदान्वथ त्वां marg. D. १६ सुहन्धम् B C.

कोयमुपवासः। उच्चेहि उत्तिष्ठ। कधेहि कथय। एत्थ उववासे अत्रोपवासे। केन कार्यम्। अम्हारिसजणजोग्गेण अस्मत्सदृशब्राह्मणेन उवणिमन्तिदेण आ (उपनि?) मन्त्रितेन। अत्तो गच्छत्वार्यो। अहमप्युपनिमन्त्रयामि। ( P. 14, L. 111 ) आणवेदि आज्ञापयति। ता तस्मात्। कधं कथम्। मए मया। ईदृश्यामुज्जयिन्यां समृद्धायामस्मत्सदृशो ब्राह्मणोऽन्वेषितव्यः। कोर्थः। यदा दुःस्थिता भवन्ति ब्राह्मणास्तदा चारणादीनामपि गृहे कुर्वन्ति भोजनम्। एष चारुदत्तस्य मित्रं मैत्रेयः। इदो जेव्व इत एव। आगच्छति। भवन्विमभ्युपनिमन्त्रयिष्ये। अद्य मैत्रेयास्माकं गृहे भोक्तुम्। अग्गणी अग्रणीः। प्रष्ठोऽग्रगामीति यावत्। 'अधिदी भोदु' इत्यपि पाठः। तत्रातिथी भव त्वमित्यर्थः (!)। भो। अण्णं अन्यम्। बह्मणं ब्राह्मणम्। उवणिमन्तेदु उपनिमन्त्रयतु। भवान्। ( P. 15, L. 118) वावडो व्यापृतः। अहमिदानीं कार्यान्तरव्यासक्तः। दाणिं इदानीम्। संपन्नं मृष्टम्। णिसवत्तं च। पितॄणां समुत्सृष्टं घृतादिसहिततण्डुलपूर्णपात्रम्। 'निस्राव' इति यस्य प्रसिद्धिः। णिसवत्तं निःसपत्नम्। विपक्षस्यापरस्याभावादिति केचित्। अपि दक्षिणापि ते भविष्यति। एकोपिः संभावनायामपरः समुच्चये। भो दाणिं पच्चादिट्ठोसि इदानीं प्रत्यादिष्टोसि। को दाणिं क इदानीम्। ते णिव्वन्धो निर्बन्धः। मं माम्। पदे पदे अणुवन्धेदुं अनुरोद्धुम्। पच्चादिट्ठोम्हि प्रत्यादिष्टोस्मि। एदिणा अनेन। भोदु भवतु। अण्णं अन्यम्। बम्हणं ब्राह्मणम्। उवणिमन्तेमि उपनिमन्त्रयिष्ये। ( P. 16, L. 127 ) प्रस्तावनेत्यामुखसन्धिपर्यायः। यदुक्तम्– 'सूत्रधारेण सहिताः संलापं यत्र कुर्वते। नटी विदूषको वापि पारिपार्श्वक एव वा॥ आमुखं नाम तस्यैव सैव प्रस्तावना मता॥' प्रावारः प्रच्छदपटः। अथवा मयापि मैत्रेयेन(ण) परस्य। आमन्तणाइं आमन्त्रणकानि। पच्छिदव्वाइं समीहितव्यानि। यो नामाहं तत्रभवतश्चारुदत्तस्य समृद्ध्याहोरात्रप्रयत्नसिद्धैरुद्गारसुरभिगन्धिभिर्मोदकैरेवाशितस्तृप्तः। ( P. 17, L. 133) मल्लकशतपरिवृतः। मल्लकः पात्रविशेषः पत्रपुटो वा। दोना इति प्रसिद्धो विदूषकपक्षे। चित्रकरपक्षे वर्णिकापात्रं मल्लकः। अभ्यन्तरचतुः

१ उच्चेहि B C. २ त्विमं निमन्त्र° E F G. ३ अतिधी E G. ४ बह्माणी B C. ५ °णा कापि E F G. ६ पच्चादिच्छोसि B C; पचादिट्ठोसि E F G. ७ अनुबोद्धुमित्यर्थ B. ८ °चादिट्ठो ह्मि E. ९ °पार्थिक B C. १० गल्लकं and °कः E F G. ११ गल्लकः F G.

[1]शालाद्वारे उपविष्टः। चित्रकर इव छिंविअ छिविअ स्पष्ट्वा स्पृष्ट्वाङ्गुल्य[2]ग्रैरपनयामि न [3]भक्षयामि। अत्यन्तं तृप्तत्वादित्यर्थः। चित्रकरोप्यङ्गुलीसंस्थितलेखनिकया वर्णिकाभाण्डं स्पृष्ट्वा स्पृष्ट्वापनयति विक्षिपति। अन्यथा वर्णिकाबिन्दुपातः स्यादिति। नवबद्धवृषभ इव रोमन्थायमानस्तिष्ठामि। 'आपणे नगरचत्वरवृषभ' इवेति पाठान्तरेपि व्याख्या। दाणिं इदानीम्। दलिद्ददाए दरिद्रतया। यत्र [4]कुत्रापि चरित्वा गृहपारावत इव वासनिमित्तं शयनार्थमत्रा[5]गच्छामि। एसो एषः। जूर्णवृद्धेन (P. 17, L. 138) जातीकुसुमवासितोनुप्रेषितः प्रावारकः। सिद्धीकददेवकज्जस्स [6]निष्पादितदेवकार्यस्य। पाठान्तरे तु। षष्ठीव्रतकृतदेवकार्यस्येत्यर्थः। आर्यचारुदत्तस्योपनेतव्यः। तद्यावत्पश्यामि। गृहदेवतानां दलिं हरन्नित एवाभिगच्छति। बलिं पूजाम्। (P. 19, L. 145) यासामिति। कीटमुखास्वादितो बीजाञ्जलिः पतति। विरूढा उपचितास्तृणाङ्कुरा यासु ॥ ९ ॥ स्वस्ति भवते। वर्धतां भवान्। किमिदं चिन्त्यते॥ सुखमित्यादि। दुःखान्यनुभूय सुखं शोभते। न तु सुखम[7]नुभूय दुःखमिति तात्पर्यम्। स मृत एव जीवति। शरीरेण धृतः [8]शरीरेण वेष्टितश्चर्मभस्त्रावदित्यर्थः ॥१०॥ मरणादो मरणात्। दालिद्दादो दारिद्र्यात्। कदरं कतरत्। रोचते। (P. 21, L. 168) दारिद्र्यादिति। [9]अल्पसमय[10]दुःखदत्वान्मरणमल्पक्लेशम्। बहुसमयव्यापित्वादाकाङ्क्षितापगमाद्दारिद्र्यम[11]नन्तकदुःखम् ॥ ११ ॥ संतप्पिदेण संतप्तेन। प्रणयिजनसंक्रामितविभवस्य सुरजनपीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोपि तेधिकतरं रमणीयः। यद्यसद्व्ययेनार्थाः स्वदोषेण नश्यन्ते तदा संतापः क्रियते। तव तु न तथेति भावः॥ (P. 21, L. 174) एतदिति। क्षीणार्थमितिकृत्वास्म[12]द्गृहमतिथयः संत्यजन्ति। एतन्मां दहति। [13]प्रणयी जन(:)स्निग्धबान्धवोर्थी च। कालात्यये मदसमयापगमे धनलाभसमयापगमे च ॥ १२ ॥ एदे खु एते खलु। दासीपुत्रा अर्थरूपप्रातराशाः। वरटा वीरणी इति ख्याता। ततस्त्वस्ता अरण्ये

१ °शालद्वारे E. F. G. २ छिविअ once. स्पृष्ट्वा B C. E F G. ३ तर्कये B; तर्कयामि C. ४ तत्रापि B. C. ५ °चागमिष्यामि F ६ निःपादित B C. ७ अन्तर्भूय B. ८ शरीरवेष्टित. B C E F G. ९ प्रीत अल्प° B C. १० °दुःखत्वात् B C. ११ अनन्तदुःखम् B C. १२ गेहं G. १३ प्रणयी ... र्थी च om. C.

गोपालपुत्रका इव यत्र यत्र न खाद्यन्ते उपभुज्यन्ते तत्र यान्ति॥ ( P. 22, L. 182 ) सत्यमिति। विभवनाशकृता मम चिन्ता नास्ति। कथमित्यत आह। भाग्यक्रमेण लब्धव्यक्रमेण[२]। धनानि भवन्ति। तर्हि चिन्ता कुत इत्यत आह। एतत्तु मां दहति यन्नष्टधनाश्रयस्य मम सौहृदादपि मैत्रीतोपि जनाः शिथिलीभवन्ति[३]। अर्थशून्येन समं प्रयोजनाभावान्मैत्रीमपि न केपि कुर्वते॥ ( P. 22, L. 187 ) दारिद्र्यादिति। लज्जां गच्छति। आकाङ्क्षितासामर्थ्यात्। यदा लज्जा गता तदा तेजसः प्रभ्रष्टो भवति। यावत्तावत्कारणात्[४]। तेजःशून्यः परिभूयते। भयाभावात्। परिभवान्निर्वेदं गच्छति। मानम्लानेः। ततः शुचमेति। वृथा जीवनमिति। ततस्त्यज्यते बुद्ध्या। निर्बुद्धिः क्षयं गच्छति। तदुक्तम्—'बुद्धिनाशात्प्रणश्यति' इति। अत एव सर्वासामापदां स्थानमित्युपसंहरति॥ १४॥ कल्यवर्त्तं प्रातराशः। एतद्रूपत्वे[५] चार्थस्य तव ड्रू (orदू) पद्रव्यत्वाज्जनान्तरानवगाहितत्वाच्च तद्विस्मृत्य धर्मचित्ताः साधवो भवन्तीत्याशयः[६]॥ ( P. 23, L. 194 ) निवास इति। चिन्ताया निवासः। कथं मम निर्वाहः स्यादित्येवंरूपायाः। परस्य परिभव इति षष्ठीसमासः। कर्मधारयो वा। एतच्चाविश्वसनीयतया निर्धनानां ज्ञेयम्। जुगुप्सा मित्राणामिति। प्रत्युपकारासमर्थत्वात्। स्वजनानां बन्धूनाम्। जनानामन्येषामुदासीनानाम्। करणं कृतिः। कर्त्तरि करणे वा ल्युट्। भवति चेति चकारो हेतौ। वनगमने कलत्रपरिभवो हेतुः॥ १५॥ न गमिष्यामि। एवं पूज्यमाना अपि देवा न फलं दर्शयन्ति। तत्को गुणोर्चितेषु देवेषु। नित्योयं विधिः। अकरणे प्रत्यवायात्। तुष्यन्ति परलोकमुत्कृष्टं प्रयच्छन्ति। यतः श्राद्धकृदतिथिप्रियो गृहस्थोपि मुच्यत इति भावः॥ १६॥ ( P. 25, L. 209 ) अन्यः कोपि प्रयुज्यताम्। मम सर्वमेव विपरीतमुपनमति। आदर्शगता छायेव। आदर्शस्य प्रतिबिम्बे वामो भागो दक्षिणे दृश्यते। दक्षिणश्च वाम इति वस्तुगतिः। अन्यच्चैतस्यां प्रदोषवेलायामत्र राजमार्गे गणिका विटाश्चेटा राजवल्लभाः संवसन्ति। एतेन विटादीनां प्रवेशं सूचयति। 'नासूचितस्य प्रवेशः' इति। मण्डूकलुब्धस्येव कालसर्पस्य मुखापतितो

१ इव अर्थो B C. २ लब्धव्यक्रमेण om. E F. ३ शिथिला F. ४ करणात् E F G. ५ सर्वरूपद्र° B; सर्वद्रूपद्र° C; तद्रूपद्र° E F G. ६ न भवन्ती° B C.

मूषिक इव वध्यो भविष्यामि । ( P. 26, L. 221 ) विशदौ संचरणलाघवगुणान्वितौ । पटू इति यावत् । उद्विग्नचञ्चलकटाक्षरूपेण निसृष्टा दृष्टिर्यया सा तथा । अनुसारोनुगमनम् । व्याधेन यदनुगमनं तेन त्रस्ता मृगीवं ॥ १७ ॥ शकारभाषायां चवर्गशिरस्थितोन्तस्थो यकारो लेख्यः । 'पूस्पृष्टा तालव्य' इति वचनात् । स च संयोगः प्रयत्नलाघवात्पूर्वस्य गुरुत्वं न करोति । च्चिश्ठ तिष्ठ ॥ ( P. 26, L. 226) किं यासीत्यादि । वसन्ततिलकच्छन्दसा श्लोकः । प्रस्खलन्ती । प्रस्खलनं निम्नोन्नतादौ गतिविघटनम् । 'बाला स्याद्वास्रूः' इत्यमरः । न म्रियसे । तिष्ठ तावत् । हडके हृदयम् । तवश्शी वराकः । अङ्गारराशिपातितं मांसखण्डमिव । कामेन दह्यते ॥ १८ ॥ अज्जुके गणिके ॥ उत्त्राशितेत्यादि । उपजातिच्छन्दसा श्लोकः । उत्त्रासिता गच्छस्यन्तिकान्मम । यद्वा । अत्तिका ज्येष्ठा मे भगिनी । 'अत्तिका भगिनी ज्येष्ठा' इत्यमरः । संपूर्णपक्षेव ग्रीष्ममयूरी । ओवग्गदि अववल्गति । ससंभ्रममागच्छतीत्यर्थः । शामिअ भट्टके स्वामिभट्टारकः । वने गतः कुक्कुटशावक इव । गडे इति प्रथमान्तस्यैकारान्तत्वम् । 'गतमृतकृतानां डः' इति डः ॥१९॥ 'टङ्कः पाषाणदारणः' इत्यमरः । विदारणक्षणे हि निर्मला दीप्तिः प्रसरतीति । कुड्मलं कलिका । मनःशिलगुहेति । महाभारते मनःशिलशब्दोपि दृश्यत इति तथा प्रयुक्तः । 'मनःशिला तु कुनटी' इत्यमरः ॥ ( P. 28, L. 241) मम मदनेत्यादि । मालिनीच्छन्दसा श्लोकः । मम मदनमनङ्गं मन्मथं वर्धयन्ती निशि च शयनके मम निद्रामाक्षिपन्ती । प्रसरसि प्रगच्छसि । प्रस्वपसि दात्यूहवद्विरौषीति केचित् । भयभीता प्रस्खलन्ती स्खलन्ती मम वशमनुयाता रावणस्येव कुन्ती । भयभीतेति । भयशब्दोयमपार्थकः । मदनमनङ्गमित्यादि पुन(रु)क्तम् । रावणस्येव कुन्तीति हतोपमम् । तथा चोक्तम् — 'आगमलिङ्गविहीनं देशकलान्यायविपरीतम् । व्यर्थैकार्थमपार्थं भवति हि वचनं शकारस्य ॥' इति ॥२१ ॥ विशेषयन्ती अतिशयाना । व्याली सर्पी । प्रविसृतः प्रचलितः ।

---

१ शकारभाषाया ' ' करोति first and then उद्विग्न'' ''मृगीव B. C. २ मृगीव च्चिश्ट तिष्ठ and then शकारभाषाया° &c. F. G. ३ पूस्पष्टा B C; स्पृष्टा E; यूस्पृष्ठा F. ४ पक्खलती E G, पक्खलती F. ५ marg. note विभिन्नलिङ्गत्वमात्रम् G; body F. ६ अपूवल्गति E. F. G. ७ स्वामी E. F. G. ८ °रशावक° E F. G. ९ कुनटी A. B. C. E. F. G. H.

यातं न निरुणध्मि । अपि तु रुणध्म्येव । नकारः काकौ ।'भावो विद्वान्' इत्यमरः ॥ (P. 29, L. 251 ) एशा णाणकेत्यादि । शार्दूलविक्रीडितच्छन्दसा श्लोकः । एषा । नाणं शिवाङ्क टङ्कादिवित्तम् । तस्य मोषणशील: कामो यस्य तस्य काशिका चर्मकाष्ठिका । चौराणां किंचित्तया चोपकरणं भवति । तदत्र कशोका । कशा चाश्वताडनी । चर्मखडिकोच्यते । मच्छाशिका मत्स्यभक्षिका । मेच्छं शुष्कमांसमित्येके । लाशिका नर्तकी । णिण्णाशा निम्ननासा । कुलणाशिका कुलं वंशस्तन्नाशयाति पानित्यजननात् । णीशाशेति पाठे निःस्वानामाशा (?) कुलनाशिकेत्यर्थः । अवशिकानायत्ता । दानेनापि कस्याप्यायत्ता न भवति । कामस्य मञ्जूशिका पात्रविशेषः । कन्दर्पभाजनमिव वर्तुलीभूतः काम इवेत्यर्थ । एषा वेशवधूः । 'वेशो वेश्याजनाश्रयः' इत्यमरः। सुवेशानिलया शोभनानां वेशानामलङ्काराणां निलय आश्रयो यस्यां सा । वेश्याङ्गना । वेशिका । वेशोस्यास्तीति वेशिका । एतान्यस्या दश नामकानि मया कृतानि । अद्यापि मां नेच्छसि । यदि देवताया अष्टौ दश द्वादश नामानि यदि पठ्यन्ते तदा सा प्रसन्ना भवति । इयं त्वेतावतापि न प्रसन्नेति भावः । अत्र पूर्वार्धोत्तरार्धयोः एषैषेति पुनरुक्तम् । न्यूनमधिकं वा कृतम् । दशेति व्यर्थम् ॥२३॥ प्रचलिताभ्यां कुण्डलाभ्यां गण्डयोर्घृष्टं पार्श्वे यस्याः सा । अत एव विटनखपरिमृष्टवीणातुल्या । मनोहरत्वाच्छब्दवत्त्वाद्वा वीणातुल्यत्वम् । विटसदृशौ कुण्डलौ ॥ २४ ॥ ( P. 30, L. 260 ) झणज्झणन्तेति । वसन्ततिलकं छन्दः । झाणज्झणन्तेत्यव्यक्तानुकरणम् । अव्यक्तशब्दविशेषयुक्तबहुभूषणशब्देन मिश्रं यथा स्यादेवम् । किं द्रौपदीव विपलायसे रामभीता । एष हरामि झटिति यथा हनूमान्विश्वावसोर्भगिनीमिव तां सुभद्राम् । विश्वावसोः सिद्धराजविशेषस्य । न (?) भगिनी सुभद्रा किं तर्हि कृष्णस्य । यथा इवेति पुनरुक्तम् ॥ २५ ॥ लामेहीत्यादि । प्रतिपादं चतुर्दशमात्रत्वान्मात्रासमकं छन्दः । लामेहि अ रमय च । चकारो भिन्नक्रमः । राज-

---

१ मस्कं B C. २ निस्तुशा निम्ननाशो. B C. ३ निशाशो° C. ४ निःस्वानागासो कुल° B C; निःस्वानामाशा &c., D E F G. marg. note. अत्र च नाणकमूषिकामकाशिकेति नामद्वयं बोध्यम्. ५ का वा B C. ६ नेच्छति E F G. ७ om. G. ८ om. B C. ९ त्वं त्वेतावतापि B C. १० घृष्टः पार्श्वो E F G. ११ पलायसे om. वि E F G.

वल्लभं चेत्यर्थः। तो [1]पा (खा) हिशि ततः खादिष्यसि। मत्स्यमांसकम्। तो इत्योकारो लघुश्छन्दोनुरोधादित्याहुः। 'एओकारौ हलन्तस्थौ शुद्धौ [2]वाप्यपदान्वितौ। दीर्घात्परौ लघू स्यातां छन्दोविचितिभाषया' इत्युक्तम्। ए[3]देहिं मश्छमंशएहिं एताभ्यां मत्स्यमांसाभ्यां हेतुभ्याम्। '[4]मश्कलेहि' इति पाठे मत्स्यशुष्कमांसाभ्यामित्यर्थः। ककारः स्वार्थे। शुणआ श्वानः। मृतकं न सेवन्ते। नकारः शिरश्चालने। न सेवन्ते इति नापि तु सेवन्त एवेत्यर्थः ॥२६॥ वक्त्रेण लक्षिता नगरदैवतवत्प्रयासि। कीदृशेन वक्त्रेण। [5]निर्मथितचूर्णमनःशिलातुल्येन ॥२७॥ अम्हेहिं चण्डमिति। उपेन्द्रवज्रा छन्दः। 'अस्माभिश्चण्डं शीघ्रमभिसार्यमाणा वने शृगालीव कुक्कुरैः पलायसे। शीघ्रं त्वरितं सवेगं [6]शवेण्टणं संवृन्तम्। समूलबन्धं मे हलअं मम हृदयम्। हरन्ती। सवेढणं सवेष्टनमित्यर्थः इत्येके ॥ २८ ॥ पल्लवकः परभृतिका च वसन्तसेनायाः परिचारकः परिचारिका च। माधविका अपरा परिचारिका। भावे भावे इति संबोधनम्। मणुश्शे मनुष्यः। स्त्रीनामश्रवणेन सगर्वमाह। भावस्त्रियमन्वेषयति। ( P. 33, L. 285 ) स्त्रीणां शतं मारयामि। शूले शूरः। हगे अहम्। हद्धी हद्धी हा धिक्। विलप। किमेकदेशविलापेन सकलं वसन्तमासं वा। अत्र पक्षे एको [7]वाशब्दः शकारवचनतया व्यर्थ एव प्रयुक्तः। अनेकार्थत्वान्निपातानामवधारणे वा। सर्वमेव वसन्तमासमित्यर्थः। [8]को दे तुमं त्वां परित्रायते ॥ (P. 34, L. 292) किं भीम[9]शेणेत्यादि। इन्द्रवज्राश्लोकः। 'किं भीमसेनो जमदग्निपुत्रः कुन्तीसुतो वा दश-कन्धरो वा। एते चत्वारः। एषोहं गृहीत्वा [10]केशेहस्ते दुःशासनस्या-नुकृतिं करोमि' ॥ २९ ॥ णं ननु। पेक्ख प्रेक्षस्व ॥ अशी शुति-क्खे इति। वंशस्थेन्द्रवज्रो[11]पेन्द्रवज्रादिभिर्द्वादशैकादशैकादशवर्णैर्वि-जात्युपजातिः। 'असिः सुतीक्ष्णो वलितो [12]लोलितो मस्तकम्। कल्पये छिनद्मि। तव शीघ्रं मारयामि वा। अलं तवैतेन [13]पलायितेन। मुमूर्षुर्यो

---

१ खखाहिशि E F G. २ वायय F; वाप्य Corr. थ G. ३ मस्चमसाएहिं B. C; मथ° F; मछ° G. ४ मक्खलेहिं E F G. ५ विमर्दित° B. C. ६ om: B C; शवेठणं E; शवेढणं F. G. ७ om. E F G. ८ को तुमं marg. D E F G. ९ भीणसेणेत्यादि E F G. १० केशवृन्दे C; marg. B. ११ उपेन्द्र om. B. १२ om. B. १३ पलपितेन E F G.

भवति न स खलु जीवति ॥ ३० ॥ अबला खल्वहम् । अत एव ध्रियसे जीवसि । बलवान्धारयितुं न शक्यत एवेति तात्पर्यम्। अत एव न मार्ग्यसे। तक्किआदि अन्विष्यते। कृतं निःफलमलंकरणैः। यत उद्यानलता पुष्पमोषं नार्हति। (P. 37, L. 310) अहं वरपुरुषमनुष्यो वासुदेवः कामयितव्य इति तर्क्यत इत्याशयः। सन्तं शान्तम्। अनार्यमनर्हम्। सतालिकं विटस्य हस्ते तालदानं कुर्वेत्यर्थः। भाव प्रेक्षस्व तावत्। ममन्तरेण मयीत्यर्थ इत्येके। अन्तरेण चित्तेन अन्योन्यं सुस्निग्धैषा गणिकादारिका ननु येन मां भणत्येहि श्रान्तोसि क्लान्तोसि। हगे अहं न ग्रामान्तरगतो न नगरान्तरागतो ग्रामान्तरागतो नगरान्तरगतश्च श्रान्तः क्लान्तश्च भवति। न त्वहमीदृश इत्याशयः। (P. 38, L. 317) अज्जुके गणिके। भावस्य विटस्य। शीर्षेणात्मीयाभ्यां पादाभ्यां शपे यदग्रे वक्ष्यमाणं तत्सत्यमित्यर्थः। तवैव पृष्ठानुपृष्ठिकया। आहिण्डन्ते उद्भ्राम्यन्। श्रान्तः क्लान्तोस्मि संवृतः। वेशो वेश्याजनस्थानम्। नाम्यति नमयति। नाम्यतीति कण्वादिपाठान्नामं करोतीत्यर्थे यक्यकारलोपे च रूपम्। यथा मगधशब्दे मगध्यतीति भवति। नामं करोतीत्यर्थे णिचि संज्ञापूर्वको विधिरनित्य इति गुणमकृत्वा यणादेशे नाम्यतीति रूपमित्येके। ण्यन्तात्संपदादिपाठमभ्युपेत्य क्विपि क्यचि रूपमित्यपरे ॥ ३२ ॥ गुणाः खल्वनुरागस्य कारणम्। न पुनर्बलात्कारः। गर्भदासी जन्मप्रभृतिचेटी। ताह तस्य। वामपार्श्वे तस्य चारुदत्तस्य गृहम्। ततो यथा तव मम च हस्तान्नैषा प्रभ्रश्यति तथा करोतु भावः। परिहर्तव्यं चारुदत्तवासोतिनिकट इति वसन्तसेनायाः कथयितुं नार्हतीति। तदेव च तेनोक्तम्। तद्वचनं परिहारविषयः। (P. 40, L. 341) काणेलीमातः। 'काणेली कन्यकामाता' इति देशीप्रकाशः। असती काणेलीत्येके। भाव बलीयानन्धकारः। माषराशिप्रविष्टेव मशीगुडिका दृश्यमानैव प्रनष्टा वसन्तसेना॥ आलोकेति। आलोके दर्शने। विशाला महती ॥ ३३॥ भाव अन्विष्यामि वसन्तसेनाम्। चिह्नं भूषणशब्दादि। उपलक्षणं माल्यगन्धादि।'अस्ति किंचिच्चिह्नमुपलक्षयसीति'पाठान्तरार्थो व्यक्त एव। किं विअ कीदृशमिवेत्यर्थः। शृणोमि माल्यगन्धमन्धकारपूरितया पुनर्नासिकया न सुव्यक्तं पश्यामि भूषणशब्दम्। शुणामि मल्लगन्ध-

---

१ °रिकानुनयेन F G. २ ग्रामान्तरागतो F. G. ३ गणिकेके भट्टालिके B. ४ om: E F G. ५ कालेली° B C. ६ पुनर्न E F G.

मित्यादिना लोकविरुद्धोक्तिः । ( P. 42, L. 368 ) श्रुतमवधारितं, गृहीतमस्य तात्पर्यमप्याकलितम् । अये मातः भित्तिपरामर्शसूचितं पक्षद्वारं खल्वेतत् । जानामि संयोगेन स्पर्शनेन्द्रियानुभवेन गृहस्य संवृतं पक्षद्वारकम् । बान्धवजनो वाक्ये न संतिष्ठते वचनं न करोतीत्यर्थः । प्रतापाभावात् । स्फारीभवन्त्येकीभवन्ति । तत्तस्य संभाव्यते । चौर्यादिकमिदमस्य नासीदिदानीं कथमित्यादि ॥ ३६ ॥ अल्पच्छदो वस्त्रविहीनः ॥ दारिद्र्येति । भवन्तमेव शोचामि विनष्टदेहे मयि क यास्यसि । अस्मत्सदृक् सार्वदिकः सुहृत्कोपि नास्तीत्यर्थः । अर्थपरत्वात्पुंलिङ्गत्वम् । यद्वा । तमेवं भवमुत्पत्तिं स्मरामि इति कुव्याख्या[1] । सुहृन्मित्रम् । अतो हेतोः मयि विनष्टदेहे क यास्यसि त्वामिति मे चारुदत्तस्य चिन्ता ॥ ३८ ॥ ( P. 44, L. 391 ) सहाइणी द्वितीया । अपावुदं अपावृतम् । अभ्युपपत्तिरनुग्रहः । स्थगितद्वारेणापसरणाभावात्पिण्डीभूतेनैकीभूतेन प्रतिबन्धकत्वात् । अपावृते पक्षद्वारे सति निर्वापितो दीपः । भाव गृहीता प्राप्ता । तत इतः एकप्रदेशे भूत्वैकान्ते हे भाव तिष्ठ । भट्टारक चेटोहम् । इदो भाव इत्यादिभ्रमव्युदासाय सुनिश्चयं[2] करोति । युवां द्वावपि तावदेकान्ते तिष्ठतः ( तम् ) । संपदं सांप्रतम् ॥ ( P. 47, L. 414) अन्धआले । इत्याद्यनुष्टुप् । 'अन्धकारे पलायमाना माल्यगन्धेन सूचिता । केशवृन्दे परामृष्टा चाणक्येनेव द्रौपदी' ॥ ३९ ॥ कुलपुत्रानुसारिणी चारुदत्तानुरक्ता । सेवितव्येष्वलंकार्येषु ॥ एशाशि वाशू इति । इन्द्रवज्रायाः श्लोकः । 'एषासि बाला शिरसि केशेषु बालेषु शिरोरुहेषु गृहीता । आक्रोश विक्रोश लप । अधिचण्डमत्युच्चैः । हिशब्द एव वा । चण्डं महादेवं च । शम्भुं शिवं शंकरमीश्वरं वा' ॥ ४१ ॥ आर्यमिश्रैर्मान्यैर्व्यवसितमारब्धम् । भाव यथा दधिभक्तलुब्धायां मार्जारिकायां स्वरपरिवृत्तिर्भवति तथैतया स्वरपरिवृत्तिः कृता । 'दहिसर'[3] इति पाठे 'छलि'[4] इति पाठेपि शरो दध्न उपरिभागः । (P. 49, L. 431) ही ही भो इति परितोषे । पशुबन्धोपनोतस्येव छागस्य हृदयं कुरुकुरायति[5] अत्यर्थं प्रकम्पते[6] दीपः । जुत्तं णेदं नः काकौ । सदृशं नेदम् ।

---

१ काकुव्याख्या (?) E F G. २ स्वनिश्चयं करोति E F G. ३ दधिहिसशर B. marg. C. ४ छलित इति पाठे C; दहिसा° E. ५ कुरकुरायति B C. ६ कंपते E F G.

संपदं सांप्रतम्। (P. 50, L. 440) किं एसो। किं प्रश्ने। किमेष बलात्कारः। मा तावत्। स्वकीयगृहसमीपे कुक्कुरोपि बलीयान् भवति। ता ततः। एतेनास्मादृशजनभागधेयचक्रेण दण्डकाष्ठेन दुष्टस्येव। कृतद्वेषस्य वैरिणो महादुष्टस्यानिग्रहेपि ममापराधो भवत्येवेत्यर्थः पाठान्तरे चोड[3] कर्णनासिकाशून्यः। दुट्ठस्स विअ दुष्टस्येव। आचरितद्वेषस्य वैरिणः। यद्वा। दुष्टश्चानपराधोपि[4] निग्रहं प्राप्नोत्येवेत्यर्थः। शुष्कवंशप्रहारेण। शुष्कोतिदीर्घत्वप्रतिपादनाय। एवंभूतस्य शिरः कुट्यते। तथा तव शिरः कुट्टिष्यामि। (P. 51, L. 451) राजश्यालकेत्यादि। संस्थानक इति तस्य नाम। उपमर्दो निग्रहः॥ मा दुग्गदो इति। गाथा। 'मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दै (दैं G) वस्य दुर्गतो नाम। नाम संभावनायाम्। चारित्र्येण विहीन[5] आढ्योपि दुर्गतो दरिद्रो भवति' ॥ ४३ ॥ महाब्राह्मणश्चाण्डालः॥ सकामेति। सकामा स्वाधीनयौवनेतिपदाभ्यामस्या धारणं नापराधाय। सा वेश्या तिष्ठति न[6] त्वियमित्याशयः। शीलवञ्चना दुश्चरितसंभावना ॥ ४४ ॥ सत्पुरुषोत्तिष्ठोत्तिष्ठ। अजानता मया त्वमुपालब्धः। सांप्रतं पुनर्जानन्ननुनयामि। आदरविषयतानुनयः। (P. 52, L. 469) समयः क्रियाबन्धः। समयमेवाह। यदीमामिति। गुणशस्त्रैः। गुणा एव शस्त्राणि तैः॥ ४५॥ किंनिमित्तं पुनर्भाव एतस्य दुष्टबटुकस्य पादयोर्निपतितः। किविणं कृपणम्। के तस्य गुणा यस्य गृहं प्रविश्याशितव्यं भोक्तव्यमपि नास्ति। यद्वा। अन्हिअदव्वं पि आह्निकद्रव्यमद्य भोक्तव्यमपीत्यर्थः। प्रणयैः प्रार्थनाभिः। स्नेहप्रकारैः समयोचितदानैरित्यर्थ इत्येके॥ के शे शूले इत्यादि (?)॥ श्लोकौ वैश्वदेव्या[7] वृत्तेन ॥ 'कः स गर्भदासो जन्मदास्याः पुत्रः शूरो विक्रान्तः पाण्डवः श्वेतकेतुः। पुत्रो राधायाः रावण इन्द्रदत्तः आहो उषायास्तेन रामेण जातोश्वत्थामा धर्मपुत्रो जटायुः' ॥ ४७॥ [8]व्यर्थं विरुद्धार्थम्। श्वेतकेतुरौद्दालकिर्दुर्वाससो मातुलः।

---

१ om. E F G. २ किं किं A. ३ चोड E. F G. ४ °श्चानपराधोपि E G, °ध F. ५ परिहीन. B. C. ६ नत्वियमित्या° E. F. G. ७ श्लोकौ वैश्व° E. F. G. ८ इदं व्यर्थम् marg. G.

ऋषिविशेषः। इन्द्रदत्तो बृहत्कथाप्रलम्भके[१] स्वंशे संस्थितः। (P. 54, L. 493)। सज्जनानाम्। कुटुम्बी उपजीव्यः ॥ ४८ ॥ अगृहीत्वा वसन्तसेनाम्। नष्टादर्शनं गता। यदि[२] चेदर्थे। चेन्नास्ति तदा गम्यताम्। गतः खलु भावोभावमदर्शनम्। (P. 56, L. 512) काकपदशी[३]शमस्तका इति। द्यूताद्यकार्यप्रवृत्तौ काकपदाकारा ये धूर्तास्तेषां शीर्षप्राया ग्रामण्यस्तेषां मस्तकभूत धूर्तचक्रवर्तिनामपि प्रधानभूत। एतेनाचारकुलयोराक्षेपः कृतः। केचित्तु काकपदशीर्ष काकपदवत्पक्षधा शीर्षं मस्तकं यस्य। पक्षेन्युपलक्षणम्। अष्टकपालः। तेनालक्षणयुक्तमस्तक इत्यर्थ[४] इत्याहुः। अत्र च मते शीशमस्तका इति शकारवाणीत्वेन पुनरुक्तत्वं न दोषः। दुष्ट वटो अरे रो(रु)दिहि। (P. 58, L. 529) अरे दुष्ट बटुक भणिष्यसिं मम वचनेन तं दरिद्रचारुदत्तकमेषा ससुवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव वसन्तसेनानाम्नी गणिकादारिका कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्ता अस्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा। ततोधिकरणे व्यवहारं विना इत्यनेन व्यवहारनाम्नो नवमाङ्कस्य सूचनम्। लघु शीघ्रम्। णिज्जादमाणाह निर्यातयतः। तव मयानुबद्धा प्रीतिर्भविष्यति। अणिज्जादमाणाह अनिर्यातयतः। मरणान्तिकं वैरं भविष्यति। अपि च प्रेक्षस्व ॥ ( P. 59, L. 538 )। कश्चालुका। इत्यादि। उपजातिच्छन्दसा। ‘कूश्माण्डी गोमयलिप्तवृन्ता[५] शाकं च शुष्कंपलिरं प्रचुरप्रलेहं मांसम्। तलिदं[६] स्नेहपक्के देशीत्येके। ‘भंडिदे’[७] इति पाठे भटित्रमित्यर्थः। ‘शूलाकृतं भाटित्रं च’ इत्यमरः। भक्तं च हैमन्तिकरात्रिसिद्धं लीणेअ ऋ (?) णं च वैरं च न भवति। पूदी पूतिः ॥५१॥ चिरंतनत्वेन प्रशिथिलस्वकार्यम्। शोस्तकं शोभनम्। लस्त[८] (corr क्खल) कं सकपटम्। भणिष्यसि। तथा भणिष्यसि। भण(णे?)सीति भविष्यद्वर्त्तमानयोस्तुल्यं रूपम्। यथाह स्वाधीनाया[९] ( Corr. Marg. आत्मकीयायाम्)। (P.60,L.543) प्रासादस्य वालाग्रलक्षितायाम्। कपोत-

१ प्रलंभके B; प्रलमके E F G. २. यदिति G. ३. °सीशमस्त° G. ४. om. F G. ५ वृन्ताक F. ६ तलिधडस्नेह B; तलिधडत्तम. ७. भडिदे ... इत्यमरः marg A. om. B. C. E. F G. ८ लखकं B C, लखकं E; लक्खकं F G. ९ स्वाधीनायामात्मकीयायाम् marg. D.

पालिकायां विटङ्के। वाल्याग्रं मत्तवारणम्। कपोतपालिका उपरिगृहश्रे- णीति दक्षिणापथे लोकोक्तिरियमिति प्राचीनटीका। नन्द्यामुपविष्ट: शृणोमि। अन्यथा यदि भणसि तदा कपाटप्रविष्टं कपित्थगुलिकामिव मस्तकं तव शब्दविशेषयुक्तं तथा भक्षयिष्यामि लोकोक्त्या मड्डम- डायिष्यामीति व्याख्यायते। कपित्थं फलविशेष:। लम्बकं शोभनकं द्वयमपि शोभनार्थमिति प्राचीनटीका। (P. 61, L. 547) हं चेट गतो भावो विट:। सत्यम्। तत: शीघ्रमपक्र(क्रा)माव:। गृह्णातु भट्टारकोसिम्। तवैव हस्ते तिष्ठतु। एषोस्मि:। भट्टारक(:)स्वामिक: गृहात्विनं भट्टारको- सिम्॥ निर्वल्कलमित्यादि। उपजातिच्छन्दसा॥ 'निर्वल्कलं मलकपेशिवण्णम्। पेशी त्वक्। मूलकत्वग्वर्णमालोहितमित्यर्थ:। स्कन्धेन गृहीत्वा च। कोशीषु सुप्तम्। अल्पार्थे स्त्रीत्वम्। कोशाव- स्थितमित्यर्थ:। कुक्कुरै: कक्कुरीभिश्च शब्दायमानो यथा शृगाल- स्तथा स्वगृहं प्रयामि'॥५२॥ विदूषकरदनिके कुक्कुरकुक्कुरीस्थाने। न खलु ते परिभवश्चारुदत्तस्य निवेदयितव्य:। दौर्गत्यपीडितस्य द्विगुणतरा पीडा भविष्यति। (P. 63, L. 564) एवं ण्णेदमिति एवार्थे। रोहसेनश्चारुदत्तसुत:। अम्हहे विस्मये। अनुदासीनं साभिलापम्। तदनुरूपचेष्टायोगात्। अभ्यन्तरगमनस्याभागिनी। वेश्यात्वात्। भाग्यं शोभनं कर्म॥५३॥ दूषिता परपुरुषत्वात्। कामदे- वायतनोद्यानात्प्रभृति। सीदति कर्तव्यासामर्थ्यात्प्रव्यक्तो न भवति। एषेत्यादि पूर्वोक्तमेव भणति। (P. 66, L. 602) अलंकृतास्मीति। ममान्यत्राभिलाषो नास्तीत्यर्थ:। देवतेवोपस्थानं यस्या: सा॥ प्रविश गृहमिति। पुष्पिताग्रा वृत्तम्॥५६॥ अनुचितभूमिसमारोहणं प- क्षद्वारेणावासप्रवेशादिकम्। करभ उष्ट्रशिशु:। प्रणय इत्यनेन संभोगप्रार्थना कटाक्षिता। ईदृशेनागृहीतसंभोगोपकरणादिना। पापा अकार्यकारिण:। भग्नत्वाद्रक्षकाभावाच्चायोग्यता। (P. 69, L 628) आर्य पुरुषेषु न्यासा निक्षिप्यन्ते न पुनर्गेहेषु। अत्यन्तप्रश्रयवत्वादनु-

---

१ भणति E F G. २ मडमडाविशकमिति B C. ३ लम्बकम B C. ४ कुकुर- om. E F G. ५ °प्राछन्द. E G. ६ °नानुगृहीत°B C.

ग्रहः । चोरेहिं हरिज्जउत्ति संधिच्छेदनाम्नस्तृतीयाङ्कस्य सूचनम् । सकं स्वकम् । चतुष्पथोपनीत इवोपहारो देवताबलिरूपः खाद्यमानो विपत्स्ये । ही आश्चर्यं । यत एव निर्धनोत एवापमानितः । स्नेहो-नुरागस्तैलं च । संवुत्ता संवृत्ताः । निस्नेहा निस्तैलाश्च । ( P. 72, L. 654 ) भवत्विन्युपसंहारोक्तिः । यस्य हिमांशोस्तमोवृन्दमध्ये शुभ्रा रश्मयः पतन्ति । यथा प्रभूतजले कर्दमे दुग्धधाराः ॥५७॥

इति महोपाध्यायश्रीपृथ्वीधरकृतमृच्छकटिकाविवृतौ न्यासार्पणो नाम प्रथमोऽङ्कः ॥ १ ॥

# द्वितीयोऽङ्कः।

अत्तया वसन्तसेनामात्रा। अज्जुआसआसं वसन्तसेनासकाशम्। संदेशेन प्रयोजनार्थम्। हञ्जे नीचे। अज्जुआ वसन्तसेनैव। (P. 75, L. 7) 'हञ्जे तदो तदो' इत्युन्माददशारीत्युपन्यासः। न्हादा स्नाता। पूअं पूजाम्। पुरोभाइदा पुरोभागिता। दोषदर्शिता। 'दोषैकदृक् पुरोभागी' इत्यमरः। दोषशून्यत्वेनेति भावः(?)। भअवं भगवान्। 'भअवदा' इत्यपि पाठः। भगवता हरेण। स्वीकृतोनुगृहीतो वा। ण सेविदुं। कामोपभोगरासिकास्मि। न द्रव्यार्थिनीत्यर्थः। पूजनीयाश्च ये भवन्ति तेषां विलासवैमुख्यं सदेति भावः। उपारूढसिणेहं विवृद्धस्नेहम्। (P. 78, L. 38) भट्टिदारिआए ईश्वरसुतया। सुहिदा सुखयुक्ता(?)। अभ्युपपन्ना स्वीकृता। सुगृहीतनामधेयो दातृत्वेन। दरिद्रपुरुषदत्तमना अवंचनीया भवति अर्थानभिलाषित्वात्। अतिस्व (?) श्चारुदत्तो ब्राह्मणोनध्यापकत्वेन विलासी। अन्यश्व(श्च) श्रोत्रियः। तर्कतन्त्रप्रवीणः पूजनीयो न काम्यो विलासवैमुख्यादित्याशयः। महुअरीओ इति। मधु कुर्वन्ति सेवन्ते मत्ता इत्यर्थः। (P. 82, L. 68) भट्टेति द्यूतकरस्य संबोधनम्। दशसुवर्णकृते। लुद्धु रुद्धः। पपन्ठीणु प्रपलायितः। दश सुवर्णा लभ्या यस्य पार्श्वे स द्यूतकरः प्रपलायितः। अतो गृहाण धारय। तिष्ठ तिष्ठ। दूरादेव दृष्टोसि। सभ्यानुद्दिश्य ब्रूते। लब्ध इति पाठे दशसुवर्णानां द्यूतकरो लब्धः। प्रपलायित इत्यर्थः (?)। हीमाणहे इति विस्मये। कष्ट एष द्यूतकरभावः॥

नवबन्धनेत्यादि। चित्रजातिः। गद्दहीति गर्दभीनामधेय्या (या)। हा कष्टं ताडितोस्मि। गद्दहीति वराटिकानाम। गर्दभीशक्तिके आर्थी इति प्रसिद्धद्यूतके कपर्दकनामधेये। 'नवबन्धनान्मुक्तयेव गर्दभ्या पशुविशेषेण ताडितोस्मि गर्दभ्या। ताडनस्वभावा सा यतः। अक्रूरा-

१ अज्जआसआसं E. २ पूअणीओ पूजनीयाश्च E. F. G. ३ मुक्ता ? E G. ४ अतिस्व E F G. ५ महु अरीति B C D. ६ लुद्धः E F. ७ once E F G. ८ नामधेया C; °नां मध्येय्यहो कष्टं F. ९ आर्थी इति B D; अर्था इति C; अर्थी इति E. F G. १० स्वभावात्पापतः or यायतः? F.

जेन कर्णेन विमुक्तये[1] च (व) शक्त्या अस्त्रविशेषेण । घटोत्कचो भ्र- मसुत इव ताडितोस्मि शक्त्या ॥ १ ॥ लेक्खं[2] इत्यादि । गाथा ॥ लेखकव्यापृत[3]हृदयं सभिकं दृष्ट्वा झटिति प्रभ्रष्टः । इदानीं मार्गनिपतितः कं नु खलु शरणं प्रपद्ये । कं नु खल्विति विमर्षे ॥ २ ॥ तद्यावदेतौ सभिकद्यूतकरौ मामन्यतोन्विष्यतस्तावत् । हके अहम् । विपरीत- पादाभ्यामेतच्छून्यं देवकुलं प्रविश्य देवीभविष्यामि । देवीति च्व्यन्तम् ॥ जइ गच्छसीत्यादि । आर्या ।'यदि गच्छसि पातालमिन्द्रं शरणं च सांप्रतं यासि । सभिकं वर्जयित्वैकं रुद्रोपि न रक्षितुं शक्नोति' ॥ ३ ॥ कहिं कहिमित्यादि । रुचिरा वृत्तम् । 'कुत्र कुत्र सुसभिकविप्रलम्भक पलायसे भयपरिवेपमानाङ्गक । पदे पदे समविषमं यथा स्यादेवं स्खलन्कुलं यशश्चातिकृष्णं कुर्वन्' ॥ ४ ॥ भट्टा[4] भट्टेत्यन्योन्यसंबोधनम् । अरे विप्रतीपपाद(?) शून्यं देवकुलम् । प्रयोजनाभावेन नात्र मानुष इति भावः । धूर्तौ[5] द्यूतकरो विप्रती[पा]भ्यां पादाभ्यां देवकुलं प्रविष्ट इत्येके । धूर्तो द्यूतकरो विप्रतीपपादाभ्यां देवकुलं प्रविष्टः । ततोनुसरावः । संज्ञापनं प्रतिमायाम् । द्यूतकरणं यया सा कत्ता[6] । काउ(ड) इति प्र- सिद्धः । नान्दी[7] पूरा इति प्रसिद्धे द्यूत इत्यन्ये (?) । (P. 87, L. 103) 'कत्ताशब्दो निर्नाणकस्य निर्धनस्य दहति[8] पातयति (?) हृदयं मनुष्यस्य । ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य' ॥ ५ ॥ असा-[9] त्विका इत्यर्थः(?) । 'जानामि न क्रीडिष्यामि सुमेरुशिखरपतनसंनिभं द्यूतम् । सुखविनाशकमित्यर्थः । तथापि खलु कोकिलमधुरः[10] कत्ताशब्दो मनो हरति' ॥ ६ ॥ मम पाठ (ढ?) इति आर्थी द्यूतकरोक्तिविशेषः । गोहे पुरुषः[11] मनुष्यः । प्रेदण्डा लुतदण्डकः । उभे अपि देशी । अधुमा प्रयच्छ । दास्यामि । सिल पडदि शिरः पतति । भ्रमतीत्यर्थः । इति भूमौ निपत्य स्थितः । एष त्वं खलु द्यूतमण्डल्या बद्धः । ही कष्टम् । अस्माभिः[12] सर्वः समय उल्लङ्घ्यते । एषोस्माकं द्यूतकराणामलङ्घ्यः

---

१ मुक्तयेव E F G. २ लेक्खव इत्या° B. ३ °व्यावृत° B D.-४ om: E F G. ५ विप्रतीप .....द्यूतकरो om. F. ६ कन्ता A. ७ नान्दपूरी B. C. D. ८ हरति EFG. ९ असा...र्थः om; Written and struck off G. १० मकर. B C D. ११ पुरुषः om· B C EF, १२ अस्माभि...लङ्घ्यते om. E G.

[illegible] । (P. 90, 123) गंण्डं गण्डां लम्बक इति पूर्वटीका । एवं करोमि । मुञ्च । अर्धं सभिकेन मुक्तम । अर्धं द्यूनकरेण । उभाभ्यां गोशिरेव (?) मुक्तः । इति मुक्तदेयन्वाद्यामीति प्रनं । भट्टारका इति मध्यस्थान् संबोधयति । सांप्रतमेव एक्काह । अद्धे अर्धेन । गण्डे कडे । एकस्य सभिकस्यार्धे गण्डः कृतः । द्यूनकरापेक्षितार्धेन द्यूनकरेच (त्र?) लम्बकः । अपराह अद्धेण मुक्के इति अपरस्य द्यूतकरस्यार्धेन मुक्तोऽस्मि । तच्च सभिकेनैवोपेक्षितम् । अत्र माथुरोहं निपुणः । एत्थ तुए अत्र त्वया । धु (धू) तिज्ञामि धुर्ते (र्ये) प्रतार्ये । पंदण्डा लुमदण्डक । कुत इति लाभोपायप्रदने । पिंदरु विक्किणिय पयच्छ । पितरं विक्रीय प्रयच्छ । मांतरु विक्कीणिज्जु मातरं विक्रीय । कलेध कुरुत । णेध नयत । [ मं ] माम् । राजमार्गम । पसरु प्रसर्प । (P. 94, L. 150) किंणध क्रीणीध्वम् । सहिअस्स हत्थादो सभिकस्य पार्श्वादित्यर्थः । असौ तव कर्मकरो भविष्यामि । हा आर्यचारुदत्तस्य विभवे विघटिते तस्मिन्निर्धने एष एतादृशावस्थो वर्ते मन्दभाग्यः । अतिशयमार्यस्य दर्शको राजेव । ईश्वरेणापि पुरुषेण सेव्यते ॥ (P. 96, L. 168) द्रव्यं लब्धमित्यादि । विद्युन्माला ॥ त्रेता तीया इति प्रसिद्धः । पांवरो दूआ इति ख्यातः । नर्दितो नान्दी इति प्रसिद्धः । कटेन 'पूरा' इति प्रसिद्धेन ॥ ९ ॥ पावरः पूरा, कटो दूआ इति केचित् । तपस्वी वराकः । खलीक्रियते भर्त्स्यते । (P. 98, L. 187) अन्तरमन्तरामिति जनसंमर्दे प्रवेशायावकाशप्रार्थना । उद्ध (द्धः?) षेणः संघर्षणः । किणः घाटिरिति (?) प्रसिद्धः । यच्छरैर्लगुणैण्यत्ते (?) । 'कुक्कुरैश्चर्व्यते' इति पाठो व्यक्त एव । न ध्यायतो न निःशेपयतं (?) । अत्यायतो विपुलशरीरः । तथा कोमलस्य । व्यायतो कृतश्रम इति पूर्वटीका ॥ १२ ॥ कल्लवत्तं प्रातर्भोजनम् । तत्साधनमेतद्द्रव्यमिदमित्यर्थः । जीर्णपटसंवृतः । कटकरणे प्रयच्छामि तत्रार्थः (?) । कल्यवत्तं

---

१ om. E. २ मे समुञ्च B C D. ३ राशिख F. ४ मुक्काह B C D; एक्काहे E F G. ५ °स्यार्द्धे B, स्याद्धे C D. ६ स्याधेतः B C D. ७ धूर्तैः F. ८ पितुन B C D. ९ मानतु B; मातनु C D. १० किणेध C. ११ वर्त्तते B C D. १२ °मार्यस्य B C D F. १३ कार· पीवरो D. १४ द्वेया इति° B C D. १५ नादी B; corr नक्की° F G. १६ यत्वरैर्लगुडैः राम्पत्ते E; यत्वरैर्लगुडै रायन्ते (?) F G, यच्छरैर्लगुणैरापत्ते B C D. १७ कुक्कुरैर्दृश्यते B C D. १८ एवानध्यायतो न विशेषयता B C D; १९ ध्यायते. २० यत E F C. २१ स्या व्यायतो B C D, कोमलस्यान्यायतो E F G.

कल्यं प्रातः वेत्त वर्तय (?) । कटत्वेन देहीत्यर्थः । अत एव चाधुन्न देहि । तत्किमिति गृहादानयनादिनापि विनयः संभाव्यते इत्याशयः । भट्टा इति संबोधनोक्तिः । ममैष विभवस्तदेवं सति किम् । (P. 101, L. 212) अथ न जयति । अथायं न दृढं भद्रं जयतु । पाठान्तरे तु 'अह अथ' । भद्रकं जन्यम्(?) । एवमहं पंत्तुआ धुत्तिज्जामि प्रतार्ये । अहमपि नाम मथुराभवो द्यूतकारः । द्यूतं मिथ्यादर्शयामि । अन्यस्मै च नाहं बिभेमि । अहमेवान्यं निर्भयः प्रतारयामि न तु मामन्य इत्यर्थः । तेन त्वमपि धूर्तोसीति भावः । (P. 102, L. 222) गोसाविआ वेश्या । एतत्कस्याप्यपावृतं (त) पक्षद्वारं गेहम् । ढकेहि पिधेहि । तुंलिदमाकलितम् ॥ (P. 105, L. 259) जे अत्तबलमित्यादि । वैतालीयं छन्दः । 'यो (य) आत्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः । तस्य स्खलनं न जायते न च कान्तारगतो विपद्यते' ॥ १४ ॥ तुलितं कलितमिति 'वा पँदान्त' इति बिन्दोर्लघुत्वम् । वसन्तसेनाया अशक्यविषये व्यापार उक्तः । गोहे मनुष्यः । तस्य दुरात्मनो मया मुष्टिप्रहारेण नासा भग्ना । तदागच्छतु चिरमेतदनुसरावः । एहि तावत् । अदो अतः । निष्क्रम्यान्यत्र गमिष्यति । तदुपरोधेनैव गृह्णीमः । गृहपतेर्दारकोहं संवाहकस्य शरीरयन्त्र (मर्द) कस्य व्यापारमुपजीवामि । स्वगृहपर्यटकानां भिक्षुकादीनां वचनं श्रुत्वा । भिक्षुकादीनां [उ]च(व)किदं उपकृतं विस्मरति (?) । किं बहुना पलन्तेन प्रलपितेन । (P.109, L. 288) मनोरहाहुत्तस्स मनोरथाभिमुखस्य । (P.109, L. 293) अनुक्रोशः करुणा । अनाचक्खिदे अनाख्यातम् । अपेयेषु तडागेषु बहुतरमुदकं भवति । काकूक्त्या । अपि तु नैवेत्यर्थः ॥ (P. 112, L. 315) शंकालधणे इत्यादि । मात्रासमकम् । प्रतिपादं 'चलाचले, धणे, से' इत्येकारत्रयं लघु । च्छन्दोनुरोधात् । 'सत्कारधनः खलु सज्जनः कस्य च न भवति चलाचलं धनम् । यः पूजितुमपि न जानाति स पूजाविशेषं जानाति' । अपि तु न जानात्येव ॥ १५ ॥ ततस्तेनार्येण । सवृत्तिः कृतवर्तनः ।

१ वत्तेय वर्तय B C D. २ नयः E. ३ न संभाव्यत° B; ण संभा° C D. ४ तत्र एवं B C D. ५ अयन E. ६ दृढं भद्र जन्यपतु (?) B C D. ७ पंतुआ E F G. ८ °न्यान्निर्भय E F G. ९ आकलिदमाक° E. १० पदांत F. ११ गोहो E F G. १२ रुधिरमेतदनुसराव E F G. १३ सक्काल F. १४ धनाञ्ज म B C D.

परिचारकः कृतः। चारित्रमात्रावशेषे धनशून्ये तस्मिन्। चासपादप- विसंष्ठुलतया पक्षिणो भ्राम्यन्ति। दिनान्ते भूतप्राय इत्यर्थः (?)। आर्यः संवाहकः। आहिण्डन्ति अभिनीयन्ते। दुवारमूले द्वारमूले। सुहवा सुभगा॥ (P. 114, L. 337) कस्स तुहमित्यादि। गाथा। 'मनो- हरमव्यक्तं यद्वचनं तन्मन्मनवचनम्'। हे ननुमध्ये कस्य त्वं मन्मनवच- नं (?) दुर्विनीतेन रतौ दृष्टेनाधरेण जल्पसि। आलोकयन्ती कटाक्षेण' ॥ १६॥ मम विभवो नास्ति। अन्यत्र गच्छ। धारयति। यस्य पार्श्वलभ्य- मीदृशं तं संवाहकं कुलपुत्रम्। भूतो गण्डः सुविधानमित्यर्थः। 'खण्ड' इति मरहट्टप्रसिद्धः। तत्पुनरपि द्यूते रमामहे। (P. 116, L. 352) इयं कला संवाहक(न)रूपा। शुश्रूषितपूर्वः। शक्रश्रमणके शाक्यभिक्षुः। एतान्यक्षराणि॥ (P. 118, L. 364) जूदेणेत्यादि। गाथा। द्यूतेन तत्कृतं मम सर्वस्माज्जनाद्भिद्यते यत् यद्भिद्यतः सर्वस्य जन इति प्राचीनटीका। इदानीं द्यूतदेयदशसुवर्णदेयकाले। प्रकटशीर्षो नरेन्द्रमार्गेण विहरिष्यामि ॥ १७॥ भयविरहादित्याशयः। विअलेदि विचरति। 'विकलयति' इत्येके। गरुअं गुरुत्वम्। महावि- भवशालित्वात्। यथाव्यवसितं परिव्रज्यानुष्ठानरूपम्। उद्वेगकारणम्। अज्जुअं वसन्तसेनाम्। मेन्थं महामात्रं हस्त्यारोहम्॥ (P. 120, L. 386) अवणेध इत्यादि। गाथाद्वयम्। वृक्षप्रासादम्। नेपुरं वलयाश्च विघटन्ते। (P. 121, L. 392) समासादितो प्राप्तः। परिव्राजकः संवाहक एव भिक्षुकरूपः। हस्तिकरशीकरसिच्यमानमुत्था- पितं प्रेक्ष्य। विसंष्ठुलशृङ्खलाकलापमिति क्रियाविशेषणम्। अण्ण- पिण्डउट्टेण अन्नपिण्डपुष्टेन द्यूतलेखकमुत्प्राथ्य। आपणात् क्रयवि- क्रयस्थानात्। तत्र विक्रयार्थं लोहदण्डोप्यस्ति॥ (P. 122, L. 405) आहणिउणेत्यादि। गाथा। स परिव्राजकः। पल्हत्था पर्यस्ता। परामुसिअ परामृष्य। आं सोहदीति। मया साहसार्जितेन न युक्तमे- तदिति भावः। (P. 125, L. 430) प्रवृत्तो वलितः॥

[ इति ] द्यूतकरसंवाहको नाम द्वितीयोऽङ्कः॥ २॥

---

१ दिनान्त्यान्तो B C F G, दिनान्ता E. २ तुहमि° E. ३ वचन E F G. ४ नूपुर E. ५ °पुट्टेण F G.

# तृतीयोऽङ्कः।

सुअणेत्यादि। वैतालीयम्। 'सुअणे' इत्येकारो लघुः। छन्दोनुरोधात्। 'सुजनः खलु भृत्यानुकम्पकः स्वामी निर्धनोपि शोभते। पिशुनः पुनर्द्रव्यगर्वितो दुष्कलः (?) खलु परिणामदारुणः'। खलु यस्मादर्थे। दुष्करो यतः अत. परिणामदारुणः॥१॥ (P. 128,L. 8) शाररापलक्के इत्यादि। शक्करी जातिः। पलक्को लम्पटः। 'पडकला' इति महाराष्ट्रभाषा। 'सस्यलम्पटो बलीवर्दो न शक्यो वारयितुम्। अन्यप्रसक्तकलत्रं न शक्यं वारयितुम्। द्यूतप्रसक्तमनुष्यो न शक्यो वारयितुम्। योपि स्वाभाविको दोष सोपीत्यर्थान्न शक्यो वारयितुम्'। अतिरिक्तदातृत्वं दोष एवेति। तं च मम स्वामी न त्यजतीति भाव ॥३॥ गन्धव्वं गान्धर्वम्। गीतमित्यर्थ। (P 131, L. 26) सक्कअं सस्कृतम्। काअलिं काकलीम्। णस्सा नासिकाविवररज्जूः[2]। सुघुआअदीति अव्यक्तशब्दानुकरणम्। सुक्खेति। शुष्कसुमनोदामवेष्टितत्वेन चिरकालजपप्रवणत्वमुक्तम्। (P. 132, L. 34) भावान्वितं रत्यास्पदम्। ललितं लालित्याख्यधर्मविशेषशालि। पिहिता योषिदेव गायति न पुरुष इति भासते ॥ ५ ॥ आपणमर्ध्यरथ्याविभागेषु कुक्कुरा अपि सुप्ताः। (P. 134, L. 45) ओदरदि अवतरति। अस्ताभिमुखं यातीत्यर्थः। विषाणाग्रं दन्ताग्रम् ॥ ७ ॥ (L. 53) संयोगः समवधानम्। देमि ददामि। कवाटमुद्धाट्य। अवकाशं बिभरामीत्यर्थः (?)। (P.137, L. 85) प्रकाशनारी वेश्या ॥ ८ ॥ (P. 138, L. 94) मनुष्यसत्त्वं नृसत्ताम्। मनुष्यमिति यावत् ॥ ९ ॥ कर्ममार्गं संधिम्। यथा जीर्णतनु. सर्प. मुच्यमानकञ्चुको गच्छति ॥ १० ॥ पटलं वृन्दं रोगभेदश्च। तारा नक्षत्रमक्ष्णः कनीनिका च। (P.140, L. 113) मार्ग इति। अश्वत्थाम्ना पाण्डवपक्षपातिनो राजानो रात्रौ संधिं कृत्वा मारिताः। सौप्तिकाभिति भावे[3] (?)। क्रान्तादर्ध्यामोदित्वात्[4] (?)॥१२॥ संधिः किंभूतो दर्शनान्तरगतः। दर्शनान्तरं कनकशक्त्यादिमतविशेषः। तदनुगतस्तद्बोधितः। करालो विपरीतः। स्त्रीजनदर्शने हि तदनिष्टाचरणं वीरजनगर्हितं संभाव्येत ॥१३॥ स्कन्द-

१ om. E F G. २ °रज्जुः E F G. ३ °भाव. F, भाव E. G. ४ °ध्यात्मादि° F G; ध्यामादि ? E.

पुत्राणां स्कन्दोपजीविनिचौराचार्याणाम॥ (P. 142. L. 126) पद्मव्याकोशमित्यादि । वैश्वदेवीछन्दः । चापी विस्तीर्णमिति द्वे नामनी । यदुक्तवान् । 'इष्टकाभित्तौ च संस्कारवशेन पद्मव्याकोशादयः सप्त संज्ञा इति'। भास्करो मण्डलाकारः । अन्येपि नामसदृशा सप्त मन्तव्याः ॥१४॥ कौशलं चेति । चकारोप्यर्थे ॥१५॥ कार्तिकेयः सगुरुः । ब्रह्मण्यदेवादयोपरगुरव इत्याहुः । सर्वे कार्तिकेयविशेषणमित्यन्ये। 'ब्रह्मण्याय देवायेति' क्वचित्पाठः । कर्मसु संधिरचनासु । भूषणस्थानानीति कटकादेर्भावकीलकसुश्लिष्टसंयोजनाभेदान् ॥ १७ ॥ प्रतीक्ष्येत्यत्र प्रतीच्छि (च्छ्ये)-ति पाठो दृश्यते । तच्च प्रतीच्छा ग्रहणं [ तत् ] कृत्वेत्यत्रार्थे णिच्समासे क्त्वाप्रत्यये ल्यपि रूपम् । (P. 145, L. 165) लक्ष्यसुप्त व्याजसुप्तम् । तुल्यमविषममन्तरमन्तरालो यथा स्यादेवं वर्तते । कपटसुप्तस्य विषमान्तरालवत्त्वात् ॥ ( P. 146.L. 179 ) स्फारीभवति । अभिमन्त्रितो बीजविशेषो धनसहितभूतले क्षिप्तो बहुलीभवतीति प्रसिद्धिः । लघुत्वाच्चपलत्वात् । गोकारेति । कामयतेर्लिङ् सामान्ये अचो यति (?) पश्चात्स्त्रीत्वं विवक्षणीयम । गोब्राह्मणसहिताया भङ्गं त्वं करोषि यदीदं न गृह्णासीति शपथार्थः । ( P. 148, L. 197) प्रणयोभ्यर्थना । विक्किणिदपण्णो विअ विक्रीतपण्य इव॥ (P. 149, L. 211) अनिर्वेदितेति । प्रकरणनिश्चयो निर्वेदः । तदभावोनिर्वेदः । पदशब्द इत्यनेन रदनिकाप्रवेशसूचनम् । (L. 217) ग्रहणयुक्तमालुञ्चनं ग्रहालुञ्चनम् । श्वा कुक्कुरः[3] । माया शाम्बरी विद्या । रूपमाकारम्[4] । वेशोलङ्कारादियोजना ॥ २१ ॥ डुडुम (ण्ड?) डुसः । वृक इति हुण्डार इति प्रसिद्धः ॥ २२ ॥ (P. 151, L. 235) कप्पिअ कृत्वा निर्मायेत्यर्थः । उपरिभागे तलभागे च विनिपातिता आकृष्टा इष्टका यत्र । 'उपरितनेति' पाठे उपरितनी उपरिभवा। शेषं तुल्यम् ॥२३॥ णिक्कामिस्सं निष्कामयिष्यामि । वहिः करिष्यामीति यावत् । अवहि (ह) दं अपहृतम् । (P. 154, L. 277) दिष्ट्या हर्षे । ण अवहदं नापहृतम् । निष्प्रतापा निष्पौरुषा ॥२५॥ (P.155, L. 290) प्रणयोर्थित्वम् ॥२६॥ अवरक्खणजणस्स अपगतं रक्षणं यस्यासौ अपरक्षणो वेश्याजनः । अवहदो अपहृतः । (P. 158, L. 320) पौरत्थिमाहिमुहो पौरस्त्याभिमुखः । पूर्वदिगवलम्बितमुख इत्यर्थः । रअणसहिं रत्न-

१ सर्वे E F G. २ निश्चयो om: F. ३ कुकुरः E G. ४ माकारो F, °रे E: ५ डउसह. ६ उपरितनाभवाः E G. ७ णिक्कमिस्सं E F G. ८ निष्पौरुषा B.

(अरण्य) पष्टिकाभिधं वनम् । अरण्य(रत्न)पष्टिका नाम ग्रीष्मक्षत्रमित्यन्ये ॥ (P. 161, L. 350) चतुःसमुद्रेति । चतुःसमुद्राणां रत्नाकराणां सारभूता । सन्तालम्ब्येत्याद्यपूर्वोपि सोहणसवनविभवेति । कुलीनत्वादेरित्यर्थः । सत्त्वमाशयं महत्त्वम् ॥

इति पृथ्वीधराचार्यविरचितायां मृच्छकटिकाविवृतौ संधिच्छेदो नाम तृतीयोऽङ्कः ॥ ३ ॥

१ सत्त्वादेरित्यर्थः E. २ इति......विवृतौ om. E F G. ३ °यः E F G.

## चतुर्थोऽङ्कः ।

तस्मैत्यादि । यत्र चक्षुर्हृदये लग्ने तत्र कारणं किं पर्यालोच्यते । अतिप्रियनामासींवलं विलक्षेनेत्याशयः ।( P. 166, L. 25, 26 ) गहिदावगुण्ठनं गृहीतावगुण्ठनम् । विण्णविस्सं विज्ञापयिष्यामि । (P. 168, L. 50) त्वरितगतिः कश्चित । संभ्रान्तं माम् ॥२॥ (P. 170, L. 80) अभुजिस्सं अप्रेष्याम् । स्वाधीनामिति यावत् । मम छन्दो ममाभिलाषः । ( P. 172, L. 100) साहसं चौर्यरूपम् । साहसे जीवितानपेक्षकर्मणि । ण हु ते इति । न खल्वाचरितमपि त्वाचरितमेव । शूद्रस्वर्णहरणे न तथा पातकमिति विप्रेत्यादिनोक्तम् ॥६॥ तव वसन्तसेनायाः । अनुचितः प्रकाशो यस्य सोऽप्रकाशः । अनेनास्माकं दण्ड इत्यनेन न प्रकाशयितव्य इत्यर्थः । अयं जनो वसन्तसेनास्वरूपः । अपिरनुनये। अयं जनः शर्विलक इति प्राचीनटीका । तन्न बुद्ध्यते । वेश्यात्वे वसन्तसेनाया निभृतं संगतमित्यभिप्रायः । ( P. 177, L. 145 ) मन्मथेन विपन्नो गुणो यस्य । ईदृशोपि देहं रक्षामि । मदनिकार्थचौर्याहरणेन हीनगुणत्वं व्यक्तम् । सुमनसः पुष्पवृत्तेरेकवचनान्ततापि । यथा । 'अप्रत्याख्येये दधितुमनसौ' इति । सुमना मालतीत्येके । वचनभेदेपि सतामनुद्वेजकत्वाद्दुष्टत्वमुपमायाः ॥१४॥ अथ निजपतित्वेनैवमाह । (P. 181, L. 196) तुमं जेवेति । इदानीं ब्राह्मणभार्यात्वेनेति भावः । अत्तणकेरअं चीति चारुदत्तस्यानुचरत्वं स्वीकृत्य ब्रूते । (P. 188, L. 273 ) यत्र ते इति । हेतावाधारविवक्षया 'यत्रेति' सप्तमी । कर्तुः शेषविवक्षया 'ते' इति षष्ठी । (P. 189, L. 288) उदवसितं गृहम् । (P. 191, L. 309) बन्धुलेन । अत्रैवाङ्के पञ्चमप्रकोष्ठके 'परगृहललिता' इत्यादि बन्धुललक्षणं करिष्यते । (P. 201, L. 386) ही ही भो इति विस्मये । तपश्चरणक्लेशविनिर्जितेन स्वाधीनेन । पुष्पकेण विमानविशेषेण । अकृततपश्चरणक्लेशः । नरयुक्ता नारी नरनारी । सौद्वाहिका यस्य । पुष्पकमपि सा नरनारी सीतारूपा उद्वाहनीया यस्येदृशम् । शब्दच्छलेन साम्यम् । (P. 194, L. 327) अहो वसन्तसेनाभवनद्वारस्य सश्रीकता । किंभूतस्य । सलिलसिक्तमा-

---

१ लग्ने E F G. २ मावलं° F; सा om. G. ३ शेषत्व° E F G. ४ शेषषष्ठी F. ५ वर्धनेनात्रैवाङ्के BC. ६ वर्धितलक्षणम् BC. ७ सानुद्वाहिका BC. ८ सा om. E-F-G. ९ उद्वाहिनीया E.

र्जितकृतहरितोपलेपनस्य। कृतगोमयोपलेपनस्येत्यर्थात्। तथा । विविधसुगन्धिकुसुमोपहारचित्रलिखितभूमिभागस्य । गगनतलावलोकनकौतूहलदूरोन्नामितशीर्षस्य। उच्छ्रायप्रकर्षपरमेतत्। दोलायमानावलम्बितैरावणहस्तभ्रमागतमल्लीदामगुणालंकृतस्य। समुच्छ्रितदन्तिदन्ततोरणावभासितस्य। महारत्नोपरागोपशोभिना पवनबलान्दोलनाललच्चञ्चलाग्रहस्तेन इत एहीति व्याहरतेव मां सौभाग्यपताकानिवहेनोपशोभितस्य। तोरणधरणस्तम्भवेदिकानिक्षिप्तसमुल्लसद्धरितचूतपल्लवललामस्फटिकमङ्गलकलशाभिरामोभयपार्श्वस्य। महासुरवक्षस्तटदुर्भेद्यवज्ररत्ननिरन्तरप्रतिबद्धकनककपाटस्य। दुर्गतजनमनोरथायासकरस्य। यत्सत्यं मध्यस्थस्यापि जनस्य। बलाद्दृष्टिमाकारयति आह्वयति। प्रथम[प्र]कोष्ठवर्णनम्। (P. 194, L. 332) शशिशङ्खमृणालस्वच्छाभाः विनिहितचूर्णमुष्टिपाण्डुराः विविधरत्नप्रतिबद्धकाञ्चनसोपानशोभिताः प्रासादपङ्क्तयः अवलम्बितमुक्ताफलदामभिः स्फटिकवातायनमुखचन्द्रैर्निर्ध्यायन्तीवोज्जयिनीम्। श्रोत्रिय इव सुखोपविष्टो निद्राति दौवारिकः। सदध्ना कलमोदनेन प्रलोभिता न भक्षयन्ति वायसा बलिं सुधासवर्णतया (P. 195, L. 341, 42)। इहापि द्वितीयप्रकोष्ठके पर्यन्तोपनीतयवसबुसकवलसुपुष्टाः तैलाभ्यक्तविषाणाः बद्धाः प्रवहणबलीवर्दाः। अयमपरोऽवमानित इव कुलीनो दीर्घं निःश्वसिति सैरिभो महिषः। इतोपनीतयुद्धस्य मल्लस्येव मृद्यते ग्रीवा मेषस्य। इतोपरेषामश्वानां क्के(के?)शकल्पना क्रियते। अयमपरः पाटच्चर इव चौर इव दृढबद्धो मन्दुरायां शाखामृगः। इतोपि भक्ततैलघृतमिश्रपिण्डं ग्राह्यते हस्ती हस्तिपकपुरुषैः। (P. 197, L. 352) [इहापि] तृतीये प्रकोष्ठे। इमानि तावत्कुलपुत्रजनोपवेशननिमित्तं विरचितान्यासनानि। अर्धपठितस्तिष्ठति पुस्तकः। कामशास्त्रस्येत्यर्थात्। स्वाधीनमणिमयसारीसहितं पाशकपीठम्। 'सरितमिति' पाठे प्रसारितमित्यर्थः। स्वाधीनमकृत्रिममिति प्राचीनटीका। इमे चापरे मदनसंधिविग्रहचतुरा विविधवर्णिकावलितं चित्रफलकं वहमाना इतस्ततः परिभ्रमन्ति गणिका वृद्धविटाः। (P. 198, L. 361) इहापि चतुर्थे प्रकोष्ठे। युवतिकरताडिता जलधरा इव गंभीरधीरं नदन्ति मुरजाः। क्षीणपुण्या इव गगनात्तारा इव निपतन्ति कांस्यतालाः।

१ धारण E F G. २ कृत D E. ३ पाण्डरा F G. ४ बद्धा E F G. ५ पटच्चर इव B. ६ शारी B. ७ सिद्धि° B E. ८ वृद्धविटा BC. ९ लालिता. B.

वैदग्ध्यवादनादेव निपातः। मधुकराभिरुतमिव मधुरं वाद्यते वंशः। इयमपरा प्रणयकुपिता कामिनीवाङ्कारोपिता कररुहपरामर्शेन सार्यते वीणा। इमा अपराः कुसुमरसमत्ता इव मधुकर्योऽतिमधुरं प्रगीताः। गणिकादारिका वेश्याविशेषा इति गुणपताकायामुक्तम्। नाट्यते नाट्यम्। पठ्यते सशृङ्गारः। अवलम्बिता गवाक्षेषु वातं गृह्णन्ति सलिलगर्गर्यः। एतच्च जनानां पानार्थम्। (P. 199, L. 373) इहापि पञ्चमप्रकोष्ठे। अयमपि दरिद्रजनलोभोत्पादनकरो हिङ्गुतैलगन्ध आसमन्तात्प्रसरति। विविधसुरभिधूमोद्गारैर्नित्यं सन्ताप्यमानं निःश्वसितीव महानसं द्वारमुखैः। अधिकं रोमाञ्चयति संसाध्यमानबहुविधभक्ष्यभोजनगन्धः। भोजनं करणे ल्युटि व्यञ्जनादिवचनः। अयमपरः पटच्चरमिव जीर्णवस्त्रमिव छेद्यपट्टमनेकाधारशोणिताभ्यामुपहतत्वात्। रूपिदारओ। रूपशब्दः पशुवचनः। तद्योगाद्रूपी खट्टिकः। तस्य दारकः पुत्रः। यद्वा। रूपी रूपसंघः तस्य दारकश्छेदकः। खट्टिक एव। यत्र मांसं छिद्यते तं पदं धावति प्रक्षालयति। बहुविधाहारविकारमुपसाधयति सूपकारः। बध्यन्ते मोदकाः। पच्यन्ते पूपकाः। अपीदानीमहं भोक्तुं पादोदकं लप्स्ये। 'वधितमिति' पाठे व्यञ्जनादिसामग्र्योपचितं वधितकमिति पूर्वटीका। इतश्च गन्धर्वाप्सरोगणैरिव विविधालङ्कारशोभितैर्गणिकाजनैर्बन्धुलैश्च यत्सत्यं स्वर्गायत इदं गृहम्। ( P. 201, L. 387 ) गुणेष्ववाच्याः। अनभिधानीयगुणा इत्यर्थः। 'ऋणोष्विति' पाठे ऋणेष्ववाच्या ऋणमेवावसीय सर्वैरभिमुह्यामह इत्यर्थः। ललामो विलसामः। लल विलासे भौमादिकः (?)। अनुप्रासानुरोधेनानयोरैक्यम्। 'ललामा इति' पाठे श्रेष्ठा इत्यर्थः। (L. 392) इहापि षष्ठे प्रकोष्ठके। अयं तावत्सुवर्णरत्नानां कर्मतोरणानि। नीले रत्ने वस्तुविशेषे निक्षिप्तानि प्रसारितानीन्द्रायुधस्थानकमिव दर्शयन्ति। नीलरत्नेष्वा(?)रोपितानीन्द्रायुधमिव दृश्यन्त इत्याशयः। वैडूर्यमौक्तिक-प्रवालक-पुष्पराग-नीलक-कर्केतर-पद्मराग प्रभृतीन् रत्नविशेषानन्योन्यं विचारयन्ति शिल्पिनः। प्रवालक-कर्केतरौ मणिविशेषौ। बध्यन्ते जातरूपैः सुवर्णैर्माणिक्यानि। घट्यन्ते सुवर्णालंकाराः।

---

१ कर्कये. BC. २ °न्ताद्यति E F G. ३ पट्ट जीर्ण° BC ४ °संह BC. ५ शट्टिक BC. ६ स्वर्गायते FG. ७ °यालिङ्गना BC. ८ लड विलासे E F G. ९ लोत्र प्रामादिकः EFG. १० नानारत्नेभ्योपि B C D; नीलरत्नेष्वारोपितानि E F G. ११ °नीलकर्केत्तर° E. १२ °प्रभृतयो B C D. १३ पुलकक° B C D.

लोहितसूत्रैर्ग्रथ्यन्ते मौक्तिकाभरणानि । घृष्यन्ते वैडूर्याणि[1] । छिद्यन्ते शङ्खाः । शाणे घृष्यन्ते प्रवालानि । शोष्यन्ते ओल्लविदमवतारिता आर्द्रिता वा । कुङ्कुमप्रस्तराः । प्रस्तरः कुङ्कुमाधार(श्च)मिपुट इत्याहुः । सोलीआदि[2] आर्द्रीक्रियते । सल्लज्जअं[3] कस्तूरिका । शल्यवद्वेधकत्वात् । आज्यमिव मृगमदत्वात् (?) । विसालीअदि विशेषेण घृष्यते चन्दनरसः । संयोज्यन्ते गन्धयुक्तयः । दीयन्ते गणिकाकामुकयोः सकर्पूरं ताम्बूलम् । अवलोक्यते सकटाक्षम् । प्रवर्तते हासः । पीयतेनवरतं सशृङ्गारं मदिरा । इमेन्येवज्ञातपुत्रदारावित्ता मनुष्या आसवकरकेणापीतमदिरा गणिकाजनैर्ये मुक्तास्तवाटं(or मुक्तावाटं A)[4]पिबन्ति । अयमर्थः । मद्यपानभाण्डेनापीतमद्या अनादृतानिजपरिवारास्त्यक्तान्यकर्तव्या अत एव[5] तत्रैवात्यन्तमवस्थाना गणिकाजनैर्ये[6] मुक्ता निःसारिता इत्युक्तं ते पुरुषा वारंवारं पुनः पुनर्मद्यमेव पिबन्ति । मदिराया अवारितसत्रत्वमुक्तम् । (P. 204, L. 409) इह सप्तमे प्रकोष्ठे । सुश्लिष्टायां विहङ्गपाल्यां कपोतपालिकायां सुखनिषण्णा[न्य]न्योन्यचुम्बनपराणि सुखमनुभवन्ति पारावतमिथुनानि । दधिभक्तपूरितोदरो ब्राह्मण इव सूक्तं पठति पञ्जरशुकः । ऋक्समुदायः सूक्तम् । शोभनोक्तं च यथा स्यादेवम् । इयमपरा संमानलब्धप्रसरेव गृहदासी अधिकं कुर(रु)कुरायते मदनसारिका । अनेकफलरसास्वादप्रहृष्टकण्ठा कुम्भदासीव कूजति परपुष्टा कोकिला । आलम्बिता । नागदन्तेषु गृहभित्तिस्थदारुविशेषेषु । नागदन्तका[7] इति प्रकृतौ कः । पञ्जरपरम्पराः । योध्यन्ते लावकाः । आलाप्यन्ते कपिञ्जला गौरास्तित्तिरयः[8] । प्रेष्यन्ते पञ्जरकपोताः । योद्धुमित्यर्थात् । इतस्ततो विविधमणिविचित्रित इव सहचरि(री)सहितो नृत्यन् रविकिरणसन्तप्त[9] (सं) पक्षोत्क्षेपैर्वीजयतीव प्रासादं गृहमयूरः । इतः पिण्डीकृताश्चन्द्रकिरणा इव पदगतिं शिक्षमाणानि कामिनीनां पश्चात्परिभ्रमन्ति राजहंसमिथुनानि । एतेपरे वृद्धमहत्तं[10] (changed to ल्ल) का इव इतस्ततः परिभ्रमन्ति गृहसारसाः । प्रसारणकं दत्तं गणिकाभिर्नानापक्षिसमूहे यत्सत्यं[11] खल्वेतन्नन्दनवनमिव मे गणिकागृहं प्रतिभाति । (P. 206, L. 427) [इहापि] अष्टमे प्रकोष्ठे[12] । भवति क एष पट्टप्रच्छदप्रावृतः अधिकतरमत्यद्भुतं[13] पुनरुक्तालंकारालंकृतः । अङ्ग-

१ धीरं वैडूर्यं B C D, °दूर्यां F G. २ साउली° F, साउलीअदि G. ३ सेल्लज्जुअं B C D ४ युक्तास्तवाटं E, युक्ता° वाढं F G. ५ एव च F. ६ गणिकाभि B C D. ७ नागदन्ता इति E F G. ८ तित्तरय FG. ९ संतापित F. १० त्त Changed to ल्ल A. ११ यत्तु F G १२ प्रकोष्ठक F G. १३ °मत्यद्भुतं F G.

भङ्गैः परिस्खलद्भिरन्तः परिभ्रमन्ति। मा दाव॥ (L. 452) जइ वि इत्यार्या। चिन्तितार्थामिव अर्थस्य इति पाठान्तरे इ (इ ... om: ? A) त्यर्थः। अनभिगम्यानाभिगमनीयः। एषा पुनः का पुण्यप्रावारकप्रावृता(पुण्यपट) इति प्रश्नकः। उपानद्युगलनिक्षिप्ततैलाचिक्कणाभ्यां पादाभ्यां लक्षिता। अहो अस्याः कपर्दिकडाकिन्या उद्रविस्तारः। 'करट' इति पाठे अशौचाभ्यवहरणप्रयुक्तकरटब्राह्मणवत्। नान्किमिनीमां प्रवेश्य महादेवमिव द्वारशोभा इह गृहे निर्मिता। अन्यथा अनेन द्वारेणास्या गृहे न प्रवेशः स्यादित्याशयः। एषा खल्वस्माकमत्ता चातुर्थिकेन ज्वरविशेषेण पठ्यते। तेनेदृशी दृश्येत्युक्तम्। सपरिहासम्। भगवन् चातुर्थ(र्थि)क। एतेनोपकारेण मामपि ब्राह्मणमवलोकय। शूणपीणजठरो। शूण उच्छूनः। पीनो महाभोगः। मुद्दो मृतः॥ (P. 208, L. 457) सीधुसुरासवेत्यादि। उपजातिविशेषः। सीधुसुरासवा मदिराविशेषाः। एतावदवस्थापन्नपीनत्वरूपां(पा) गतां(ता) यदि म्रियते अत्र मृता भवन्ति शृगालानां पर्याप्तिका सौहित्यम्। युष्माकमपि जानपात्रा वहन्ति। उद्वाहकेनार्जितविभवस्यैव परमित्यानिस्तारो भवतीति प्रष्टुरभिप्रायः (?)। प्रेमनिर्मलजले मदनसमुद्रे स्तनानितम्बजघनान्येव यानपात्राणि। (P. 210, L. 460) सर्वर्तुकुसुमप्रस्तारा शोभितानेकपार्श्वा ...निर्मिता युवतिजघनप्रमाणा पट्टदोला लघुकीकरोतीव नन्दनवनस्य सश्रीकत्वम्॥ एसो असोअ इत्यादि। गाथा। वच्छो वृक्षः। नवरुधिरपङ्कचर्चिका चर्चा यस्य सः॥ २०॥ ओणामेहि अवनमय। से अस्याः। माधि क्तयोगे षष्ठी(?)। दासस्य हसितमिति यथा। अध इं अथ किम्। अनुमतौ। वांअवत्तहारी वार्त्तिकः। सोण्डीरदाए शौण्डीर्येणाश्रयमहत्त्वेन। भोदी भवती। भणामीत्यनन्तरं सहासनाटकसूत्रं परितमिव तथा कृत्वा बोद्धव्यम्(?)।

[इति] मदनिकाप्रदानः (नो नाम चतुर्थोऽङ्कः) ॥ ४ ॥

---

१ °न्तरेत्यर्थः F; न्तरेर्थे G. २ अशपाखायइरण B C D. ३ प्रवृत्त G. ४ करट F G. ५ द्वारं महादेवमिव F G. ६ द्वारमहादेवमिव F G ७ परिहासः G. ८ चातुर्थिक E F G. ९. एकावस्था° E F; एकावस्थां पीनत्वरूपा G १० वुच्छो E F G. ११ अवत्तहारी F G. १२ बोद्धव्यं भावावितम्(?) B. १३ मदनिकाप्रदानं नाम चतुर्थोऽङ्कः E G, प्रदानो नाम F.

# पञ्चमोऽङ्कः ।

पूर्वाङ्के अङ्कावतारणैव सूचितस्य प्रकरणनायकस्य प्रवेशः । तथा चोक्तम् । 'प्रवेशश्चूलिका चैव तथा विष्कम्भकोपरः । अङ्कावतारोऽङ्कमुखमथो ( र्थो ) पक्षेपपञ्चकम् ' इति । प्रवेशयतीति प्रवेशः[1] । पचाद्यच् । प्रवेशको ण्वुलन्त उच्यते । अधमपात्रप्रयोज्यः प्रवेशकः । तदुक्तम् । ' भृत्यवर्गकथावच्च कर्तव्यस्तु प्रवेशकः । अन्तर्जवनिकासंस्थैस्तथा मागधवन्दिभिः ॥ अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका । 'विष्कभस्तु द्विधा सोयं शुद्धः संकीर्ण एव च ॥ शुद्धो मध्यमपात्रेण संकीर्णो मध्यमाधमैः' इति । (P. 216, L. 4) अपाकृतं निरस्तम् । अनभिनन्दितमिति यावत् ॥१॥ बलाकशब्दः पुल्लिङ्गोऽप्येषां[2] संमतः । खं आकाशम् ॥ २ ॥ निषक्तं द्रावितम् ॥४॥ प्रडीनैरिति कर्मणि क्तः ( ? ) । व्याविद्धैर्भ्रान्तैः । चक्रं समूहः । पत्रस्य छेदः खण्डनं विचलं[3] (?) यत्र चित्रे तत्पत्रछेद्यं चित्रम् । तदिव गगनं शोभते ॥५॥ धृतराष्ट्रवक्त्रसदृशं नष्टचन्द्रार्कत्वात् । वा इवार्थे । शिखी मयूरः । वनादिति ल्यब्लोपे कर्मणि पञ्चमी । वनं प्राप्येत्यर्थः ॥६॥ ( P. 219, L. 31 ) अणेकहा सिणेहाणुसारं भणिअ अनेकधा स्नेहानुसारं भणित्वा । पाठान्तरेणैव (?) कथा । कथं हारितमलंकारभाण्डमित्यादिका । नैव कथानुसारः कृतोऽस्या रत्नावल्या भाव (?) इत्यादिकः । मल्लको भाजनविशेषः । तन्मा तावत् । यद्भोजनाद्यर्थमपि न तथा भणितोऽहम् । यदभुक्तपीतस्य चौरैरेवापहृतस्याल्पर ू ह ःस्य । (P. 222, L. 58) यत्सखीजनदत्तसंज्ञया पटान्तापवारितं मुख कृत्वा । गणिका हस्ती कायस्थो भिक्षुः चाटौ (टो) क्षुद्रविषयभोक्ता । रासभो गर्दभः ।(P. 225, L. 83) अवेध माणहेति । अवेत अवगच्छत मानवा इत्यर्थः ॥ जधाजधेति । उपेन्द्रवज्रया श्लोकः । 'यथा यथा वर्षत्यभ्रखण्डं तथा तथा तिम्मति आर्द्रीभवति पृष्ठचर्म । यथा यथा लगति शीतवातस्तथा तथा वेपते मे हृदयम्' ॥१०॥ वंशं वादयामीति । उपजातिविशेषः । पादत्रयं जगतीजात्या । चतुर्थः पादः शालिन्या । 'वंशं वादयामि सप्तच्छेदं सुशब्दं वीणां वादयामि सप्ततन्त्रीं नदन्तीम् । गीतं गायामि गर्दभस्यानुरूपं को मे तुल्यस्तुम्बुरुर्नारदो वा' ॥ ११ ॥ (P. 226, L. 98) अस्य बटु-

---

१ प्रवेशकः F. २ °पि येषां° F. ३ विवलं E F G.

कस्य संज्ञां ददामि । कपित्थं फलविशेषः । वृद्धविम्बोदुं याम् इति याव-त्(?) । (Erased with the marks = &c. A) । (P. 229, L. 123) इन्द्रमहकामुकः काकः । 'इन्द्रमह काकपादओ विअ' इति पाठो व्यक्तार्थ एव । पण्हं प्रश्नम् । मुण्डे मस्तके । गोड्डं पादम् ॥ (P. 235, L. 184) अपद्मेति । एषा वसन्तसेनेति सन्निकर्षेण । लज्जाप्रणयिनीत्यत्र संधा-वचामित्यादिनाकारलोपः ॥१२॥ कण्ठं मुञ्चतीति । 'कण्ठो गले गलध्वाने' इति कोशः । लावण्ययोगवान् पूर्वं कण्ठं मुञ्चतीत्युत्प्रेक्षा (?) ॥१४॥ मूढे इति वसन्तसेनायाः साक्षेपसंबोधनम् । पयोधरा मेघः, स्तनौ च ॥१५॥ (P. 237, L. 208) अयमपर इति शत्रोः पुनर्मध्य इत्यर्थात् । करसमृद्धं अंशु-राजग्राह्यभागौ ॥१७॥ प्रोषितभर्तृशब्दो 'न नित्यः समासान्त इति' न भूत (?) श्चेति कन् ॥१८॥ कक्षा मध्यबन्धनम् । गां भूमिम् ॥ २१ ॥ षष्पाङ्कुराः संलग्नशरतुल्याः ॥२२॥ मेचकाः श्यामाः । गगनं जलरूपेण द्रवीभूतं पतति ॥२५॥ त्रिदशपतिशस्त्रस्य वज्रस्य । रतिप्रसक्ता संभोगेन प्रसक्ता । प्रियेण काङ्क्षितायाः । (P. 242, L. 268) यद्वदिति । हे शक्र यथा अहल्याया अप्राप्तिदुःखेन गौतमोऽस्मीत्यसत्यं ब्रूषे । हे निरपेक्ष परपीडानभिज्ञ तन्ममापि दुःखं जानीहीत्यर्थात् । ततः किं कर्तुमुचितमित्या-ह । निवार्यतामिति । प्रियभवनगमनं प्रति विरोधकत्वादित्याशयः ॥३०॥ आटोपो दम्भः । कूटं माया । कपटं छद्म । अनृतं मृषाभाषणम् । निह्नवप्राकट्य-भेदात्कूटकपटयोर्भेदः । एतेषां जन्मभूमेः । वेश्यापणो वेश्याव्यवहारः व्यञ्ज-केत्यर्थः (?) । दाक्षिण्यपण्यप्रधानम् । निष्क्रयो मूल्यम् ॥३६॥ (P. 247, L. 315) अपि पारयिष्यामि । ओआविओ आचार्य उपदेष्टा । प्रेष्यतां भुज्यताम् । किं तु स एव व्याजो विडम्बनास्माकं प्रस्तुत आरब्धा ॥३९॥ अथवा सत्यमेवेदम् । अथवेति प्रकरणात्प्रतीयते । बम्हणेन ब्राह्मणेन । यद्दृष्टेति । यतः यस्माद् दृष्टपूर्वस्य जनस्य संगमेन उत्तरलतया वर्त-मानस्वदैन्यविस्मृतानां विस्मरणवतां पुंसाम् । मत्संबन्धिनी सालचेषिका (Erased A) । (P. 255, ) L. 397 तुलयितुमिति । लुब्धालुब्ध-जिज्ञासया । श(ब)हुमूल्याया रत्नावल्या अल्पमूल्यसुवर्णभाण्डस्य कृते यो-

१ कुकुरः B C D. २ ° ना एकार° BC. ३ साक्षेपं E F G. ४ पुनरमध्य E F G. ५ नहृतश्चोति E G. ६ शष्पा° F. ७ आआविविओ B C D; आआरिओ E F G. ८ ब्राह्मण्येन G. ९ स्नानचोलिका F, चोलिका Corr. शाटिकां G. १० °मूल्यस्य E F.

गान् । (P. 257. L. 11) वर्णकं विलेपनम् ॥४६॥ अस्माद्विधदुर्लभया । दरिद्रस्य वेश्याप्राप्त्यसंभवात् ॥ ४८ ॥ स्तनभेष्वित्यादि । प्रदत्तोछन्दना । विनानं चन्द्रातपः ॥ ५० ॥ विद्युदित्यार्या । अनया च वेतालादिभयानकरूपवर्णनम् ॥५१॥ संगीतवीणा इव धाराः ॥५२॥

[इति] दुर्दिनो नाम [ पञ्चमोऽङ्कः ] ॥ ५ ॥

---

१ नेति F. २ नाम पञ्चमोऽङ्कः F G.

## षष्ठोऽङ्कः।

(P. 265, L. 14) जोण्हि योजय। अपय्यत्तं अपर्याप्तम्। यदृच्छा-संबन्धि (?)। (P. 270, L. 56) एत्तेन मृच्छकटेन प्रातिवेशिकगृहपति-दारकसंबन्धिन्या सुवर्णशकटिकया क्रीडितम्। तेन प्रतिवेशिगृहपतिदार-केण। (P. 271, L. 66) तत्र पितुर्गुणार्जिता दासी। अलिअं अली-कम्। असत्यामिति यावत्। बालहस्ताभ्यां सुवर्णपूर्णां शकटिकां दारकं च स्वयं गृहीत्वा निष्क्रान्ता। उद्घाटितं पक्षद्वारकम्। (P. 273, L. 85) ही ही इत्यकस्मात्स्मरणविपर्ययेण। जाणन्थलके यानास्तरणकम्। णस्सा-कटुआ नासिकारज्वा दुःसहाः। अतोऽतिक्रमः संभाव्यते। 'णस्साकटु-आ' इत्यपि पाठः। तत्र नस्याकटुका इत्यर्थः। वइल्ला बलीवर्दाः। (P. 275, L. 104) दूतं (द्यूतं) पलायित इव द्यूतकरः। सभिकामिव मां दृष्ट्वा प्रच्छादितशरीरः। एतेनार्यकस्य पलायनमुपक्षिप्तम्। गामेल्लुआ ग्राम्याः। चक्कपरिवट्टिअं चक्रपरिवृत्तिम्। शूले शूरः। एआई तवस्सी एकाकी वराकः। एशे आअदे इति। चक्रपरिवृत्तिदानार्थम्। एतेन श-कारस्य कांकनेकमुक्तम् (?)। अत्रापि च शकारलाघवमुक्तमित्यवधे-यम्। (P. 278, L. 125) भालिके भ(भा)रवत्। संभारमित्यर्थः। मन्वर्थीयः। (L. 127) गोणा गावः। न सकलानि यानि पदानि मश्वा-नि (?)। पत्रं प्रवहणादि। गुम्मष्ठाणेसु। लेपो जीमूतरथस्थाने (?)। परिब्भट्टो बन्धनभेदादपगतः। ता गेण्हध ततो धारयत। व्यसनं महा(?) र्णवम्। संघाताजण्यत्वेन (?) संबन्धेन ॥१॥ गम्यो नृपः। सर्वेषां सेव्यो हि राजेत्यर्थः ॥२॥ सुवृत्तं सुव्यक्तम् (Erased A)। (P. 282, L. 176). जय जयमान च(व?)न्दनक मङ्गलक पुष्पोटक मुखाः ॥ किं अच्छधे-त्यादि। गाथा। 'कि तिष्ठत विश्वस्ता योसौ गोपालदारको बद्धः। भित्वा समं व्रजति नरपतिहृदयं च बन्धनं चापि' ॥५॥ पुरत्थिमे पूर्वस्मिन्। वीरक-विशल्य-भीमाङ्गद-दण्डकाल-दण्डशूर-प्रमुखाः। आअच्छधे-

१ अपर्यत्तं B E F G. २ एशुन्यशकटेन B C D, एतेन बालकेन E F G. ३ गृहपतिना B C D. ४ जाणत्थलकं E F. ५ °कटुआ E F G. ६ द्रुत E F G. ७ कातरत्वमुक्तम् E F G. ८ सभार इत्यर्थः B C. ९ गन्धानि E. गच्छामि F G. १० ठाणेसु° F G. ११ लीपोजीमूतरथस्थने° E. °रथस्थाने F G १२ महार्णवः E F G. १३ सुवत्तम् E F G. १४ °पुष्पोद्भट° E F G. १५ मुख्याः E F.

ति । गाथापञ्चकम् । 'आगच्छत विश्वस्तास्त्वरितं यतत लघु कुरुत । लक्ष्मीर्येन न राज्ञः प्रभवति गोत्रान्तरं गन्तुम् ' ॥६॥ 'उद्यानेषु सभासु च मार्गे नगर्यां आपणे घोषे । तत्तद्योजयत त्वरिता शङ्का वा जायते यत्र' ॥ ७॥ 'अरे रे वीरक किं किं दर्शयसि ब्रवीहि (ब्रूहि?) तावद्विश्वस्तम् । मोचयित्वा बन्धनकं कोसौ गोपालकं हरति' ॥८॥ 'कस्याष्टमो दिनकरः कस्य चतुर्थश्च वर्त्तते चन्द्रः । षष्ठश्च भार्गवग्रहो भूमिसुतः पञ्चमः कस्य' ॥९॥ 'भण कस्य जन्मषष्ठो जीवो नवमस्तथैव सूरसुतः । जीवति चन्दनके कोसौ गोपालकं हरति' ॥१०॥ 'एकत्रासौ चाष्टमस्थे भवन्ति(ति)सुवच(द)ना अद्यापि चलिते (न स्वापि वनिता') इत्यष्टमरविफलम् ॥ 'चतुर्थेविश्वासः शिशुलिन (खरिणि) भुजङ्गेन सदृशः' । इति [चतुर्थ] चन्द्रफलम् ॥ 'षष्ठो भृगुः परिभवस (om.) रोग [ता] पदः' ॥ [इति षष्ठभार्गवफलम्] । 'विष(रिपु)गदकोपभयानि पञ्चमे तनयकृताश्च शुचो महीसुते । श्रियु(ति)रपि नांद्य(स्य)भवेच्चिरं (च्चिरं भवेत्) स्थिरा शिरसि कपेरिव मालती कृता' ॥ [इति पञ्चममङ्गलफलम्] जीवे जन्मन्यपश(ग)तधनाः (नधीः) स्थानभ्रंशो (भ्रष्टो) बहुकलहया[यु]तः ॥ [इति जन्मस्थगुरुफलम्] ॥ न सश्रि(खी)वदनं तिलकोज्ज्वलं न वच(चच)नं शिखिकोकिलतो(ना)दितम् । हरिणप्लुतसारस (शाववि) चित्रितं वि (रि) पुण (ग)ते मनसः मु (सु)खदं गुरौ' ॥ षष्ठजीवफलम् । 'गच्छन्त्यध्वानं सप्तमे वा (चा)ष्टमे वा(च) हीनः स्त्रीपुत्रैः सूर्यजे दीनचेष्टः । तद्वद्धर्मस्थे वैरकृ(द्ध)द्रोगवत्या (वन्ध)ध(र्धे)र्मोस्तु(प्यु)च्छिद्येत (om.) द्वैर्थदथी (वैश्वदेवी) क्रियाभ्यः (द्यः)' । इति नवमशनैश्चरफलम् ॥ [बृहत्संहिता अ० १०४ श्लो० ६-४४] भट चन्दनकेति संबोधनम् । अवहरइ इत्यादि । गाथा । 'अव(प)हरति कोपि त्वरितं चन्दनक शपे तव हृदयेन । यथार्धोदितदिनकरे गोपालदारकः खण्डितः' ॥११॥ उद्घारिओ इत्यादि । गाथा । 'उद्घाटितं प्रवहणं व्रजति मध्येन राजमार्गस्य । एवं तावद्विचारयत कस्य कुत्र वा प्रवसितं प्रवहणमिति' ॥१२॥ यच्छ-

---

१ लघू° B C. २ नगर्यां E F G. ३ त्वरिताः E F. ४ कदर्थयसि E F G. ५ सुवचनम् E F G. ६ गदभूयभ° E F G. ७ अय om. F G. ८ स्थिता E F G. ९ न युवतीवदनं E F G.

न्दसमिति यथाच्छन्दं यथेष्टमित्यर्थः । (Era-ed A) (P. 289, L. 225) को तमित्यादि। गाथाद्वयम। 'कस्त्वं गुणारविन्दं शीलमृगाङ्कं जनो न जानाति। आपन्नदुःखस्य मोक्षो यतस्त्वं चतुःसागरसारकं रत्नम्' ॥१३॥ 'द्वावेव पूजनीयाविह नगर्यां तिलकभूताश्च (भूतौ च)। आर्या वसन्तसेना धर्मनिधिश्चारुदत्तश्च' ॥१४॥ जानामीति | गाथा।'जानामि चारुदत्तं वसन्तसेनां च जानामि। प्राप्ते च राजकार्ये पितरमप्यहं न जानामि' ॥ प्राप्ते चेति चकारः पुनरर्थे ॥ १५ ॥ (P. 290, L. 236) तत्तिल्लश्चिन्तापरः। राज्ञा पालकनाम्ना । व्यायच्छनः परपरिभवं कुर्वतः ॥१७॥ पत्तरहो पत्ररथः पक्षी। शाकुनिकस्य पक्षिणां हन्तुः। त्वथनिमित्तजस्य चन्दनकस्य सापराधस्य चारभत्तेन कृता (?)। यदाह (P. 292, L. 259) प्राणप्रदस्येति ॥ भीदाभयेति | गाथा । 'भीताभयप्रदानं ददतः परोपकाररसिकस्य । यदि भवति भवतु नाशस्तथापि खलु लोके गुण एव' ॥ १९ ॥ संभमेत्यादि | गाथा। 'संभ्रमघर्घरकण्ठो यस्त्वं जातोसि यत्त्वया भणितम्। दृष्टो मयेह आर्यः पुनरपि वसन्तसेनेति' ॥२०॥ खप-खत्ति-कड-कडट्ठोविल-कर्णाट-कर्ण-प्रावरण-द्राविड-चोल-चीन-वर्बर-विराट-वाल्हीक-लाट-खेर-खान-मुख-मधुघात-प्रभृतीनाम्॥ (P. 296, L. 296) जाणन्तो वीत्यादि | गाथा। 'जानन्नपि खलु जातिं भणामि तव च न शीलाविभवेन। तिष्ठतु ममैव मनसि किं च कपित्थेन भग्नेन'॥२१॥ संज्ञां ददातीति जात्युचितक्रियाभिनयः ॥ (L. 302) सिण्णेत्यादि | गाथा। 'शीर्णशिलातलहस्तः पुरुषाणां कूर्चग्रन्थिसंस्थापनः। कर्तरीव्यापृतहस्तस्त्वमपि सेनापतिर्जातः' ॥ २२ ॥ जादी तुज्झ विसुद्धेति | गाथा। 'जातिस्तव विशुद्धा माता भेरी पितापि ते पटहः। दुर्मुष करटकभ्राता त्वमपि सेनापतिर्जातः' ॥ २३ ॥ करटको वाद्यविशेषः ॥ (P. 300, L. 337) एत्थ इत्यादि। गाथा । 'अत्र मया विज्ञता परिज्ञापिता। चन्दनकं च स्मरिष्यसि। न भणाम्येष लुब्धः स्नेहस्य वशेन

१ शीतभू° E F G. २ भूतौ च E F G. ३ जाणामीति° E F G. ४ सुजानामि B C. ५ तंतिल्लः E F G. ६ त्वर्थमित्तजस्य E F G. ७ खत्तिवखड F. ८ कलट्ठो E F G. ९ खेरक्खान F G. १० कच °E F G. ११ जाई तुज्झ° E F G. १२ भेरी E F G. १३ दुर्मुख E F G. १४ स्मरिष्यति E F G.

ब्रूतः ॥२५॥ तथा यदीत्यादि । गन्धर्वानिरूपः ॥२६॥ अभयमित्यार्या । 'अभयं तव ददातु हरो विष्णुर्ब्रह्मा रविश्च चन्द्रश्च । हत्वा शत्रुपक्षं शुम्भनिशुम्भौ यथा देवी' ॥२७॥ चिरंजीविनः । पुत्रभ्रातृप्रभृतिभिः सहितः । तथार्यकस्यैव ॥

इति प्रवहणविपर्ययो नाम षष्ठोऽङ्कः ॥६॥

१ हरिश्च E F G.

## सप्तमोऽङ्कः ।

शुल्कं राजदेयम् ॥१॥ असत्कारमिति । अकृत्रिमं स्वभावत एवेत्यर्थः। (P. 303, L. 16) कर्मान्तो राजादीनां नियोगविशेषः । तत्संबन्धिनि धर्मे त्यक्तकाष्ठानि तैः प्रतिरुद्धगमनः ॥ २ ॥ सावशेषः किंचिदवशिष्टः । कोकिलपक्षे नरपतिपुरुषाः शाकुनिकाः । सनिगड इव सनिगडः बाल्यान्मन्दगमनः । यानेऽधिरूढोऽनवस्थितः । काकस्त्रीरक्षितकोकिल उपमानम् ॥ ३ ॥ तस्य चारुदत्तस्य महात्मनो गुणैः । तत्प्रवहणस्थस्य चन्दनकेन रक्षितत्वात् ॥ ४ ॥ मा कुप्य मा क्रोधं कुरु । गोड्डौ पादौ । अलघुर्मन्दः । (P. 308, L. 30) क्षेमेणेत्यादौ चारुदत्तार्यकयोरुत्तरोत्तरेणाष्टखण्डः श्लोकः ॥ ७ ॥ पालके राजनि रक्षक एव वा । रक्षणे महानभिनिवेश इत्यर्थः । श्रमणको भिक्षुः । अशकुनपरम्परा च चारुदत्तवसन्तसेनयोरनिष्टस्याग्रे भविष्यतः सूचनाय ॥

[इति] आर्यकापवाहनो नाम सप्तमः (मोऽङ्कः) ॥ ७ ॥

१ °दवशेषः E F G. २ गोडा E F G. ३ इत्यार्यका° E.

# अष्टमोऽङ्कः ।

(P. 311, L. 6) पञ्चजनेन्यादि । वैतालीछन्दसा द्वयम् । पञ्चेति । ञणसंयोगात्पञ्चेति पञ्चशब्दो गुरुः । छन्दोनुरोधात् । पञ्चजनेति णकारः (?) । अवलेकेति केवलः ककारः एकारश्च लघुः । अवसंवोत्यत्र सकारो न प्रविष्टः । अन्यथा अवस्संदोति स्यात् । शे णले इत्येकारद्वयेन्यतरो न गाहतीत्यत्र 'गा' इत्याकारस्य गुरुत्वम । पञ्चजनाः पञ्चेन्द्रियाणि । इस्तिअ अविद्याम् । गाम शरीरम् । लेक्खिदे रक्षितः । दुष्ट(ष्टय?)त्वविक्रुतिपातात् । चाण्डालोहंकारः । अबलोसहायः । अथवेन्द्रियादिविनाशात् । अवश्यं स नरः स्वर्गं गाहते ॥ २ ॥ 'शिरो मुंण्डितं तुण्डं मुंण्डितं चित्तं न मुंण्डितं न संयत्तीकृतम् । किं मुंण्डितं यस्य पुनश्चित्तं मुंण्डितं सुष्ठु साधु शिरस्तस्य मुण्डितम्' ॥ ३ ॥ (P. 311, L. 3) संयमधेति । गाथा क्वचिद् दृश्यते । 'संयच्छत निजकमुदरं नित्यं जागृत ध्यानपटहेन । विषमा इन्द्रियचौरा हरन्ति चिरसंचितं धर्मम्' ॥ १ ॥ लंठ्ठिअशालकाहेति । राष्ट्रियश्यालकत्वेन च पुनः संयोगः प्रकर्षख्यापनार्थः । अपूर्वौ द्वाविति वा न पुनरुक्त्ये(?) । हा अविद् माणहे इति विस्मयखेदे । नासिकां भित्त्वापवाहयति । तत्कुत्राहमशरणः शरणं गमिष्यामीति । (P. 313, L. 23) आपानकं पानगोष्ठी । पिबन्त्यस्मिन्नित्यधिकरणे ल्युट् । रक्तमूलकस्य शीर्षमिव मध्यमा किं पत्रलकभागमपनीय (?) मूलकमुपदर्शीकुर्वन्ति ॥ आनिर्जितमनात्मसात्कृतम् ॥ ४ ॥ णाविदे नापितः । सद्युपासको दृष्ट इत्याशयः । शलावकश्चार्वाकः । कोष्ठकमिष्टकादिरचितम् ॥ (P. 316, L. 48) यत्र तावत्कुकु(क्कु)राः शृगाला जलं पिबन्ति । हगे वि अहमपि । त्वमपि पुराणकुलित्थयूषसवर्णान्युग्रगन्धीनि चीवराणि प्रक्षालयसि । एकप्रहारवन्तं करोमि । एकप्रहारेण मारणोक्तावयं प्रयोगः ॥ अव्वापीति । गौरी ललाटे शोभा भवति । विरतस्य आत्मति-

---

१ 'संयमधेति...धर्मम्' before पञ्चजणे E F G. २ वैतालीय° F. ३ °वीति E F G. ४ ऽन्त· E F G. ५ इश्तिआ अविया E F G. ६ ग्रामः B C. ७ लक्खिदो E F G. ८ खण्डितम् B C. ९ om. BC. १० °मखण्डितम् BC. ११ लट्ठिअ E F G. १२ न om. E F G. १३ वा om. E. १४ पुनरुक्तम् B C D E F G. १५ °मशरणं E F G. १६ भागमनीय E F G. १७ णाविदे E F G. १८ आत्मनि E F G.

स्वरूपगतिः (?)। किणः संग्रपंजः । वर्णान्तरं यत्रकार्याकरणं न शोलितम्। वस्त्रान्तः स्कन्धे न निष्ठते। नपुंसकत्वं चिन्त्यम् (?)। निमूढमवकाशो यस्य तत्। संकोचितप्रदेशमित्यर्थः। परस्योच्छ्रायो विशालता। तस्मादुःस्वम ॥५॥ जातमात्र एव न प्रव्रजितः। तपस्विना वराकेण। हलकेन हृदयेन। न गतस्तर्हि न गमिष्यतीत्यर्थः। पुत्रक हृदय ई(ई?)यं अदस्त्वं (?) भट्टारके इउतिटिनि नम इति प्रस्तावान् (?)। विटोयमर्थ (?)। (P. 319, L. 81) काहलं पङ्कांविलम्। कर्दमभिति यावत्। विपर्यस्तं लोकविरुद्धम् ॥ ६ ॥ बहुकुसुमेत्यादि। पुष्पिताग्राच्छन्दः। रुक्खा वृक्षाः। ललन्ति विहरन्ति ॥ ८ ॥ स्त्रीभिरित्याद्यार्या ॥ ९ ॥ बुभुक्षितो न शक्यते पादाभ्यां गन्तुम्। (P. 3-2, L. 113)। णहमज्झेत्यादि। गाथा। 'नभोमध्यगतः सूर्यो दुःप्रेक्षः कुपितवानरसदृशः। भूमिर्दृढसंतप्ता हतपुत्रशतेव गान्धारी ॥' गान्धारी दुर्योधनादिपुत्रशतमाता ॥१०॥ शिलशीत्यादि। मालिन्या श्लोकः। 'शिरसि मम निलीनो भाव सूर्यस्य पादः शकुनिरगापि(वि)हङ्गा वृक्षशाखासु लीनाः। नरपुरुषमनुष्या उष्णदीर्घं श्वसन्तो गृहशरणनिषण्णा आतपं प्रेरयन्ति' ॥१२॥ हिङ्गुज्जेत्यादि। उपजातिछन्दसा। 'हिङ्गूज्ज्वलौ जीरकभद्रमुस्तकौ वचाया ग्रन्थिः सगुडा च शुण्ठी। एषा मया सेविता ग्रन्थयुक्तिः कथं नाहं मधुरस्वर' इति ॥१३॥ 'हिङ्गूज्ज्वलं दत्तमरीचचूर्णं व्याघारितं तैलघृतैर्मिश्रम्। भुक्तं मया पारभृतीयं मांसं कथं नाहं मधुरस्वर' इति ॥१४॥ पलिपातिस्तहेणोधिकमांसेन सह मया भुक्तं ततः कथं न मधुरस्वरोहम्। घनद्रवः कर्मणि यत् तः(?)। (P. 325, L. 156) किं न प्रेक्षते भावः। वृद्धसूकर इव। घुरुघुरेत्यव्यक्तशब्दानुकरणम्। अव्यक्तं शब्दं कुर्वाणो लक्ष्यते। पंगालखण्डेण प्राकारखण्डपथेनैव प्रवेशय। दैवगत्या तु न भग्नं प्रवहणमित्याह। कथं न भग्न इति। ण छिण्णा लज्जू ण मला गोणा इति वक्तव्ये शकारोक्तत्वात्क्रमणम्। मम गुरुर्गुरुरिति। अतिमान्यत्वपरम्। एवं त्वं प्रेक्षसे। सावरं महतकृत्वा (?)। पुलक्कलिलीए पुष्पतणीयः(?)। पुष्कलिनी ! एकार्यन्वयपच्छनीय इत्यनेन गुरुत्वमेव द्रढयति इति

---

१ किणं E F G. २ हलकेण E F G. ३ हदयं हयं E F G. ४ कं झटिति F G.; के झटिति E. ५ विशेषमर्थः E F G. ६ ता किं न प्रेक्षते E. तत् किं F G. ७ पागाल F G. ८ पुलक्कलणीए पुरस्करणीय- E F G. ९ एकार्थस्ते उपनीयं E.

प्राचीनटीका(?) । त्वं तावत्प्रवहणमग्रत आरोह । (P. 329, L. 189) अथवा तिष्ठ त्वम । तव पित्र्यं प्रवहणम् । अहं प्रवहणस्वामी । अग्रतः प्रवहणमधिरोहामि । यद्यप्यहमेवं ब्रवीमि तथापि तवैष आचारो-ऽधिरोह भट्टारक इति भणितुम् । प्रवहणे राक्षसी चौरो[1] वा प्रतिवसति । मूशे खज्जे इति विपरीतोक्तिः शकारवाक्यत्वात् । बुड्ढचेडे निन्दित-श्रोतः । वृद्धश्चोक्तेयांम्ह इत्यावाचकः । अकारणादिति पूर्वटीका (?) । कथं श्रृगाला उड्डीयन्ते । वायसा धावन्ति । तद्यावद्भावोक्षिभ्यां भक्ष्यते दन्तैः प्रेक्ष्य(क्ष्य)ते[2] । शकारवाक्यत्वाद्विपरीतोक्तिः । तावदहं पलायें[3] । [अ]वनतेत्यादि[4] । पुष्पिताग्रा । प्रयाम[5] इति लोंटो[6] मस(?) । गौरवमात्मनि बहुमानः ॥ १५ ॥ अन्यथा वापन्यात्(?) । लाघवनायाति कातरं विदुः-खं काकादने भीरुः (?) । वेशाभावेन[7] ॥ १७ ॥ नाम्पश इति न्यन्तात् । कर्मणि . लकारः । मोक्षयति(?) । ( P. 334, L. 241 ) भक्खिदे भक्षितः । विपरीतोक्तिः पूर्ववत् । अथवेत्यतलस्योक्तिः । शृगाला उड्डी-यन्तीत्यादि चतुष्टयमपक्रमम् । देवदाणं[8] बंभणाणं अग्गदो चलणेण गच्छामि । नहि नहि इति न्यायविरुद्धम् । तेन हि अपूर्वा श्रीः समासादिता । लोशावेदा[9] रोषिता । हे अन्तिके अम्बिके ॥ एसे पडामि इत्यादि । वसन्ततिलकम् । 'एष[10] पतामि चरणयोः विशा-लनेत्रे हस्ताञ्जलिं दशनखे तव शुद्धदन्ति । यत्तव मयापकृतं मदना-तुरेण तत्क्षमस्वेदानीं वरगात्रि तवास्मि दासः' ॥ १८ ॥ जे चुम्बिदे इत्युपजात्या[11] । 'ये चुम्बिदा[12] मातृकाम्बिकाभिर्गता[13] न देवानामपि ये प्रमाणम्[14] ( प्रणामम् ) । ते पातिताः पादतलेन मुण्डा वने शृगालेन यथा मृदङ्गाः' ॥ मातृका इति स्वार्थे कः । मुण्डा इति बहुवचनमप्यन-र्थकम् ॥१९॥ एदेहिं इत्यादि । वसन्ततिलकच्छन्दसा । सबिन्दोः पाक्षि-कगुरुत्वादेदेहिं इत्येहिमित्यनयोर्लघुत्वम्[15] । 'एताभ्यां तव दशनखोत्पल-मण्डलाभ्यां हस्ताभ्यां चाटुशतताडनलम्पटाभ्याम् । कर्षयामि । दे त्वाम् । वरतनुं मम(corr. निज A.) यानकात्केशेषु वालिदयितामिव यथा केशेषु

---

१ चोरो वा E F G. २ प्रेक्ष्यते E F G. ३ पलायिष्ये E. ४ अवनतेत्यादि E. ५ प्रयामे F G. ६ लांटो F G. ७ वेशभावेन G. ८ देवतानां ब्राह्मणानामग्रतश्चलनेन E F G. ९ लोशाइदा E F G. १० एशे E F G. ११ °जातिः E F G. १२ चुम्बिताः E F G. १३ गतेन देवानामपि F G. १४ पणामम् E F G. १५ गुरुत्वम् E F G.

जटायुराकृष्टवान्। पाठान्तरे हनूमानित्यर्थः। व्याहतोपमं चेदम् ॥ २० ॥ योसौ वञ्चनावमानेन तदा रोषाग्निः संधुक्षितः सोद्य एतस्याः पादप्रहारेणानेन प्रज्वलितः। ततः सांप्रतं मारयाम्येनाम् ॥ (P. 339, L. 301) यदीच्छसे इत्यादि। उपजातिच्छन्दसा। 'यदीच्छसि लम्बदशाविशालं प्रावारकं प्रच्छदं सूत्रशतैर्ग्रथितम्। मांसं च खादितुं तथा तुष्टिं कर्तुम्। चुहू चुह्व चुक्कु चुह्व चुहुत्ति इत्यनुकरणम् ॥ २२ ॥' निक्षिकेन्योन्यार्थावेतौ(?)। अवेशसदृशेति। अवेश्यापाटकोचितं कृत्तिमम्(?)। विविक्ते विजने। पटान्तापवारितां कृत्वा। अपध्वस्तो धिक्कृतः। (P. 342, L. 323) खण्डुआइं बाहुवलय(वि)शेषान्। पहिलिस्सं परिधास्ये। पीढके पीठम्। उवविसिस्सं उपवेक्ष्यामि। तंब्रहिहिसिधोग्रासि(?)। उच्छिस्टअं भोजनावशिष्टम्। प्रभवति मम भट्टारकः शरीरस्य न चारित्र्यस्य। परपिण्डभक्षको भूतः। पिट्टयतु ताडयतु मारयतु वा ॥ (P. 345, L. 359) येणम्हीत्यादि। गाथा। 'येनास्मि गर्भदासो विनिर्मितो भागधेयदोषेण। अधिकं च न क्रीणि(क्रे)ष्यामि तेनाहमकार्यं परिहरामि ॥ २५ ॥' कस्स भाआमि कस्य(स्मात्)विभेमि। अपि तु न कस्यापीत्यर्थः। ओवलिके अपवरके। गृहविशेष इत्यर्थः। परिकधं का तु इति प्रसिद्धम्(?) ॥ सर्वकालमित्याद्यर्थस्तु। 'सर्वकालं मया पुष्टो मांसेन च घृतेन च। अद्य कार्ये समुत्पन्ने जातो मे वैरिकः कथम्' ॥ वैरिको वैरी। स्वार्थे कः ॥ २८ ॥ लब्धो मयोपायः। दत्ता वृद्धखोडेन। शण्णा उपदेशः। एदं विटम्। भाव यत्त्वं मया भणितः सर्वः समस्(?)। कथमहं एवं बृहतो मल्लकप्रमाणात्। समुद्रप्रमाणादिति वक्तव्ये मो(मौ)र्ख्यान्मल्लकप्रमाणतया कुलमुपमिनोति। मल्लिका पत्रपुटिका तया कुलस्य महत्त्वं मौर्ख्यादुपमिनोतीति प्राचीनटीका। जातोकार्यं करोमि। एवमेतदङ्गीकारयितुं मया भणितम्। णासेण न्यासेन नासेन (superfluous) विनाशेन च। अथ कपटकापटिको ब्राह्मणः वृद्धषोडः कदाचिदपवारितस्तिष्ठति। शृगालः ॥ (P. 351, L. 418) सुवण्णकमित्युपजातिः। 'सुवर्णकं ददामि, प्रियं वदामि, पतामि शीर्षेण सवेष्टनेन सोष्णीषेण। तेन नूनं वेशूनी इति प्रसिद्धम् (?)। (written

१ मासं च F G. २ चुक्कति चुहू चुहु कृत्वा E F G. ३ पहिलिश्यं E F G. ४ पीढक पीठम् E F G. ५ उवविशिश्य E F G. ६ जेण E F G. ७ विहितो विनिर्मितो B C. ८ ओवलिए E F G. ९ परिकरं कच्छाण्ड इति E F G.

and erased A) तथापि मां नेच्छसि शुद्धदन्ति किं सेवका कष्टमया मनुष्याः' ॥ ३१ ॥ खल्चरितिनम् (?)। यत्नेन प्रतीकपाठो दृश्यते । तत्र इत्यादीत्यध्याहार्यं इत्यादि श्लोकद्वयं पठतीत्यर्थः॥ खलचरितेनेति निकृष्टेति च संबोधनद्वयम्। पलाशपदेन राक्षसोऽप्यभिधीयते । गालि देती(न्ती) साक्षेपं वदन्ती इति देशीनि चिरन्तनटीका ॥ किं शे शके इति । शक्करीविशेषच्छन्दसा श्लोकः ॥ 'किमसौ वालिपुत्रो महेन्द्रो रम्भापुत्रः कालनेमिः सुबन्धुः । रुद्रो राजा द्रोणपुत्रो जटायुश्चाणक्यो धा धुन्धुपुत्र-स्त्रिशङ्कुः' ॥ कालनेमिरसुरः। सुबन्धुः कश्चिद्विशेषः। धुन्धुरसुरभेदः ॥३४॥ (P. 353, L. 451) अथ वैतेऽपि त्वां रक्षन्ति ॥ चाणक्येनेत्याद्यर्थस्तु। 'चाणक्येन यथा सीता मारिता भारते युगे । भारतावच्छिन्ने समये । एवं त्वां मारयिष्यामि जटायुरिव द्रौपदी(दीं) ॥३५॥ ऊर्ध्वमुच्चैस्तराम । शुमल स्मर । मल म्रियस्व ॥ एदं दोशकलण्डिअमित्यादि ।शार्दूलेन श्लोकद्वयम् । 'एतां दोपकरडिकामविनयस्यावासभूतां खलां दुर्जनस्व-भावाम् । रक्तां तस्य चारुदत्तस्य किलागतस्य रमणे संभोगनिमित्तं कालागतामागताम् । कालां कृष्णाम् । किमपि समुदाहरामि निजकं बाह्वोः शूरत्वम् । निश्वासापि म्रियते अम्बा सुमृता सीता यथा भारते' ॥३६॥ 'इच्छन्तं मां नेच्छसीति गणिका रोषेण मया मारिता शून्ये पुष्पकर-ण्डके इति सहसा पाशेनोत्त्रासिता । मया रोषेण मारिता [इति] विपर्य-स्य योजना । सेवाधिक्विनः भ्राता मम पिता माता च सा द्रौपदी । पाठा-न्तरे तु प्रमातः पतिः या सा (?) पश्यति नेदृशं व्यवसितं पुत्रस्य शूर-त्वम् ॥३७॥ ता ततः । अपसृत्य तिष्ठामि । पाप इति वृक्षं संबोधयति । अनिमित्तमसंकुलम् । पिठ्ठदो पृष्ठतः । दक्षिणादिग्गतत्वं मृतत्वमपि । (P. 358, L. 503) शपे भावस्य शीर्षमात्मीयाभ्यां पादाभ्याम् । संस्थापय हृदयम् । एषा मया मारिता । यदि मम न प्रत्येषि पराक्रमे ततः प्रेक्षस्व राष्ट्रिक(य)श्यालस्य शूरत्वम् । उवलदे उपरतः । हे पाप हे पापसंकल्प ॥ [अत्थं शतमिति] । अर्थं शतं ददामि सुवर्णकं ते कार्षापणं ददामि सबोडिकं ते । बोडी विंशतिकपर्दका (कः?) गौडे प्रसिद्धः। तच्चतुष्टयं पणः। ते षो-डश कार्षापणः । कहावण इत्येके । एष दोषस्थानं पराक्रमो मे साधारणो भवतु मनुष्याणाम्' ॥ ( P. 362, L. 554 ) आउत्तश्श भगिनीपतेः ।

१ धुन्धुमार· E F G. २ न रक्षन्ति E F G. ३ द्रौपदीम E F G. ४ समल E F G. ५ मरणे (?) G.

व्यवहार(रं)विचारम। निधनं गच्छन्तीति(न्यामिति) ॥४३॥ चेटं प्रति ब्रूते। यस्यां वेलायामलंकरोमीति अलंकरोमीति वक्तव्ये इति पुरातनटीका(?)। पासादवालग्गपडोलिआए। प्रासादो (दउ) परिगृहविशेष इति पश्चाद्व्याख्यातम्। (P. 364, L. 572) अत्तपलित्ताणे आत्मरक्षार्थम। निगलपूरितं अतिगुरुबन्धनोक्तिरियम। एवं मन्त्रोभिरक्षितो भवति। प्रावारेण प्रच्छदपटेन। णामंकिदे नामाङ्कितः। वसन्तसेनाया इति शकारस्य वेति लिखिताक्षरः। शुक्खपण्णउडेण शुष्कपर्णपुटेन। तथा कृत्वा पूर्वोक्तेन स्थगितां कृत्वेत्यर्थः। अन्थस्स अर्थस्येत्यर्थः[1] [चारुदत्तेति]। 'चारुदत्तविनाशाय करोमि कपटं नवम्। नगर्यां विशुद्धायां पशुघातमिव दारुणम्'॥४४॥ अविदमादिके सभयविस्मये। नत्थिय नासारज्ज्वा वाधितः (?)। कदवेले कृतवैरः॥ एशे म्हि इत्यादि। गाथा। 'एषोहं त्वरितत्वरितो लङ्कानगर्यां गगने गच्छन्। भूमौ पाताले हनूमच्छिखरादिव महेन्द्रः'॥ महेन्द्रशिखरादिव हनूमानिति वक्तव्ये शकारोक्तत्वाद्विपरीतम्। 'अंअट्ट' इति पाठे अट्टकशिखरादित्यर्थः। व्याहतोपममिदं तावत्॥४५॥ (P. 367, L. 597) तैथेति प्रसार्थे। भवतु। धर्माक्षराणि। संग्जेण स्वर्गेण। यावत्तस्या वसन्तसेनायाः। द्यूतकराभ्यां सकाशाद्दशसुवर्णानां कृते निःक्रीतः। तदो पहुदि निःक्रयप्रभृति। तया क्रीतमात्मानमवगच्छामि॥ वादादवेति। गाथा। 'वातातपेन तप्तानि चीवरतोयेन तिम्मितत्वमार्द्रत्वं प्राप्तानि। तिम्मिता इति भावप्रधानो निर्देशः। एतानि विस्तीर्णं प्राप्तं प्रसारितं यत्र (?) तानि मन्ये पत्राण्येव विजृम्भन्ते'॥४६॥ (P. 368, L. 609) शुद्धेति। शुद्धं केवलं कटकादि न स्वभाव एवालंकरणं यत्र सः। विंदिये द्वितीयः। शे ज्जेव्व स एव। से अस्याः। वरं मनागिष्टम्। ओ(उ)लम्बिअ अवलम्ब्य। तत्र समाश्वस्तमना भूत्वा।

[इति] मोलिनो नामाष्टमः (मोङ्कः)॥ ८॥

१ णासिच्छिय वाहिदे नासारज्ज्वा विद्ध E F G. २ अट्टअ इति° E F G. ३ तथा कृत्वा ° E F G. ४ सग्गेण E F G. ५ दुदिये E F G. ६ वसन्तसेनामोटनो° E F G.

# नवमोऽङ्कः ।

अधिकरणे न्यायविवादविषये नियुक्तत्वात्तदेषामस्ति । 'अत इनि ठनाविति' ठन् । अपवादो दोषवाच्यंति यावत् (Erased A) ॥ (P. 373, L. 13) ह्लादिदमिति । प्रहर्षिणीछन्दसा । जलेहिं युवदीहिं सुविहिदएहिं इत्यत्र सानुस्वाराणामप्यन्त्याक्षराणां लाघवम् । छन्दोनुरोधात् । 'स्नातोहं सलिलजलैः स्वच्छैः । पाठान्तरे 'पानीयैः' । नारीभिर्युवतीभिः स्त्रीभिः सह उद्याने उपवनकानने निषण्ण इति विपर्यस्य योजना । गन्धर्व इव सुविहितैरङ्गकैर्लक्षितः । 'गन्धव्वेहिं' इति पाठे तृतीया प्रथमार्थे । रूपकं च (?) । पौनरुक्त्यादि शकारोक्तत्वात् ॥१॥ खणेनेत्युपेन्द्रवज्रया' । हगे इत्यत्र एकारस्य लघुत्वम् ' । छन्दोनुरोधात् । एतच्छत्रकमुष्टिकं पाचालबन्ध इत्येके (?) । 'क्षणेन ग्रन्थिः । पाठान्तरे 'घृष्टिका' । क्षणेन ग्रन्थिः क्षणजूलिका मे क्षणेन बालाः क्षणकुन्तला वा । क्षणेन मुक्ताः क्षणमूर्ध्वचूडाः ज्यनिकाज्वलिकयोर्विशेषः (?) । चित्रो विचित्रो । हगे अहम् । राजश्यालः । 'चित्ते ण चित्तो' इति पाठे चित्रं न चित्रं यतोहं राजश्याल इति व्याख्येयम् । राजश्यालत्वेन मयि सर्वं संभाव्यत इति भावः ॥२॥ (P. 374, L. 24) किमिणाचिट्ठिअं [कृपणचेष्टितम्] । आः क्रोधे । लाआणं राजानम् । आउत्तं भगिनीपतिम् । पुनर्भगिनीपतिमिति पुनरुक्तम् । अत्तिकां भगिनीं ज्येष्ठाम् । (P. 382, L. 95) युष्माकं सुखं ददामि न ददामि । शकारोक्तेर्व्याकुलता ॥ लाअश्शशुलेत्यादि । गाथा । 'राजश्वशुरो मम पिता राजा तातस्य भवति जामाता । राजश्यालकः खल्वहं ममापि भगिनीपती राजा' । एतेन यदुक्तं भवति तदाह । अपराद्धस्यापि न मे किमपि करिष्यति । क्रीडितुं रक्षितुम् । जीर्णेति विशेषणं विजनत्वख्यापनार्थम् । तत्र च प्रेक्षितुम् । तत्रेति करणाधिकरणत्वेन विवक्षितत्वात्तादित्येवार्थः (?) । तत्र दैवयोगेन पश्यामि न वेत्यर्थः । (P. 385, L. 126) न मयेति तस्य बोध्यत्वेन व्यवहारपदम् । परिशून्यया ग्रीवया । बाहुपाशेन मारितेति शून्यैवाति (?) । अर्थनिमित्तमिति ज्ञातुम् । मना-

---

१ दोषवागिति E F G. २ जुवदीहिं E F G. ३ सुविहिद° E F G. ४ °न्ताक्षराणां F. ५ परिवृत° B C., ६ स्वहितै B C. ७ छत्राकमुष्टिकाकारबन्ध इत्येके E F G. ८ जूलिकाचूलिकयोः E F G. ९ मे न E F G.

कथमवमर्ष्य मां मुञ्चयन्ति ?। अनेनैव यमन्त्रसेना मारिणेति मन्त्रनाकारः । शुभेनापि उत्तराचरणेन मनोऽन्यत्र (न आत्म)व विनाशिनः। (P. 388, L. 153) मित्रवरत्रे मित्रगृहम । प्रस्तावाच्चात्कदृत्तस्य गृहम । अर्थो न पुनरधिकरणिकानामिति देश्यापनिरूपतया ज्ञानेन शिष्टानां लज्जाकरत्वादिति भावः । विनयदृत्तस्य नमा । घनदृत्तेति कायस्थसंबोधनम । स्वैरं स्वच्छन्दम । असंभ्रान्तं संभ्रमशून्यम । अवस्थामीदृशीं दशाम ॥८॥ मार्गगत आर्यकः ॥९॥ शास्तु वास्तु शब्दे स्वादिगात्मनेपदी । रेहादेरात्मनेपदानित्यत्वाच्च परस्मैपदम । चरास्तु शब्द इति तुदादिस्तालव्यान्तः। आत्मनेपदी (?) ॥१०॥ आर्द्रनमायां हि भुवि चरणस्खलनं युज्यते ॥१३॥ जृम्भितो दीर्घोन्मानोतिस्थल (?) । चिन्तासक्तः चिन्तामार्गे निमग्ना ( corr. सक्ता A ) एव मन्त्रिणः सलिलानि यत्र । दूत आह्वायकः गतागतनियुक्तः । चीरश्च गृहपुरुषः । नागश्चेस्तनारकार्थे (?)। नाना बहुप्रकाराः शब्दं कुर्वन्तो ये कङ्कपक्षिणस्तैः रचितं व्याप्तम । अशुभसूचकत्वेन तेषां समवधानमुक्तम् । अधिपक्षे तु व्यक्तमेव। 'पक्ष' इति पाठे तेषां पक्षाणां रचितम। नानाकमणिकया निर्मितभेदा ब्वेत्यर्थः। कङ्को मांसादः पक्षिविशेषः ॥१४॥ घोणा उन्नता यत्र घोणया वा उन्नतमुन्नतम् । अपाङ्गो विशालो यत्र । एतेन नेत्रविशालत्वमुक्तम ॥ १६ ॥ (P. 396, L. 252) प्रसक्त(क्तिः) प्रणयो रागानुबन्धः प्रीतिर्वेति । प्रीतिः स्नेहमात्रम् ॥ लज्जाए इत्यादि । वैतालीयम । एदं इति सविन्दुर्विकारो लघुः'। छन्दोनुरोधात् । 'लज्जया भीरुकतया च लक्षित.। रर्गामित्यर्थात् । किमर्थमलीके स्त्रीवधादौ दरिद्रभावरणं निगूही(गृहि)तुम (?)। कुत एवमित्याह । स्वयं भारयित्वार्थनिमित्तमिदानीं गृह्णाति न नष्टके'। अपि तु नष्ट एव । नष्टकं' इत्यपि पाठः (?) ॥ १७ ॥ छलपरिहारार्थं चिरं समीक्ष्यत इत्याशङ्क्याह । छलमत्र नेति ॥१८॥ पक्षः केशविशेषः (?) । भृशमत्यर्थम् । अन्तरा एतद्वचनमध्ये । मेघजलसिक्तनाशाखे जलबिन्दुर्यद्युत इति कर्मवशामेकं मिथ्यात्मसूचकमिति'(?)॥१९॥ वेदार्थानित्यादि । अतिधृतिजातिः । वेदार्थविरोधिनो वचने जिह्वापातो युज्यते । अनपेक्षितानि । अपेक्षा योग्यतामप्यपेक्षा तेषां न कृतेत्यर्थः (?) ॥२१॥ दुष्टात्मेति । प्रहर्षिण्या श्लोकः ॥२७॥ पादप्रहारेति । गाथा। 'पादप्रहारेण परिभव आक्रमः स एव विमानना तया बद्धगुरुकवैरस्यं ।

१ रैकारो E F G. २ भीरुतया वा E F G.

अनुशोचमानस्येयं कथमपि रात्रिः प्रभातापगता मम' ॥२३॥ (P. 404, L. 349) सावण्णेहिं श्वापदैः। [ साबसेसेहिं ] सावशेषाभ्याम्। 'अहो सुसन्ना व्यवहारनीतय' इति सामान्यविशेषभावेन विशेषणम ॥२५॥ छिद्रेषु व्यसनेषु ॥२६॥ ( P. 410, L. 428) पुरस्थापनं पुरावस्थितिः। पुरनिर्माणमिति यावत् । कूपय्यूपेति लोकोक्तिः । कृतजनदोषश्चासौ भण्डश्चेति विशेषणसमासः। मए मम। शिले शिरः। ( P. 414, L. 471) ओवन्धेइ अवबध्नाति। कृतहस्ततया शिल्पकौशलेन ॥ ३४ ॥ एवं आं इदं एवमिदं स्मर्यते ॥ सच्चेनत्यादि । वैतालीयम। ' सत्येन सुखं खलु लभ्यते सत्यालापे सत्यमालापयतीति क्विपि सत्यालापः। तत्र न भवति पापकम्। सत्यमिति द्वे [अ]व्यक्षरे इति स्वरूपोक्तिः। न भवति पापस्य निमित्तमिति यस्मादिति प्राचीनटीका । अलीये ण(?)अलीकं कर्तुं। सत्यापेक्षया बह्वक्षरमपीत्यर्थः। सत्यं पूर्वोक्तस्वरूपत्वाद्व्यक्षरमपि कर्मभूतम्। मा निगूहति मा संवृणोति ॥३५॥ अतिकापटिकतया निगूहसि। कशा अश्वताडिनी ॥३६॥ खीरे(?)व रत्नम। (P. 419, L. 522) कडं कृतम्। द्रुपगादीनां श्वेतकाकीयत इवार्थे च्छः (?)। उत्पातकल्पै-रित्यर्थः ॥४१॥ विषसलिलेति । विषादिपरीक्षाप्रार्थितेन्त्रिये[1]। विचारे। ककचं दातव्यम्। अर्हे तव्यः (?)। यदि मयोक्तं क्रियते तदा ककच-दानमर्हमेवेति भावः (?)। अथ विचारनिरपेक्षं नृपतिं हृदि स्वीकृत्य वदति ॥४३॥

[इति] व्यवहारो नाम नवमः [अङ्कः] ॥ ९ ॥

१ मं विचारे E.

# दशमोऽङ्कः ।

दिण्णकल्वीरेत्यादि । गाथा । 'दत्तकरवीरमालो गृहीत आवाभ्यां वध्यपुरुषाभ्याम। दीप इव मन्दस्नेहः स्तोकं स्तोकं क्षयं याति' ॥२॥ पितृवनं श्मशानम् । तर्कयन्ति उत्प्रेक्षन्ते ॥३॥ किं पेक्खधेति । गाथा । 'किं प्रेक्ष्यथ(?) छेद्यमानं सत्पुरुषं कालपरशुधाराभिः। सुजनशकुनाधिवासं सज्जनपुरुषद्रुममेतं' ॥४॥ पिष्टचूर्णं श्यामतण्डुलचूर्णम् । पशुर्देवतार्थे छागादिः ॥५॥ मदुपं. पदर्पितं यथास्यादेवं उद्गतबाष्पाः । मदिति पञ्चम्येकवचनान्तम् । मदुपं. तमीदृशमवस्थान्तरं दृष्ट्वेति वार्थः ॥६॥ इन्द्रेत्यादि । गाथा । 'इन्द्रः प्रवास्यमानो । यद्वा । प्रवाह्यमानो विवर्धमानः । गोप्रसवो निपतनं च ताराणाम् । सत्पुरुषस्य । प्राणविपत्तिर्नाशः। चत्वार इमे न द्रष्टव्याः' ॥७॥ हण्डे इति नीचसंबोधने । णअली इत्यादि । गाथा । 'नगरीप्रधानभूते वध्यमाने । कृतान्ताज्ञया । किं रोदित्यन्तरीक्षमुतानभ्रे पतति वज्रम् ॥' नगरीप्रधानवधो वज्रं इवेत्युत्प्रेक्षा ॥८॥ ण[अ]लुअदीत्यादि। गाथा। 'न च रोदित्यन्तरिक्षं नैवानभ्रं च पतति वज्रम् । स्त्रीसमूहमेघान्निपतति । नयनाम्बु कर्तृ । धाराभिः ॥९॥ वज्झमीत्याद्यार्या । 'वध्ये नीयमाने जनस्य सर्वस्य रुदतः । नयनसलिलैः सिक्ते सति रथ्या(थ्या)तः नोन्नमति रेणुः' ॥१०॥ गोमिन् ग्राहे स्वामिनः (?) । (P. 428, L. 48) शलोत्ते सलोत्रः । उद्विज्य उद्वेगं कृत्वा ॥ एश इत्यादि । गाथाद्वयम् । 'एष गुणरत्ननिधिः सज्जनदुःखानामुत्तरणसेतुः । असुवर्णं मण्डनमपनीयतेऽद्य नगरीतः' ॥१४॥ सर्वः खलु भवति लोकः लोकस्य सुखसंस्थितस्य कार्ये । तच्चिन्तः चिन्तापरः । उपयुक्त इत्यर्थः । विनिपतितानां नगराणा (?) प्रियकारी दुर्लभो भवति' ॥१५॥ (P. 432, L. 80) हत्थादो हस्तात् । हा आवुक पितः । निरुपपदेन आर्य इत्यादिविशेषणशून्येन ॥ अब्भुदये इत्यादि । गाथा । 'अभ्युदये चावसाने च तथैव रात्रिंदिवमहतमार्गा । अव्याहतप्रसिद्धा

१ तत्किं न कुरुत कारणनववधबन्धजनने निपुणाः । अचिरेण शिरच्छेदनशूलारोपेषु कुशला ॥ E F G. २ तिल° E F G. ३ पुराणभूते B C D. ४ इशे E F G. ५ °त्तारण° E F G. ६ नराणां E F G.

इत्यर्थः । उद्दामेव किशोरी नियतिर्दै(र्दै)वं न्वतु प्रत्येयितुं यान्ति' ॥२०॥ शुष्केत्यादि । गाथा । अत्र द्वितीयगणश्चतुर्थपञ्चमगणौ पञ्चमात्रौ (?) । शुष्काणि प्रदेशा अङ्गानि । अ अस्य । किं विनमितमस्तकेन अवनतशिरसा किं कर्तव्यम् । अस्य स्त्री [ह]णस्य लज्जयानतशिरसोऽपि न कुर्वन्त्यर्थः । कुत एवमित्यत आह । राहुगृहीत इव चन्द्रो वन्दनीयो जनपदस्य' ॥ किंशब्द आवर्त्योभयोर्ध्यर्योऽज्य इत्याहुः । आघातं अधिकरणवधस्थानम् । वाल्कं(?) । 'स(श)मिता यज्ञे' [५।४।५४] इति पाणिनेः सूत्रम् । शमिनरि भवं शामित्रम् । यज्ञे पशुघातस्थानम् । आलब्धोऽभिमन्त्रितः । मारित इत्येके ॥२१॥ ण हु अम्हे इत्यादि । गाथा । 'न [खलु] वयं चाण्डालाश्चण्डालकुले जातपूर्वा अपि । येऽभिभवन्ति साधुं ते पापास्ते च चाण्डालाः' ॥२२॥ अमी हि त्वा देवा दावामर्धमद्यावगच्छामोत्यादि सर्वः स्वाधीन इत्यर्थः(?) । किं पेक्खधेति । गाथा । किं प्रेक्षध्वं सत्पुरुषभयशोकशोन नष्टजीवनम् । कूपे खण्डितपाशं काञ्चनकलशमिव मज्जन्तम्' ॥२४॥ कुप्यन्तं (corr. लिप्यन्तं A.) क्षिप्यमान(ण)म । 'जीवाशं' जीवप्रत्याशं' इत्यपि पाठान्तरं । इदमपि यत्र फलमयशः। (P. 439, L. 152) अक्कन्दामि विरोमि । वालग्गपदोलिआए वालाग्रप्रतोलीतः । प्रासादभागादित्यर्थः । मंसेणेत्यादि । उपजातिछन्दः । 'मांसेन तिक्ताम्लिकेण तिक्ताम्लेन नवं शाकेन सूपेन समत्स्यकेन । भुक्तं मयात्मनो गृहे शालेर्भक्तेन गुडोदनेन' ॥२९॥ भिन्नकांस्यवत्खङ्कणाए कटुस्वरया विकृतध्वन्याश्चाण्डालवाचः स्वरसंयोगः । यथाचैव उत्खालिन उद्गतो वध्यडिण्डिमशब्दः श्रूयते पटहानां च शब्दस्तथा तर्कये । यः शत्रुं व्यापाद्यमानं प्रेक्षते तस्याक्षिणी शीतलायेते । विषकण्डिकामध्यप्रविष्टेन च कीटकेन । (P. 443, L. 195) ही विस्मये । कथमित्यर्थः । एवड्ढे एतावान् महान् । यस्यां वेलायां अस्मादृशो महान्वरमनुष्यो वध्यं वधस्थानं नीयते तस्यां वेलायां कीदृग्भवेत् । नववलद्दके विअ नववृषभ इव । मण्डितः । वृषभशब्दः संभवन्नपि शकारभाषात्वात्त्यक्तः । (P. 444, L. 201) कडे भवोआदि कृतो भविष्यति ॥ ओशलधेति । गाथा । 'उत्सर्पत ददत मार्गं द्वारं पिदधत भवत । तूष्णीकाः मौनिनः । अविनय-

---

१ स्त्रीहणस्य E F G. २ न वन्दनीयो E F G. ३ ग्रन्थिका E F G. ४ कथमिवेत्यर्थः E F G. ५ प्रवरमनुष्यो E F G.

तीक्ष्णविषाणो वृषभ इव गर्जति' ॥ ३० ॥ पुत्तका पुत्रक । न हि स्त्रीकुसमन्द (?) शोहं स्त्रियं मारयामि । एष तु समाकार्यमाक्षो । किदवेले कृतवैरः । विहवे सामर्थ्यम । तुवलादि त्वरसे ॥ किं ओक्कशर्याद्रि । गाथा । 'किमथहमासि हे ब्रक (?) पुरुषं दृष्ट्वा देवपर्वस्तम । विदितं न त्वमन्यो (त्यो?) धन हे दुर्जन कृतान्तदर्शपुमार्गाहा॥ ।' (P. 451, L. 264) पराणेमि परानयामि व्यावर्तयामि । एत्ताए एतादृता एदमेवे- त्यर्थः । इदानीमित्येके । सङ्कलेन वध्यपटहवादनदण्डेन । तालिय ताड- यित्वा । वज्झपालिआ वधपर्यायः । अरे तव । वीरक इति चण्डालनाम । वन्ध्यं म्वण्डेदि वन्धमाछिद्य प्रसरति । चारुदत्ताकं अरे मारयितुं तव मया समर्पितः । त्वं मम कर्तव्यमित्यर्थः(?) । वयं चण्डालाः । नैवं कृते- स्माकं दोष इति भावः । विजन्ये(?)विज्ञापयामि । शुमलिद्व्वं स्मर्तव्यम । [ प्रभवतीति ] । प्रबलपुरुषा नयानिर्णेतारः । तेषां वाक्यैर्भाग्यदोषाद्दृषि- तस्य यदि मे धर्मः प्रभवति तदा सैव वसन्तसेनैव स्वस्वभावेनात्मरू- पतया व्यपनयतु ॥३४॥ गन्तव्यम । तत्रैव मया मर्तव्यमित्यर्थः । अट्ठाणं वृद्धस्थानम । जीर्णस्थानरूपमेव(?) । उपासिके पडिपालेहि प्रतिपालय । (P. 463, L. 275) क्षणं तिष्ठतोनि(तिष्ठेति) मारणव्यापारपरोक्तिरि- यम ॥ आअड्ढिए इत्युद्गीतिः ॥ 'आकर्षितः सरोषं । मुष्टौ त्सरौ । मुष्टिना गृहीतोपि । धरण्यां किमिति निपतितो दारुणकोशनिसन्निभः खड्गः' ॥३७॥ सह्यवासिनि । सह्यः पर्वतविशेषः । तत्रस्थां दुर्गां स्वकुल- देवतां संबोधयति ॥ का उणेति । गाथा ॥ 'का पुनस्त्वरितमंसे पतता चिकुरभारेण । मामिति व्याहरन्ती उत्थितहस्ता इत एति' ॥ 'उच्छिअ- अ(ह)त्था' इति पाठे उच्छ्रितहस्तेत्यर्थः ॥३८॥ विद्या इतरविविक्तात्मज्ञा- नम ॥४२॥ वरस्य जामातुरिव ॥४४॥ केणापि । न एतद्व्यतिरिक्तेनान्ये- नेत्यर्थः । न प्रत्यभिजानाति । [जयतीति] । जयति सर्वोत्कर्षेण वर्धताम् (वर्तते) । तदनु जयति आत्मसात्करोति । शेषभूतां पुष्पदामाद्यमानाम् । गुणभूतामिति केचित् ॥ ४६ ॥ (P. 470, L. 457) निर्वेदः शान्तिः वैषयिकेच्छानिवृत्तिः । किमेतत्किमेतदिति शत्रूणां क्रूरः कलकलः । यज्ञवाटो यज्ञस्थानम् । एतच्चापरिच्छिन्नजनसंमर्देन प्रमादस्थानम् । तेन सर्वोत्कटवध इति सूचयितुम् ॥५१॥ पुस्तकान्तरपाठदर्शनव्याख्या ।

---

१ पुंसामारोहेति पाठान्तरम् F G. * A breaks here. २ सर्वसुमेक्ष० F G.

(P. 494, L. 616) । अहमेवेति । पर्यवस्थापनमाचार इति कृत्वा स्वयमेव क्षमोऽहमिति भावः । दिउणतले द्विगुणतरः। अचलां पृथ्वीम् ॥५९॥

मृच्छकटिकविवृतिरियं गणपतिचित्तान्तपारपर्यन्ता ।
पृथ्वीधरकृतिरुपनयतु संतोषं कृतिसमुद्रे ॥ १ ॥

इति दशमोऽङ्कः ॥ १० ॥